लक्षणमस्त्विति वाच्यम्, 'अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।' इति वक्ष्यमाणास्फुटव्यङ्ग्याख्यमध्यमकाव्येऽव्याप्तेः— इति चेन्न; उपधेयसंकरेऽप्युपाधेरसंकरादित्येके। वाच्यानतिशायित्वं वक्ष्यमाणागूढत्वाद्यन्यतमत्वमेव विवक्षितमित्यप्यन्ये ॥ यथा 'क्षणाद्वाथ—' इत्यत्र 'यामः परं परमावधिः, ततः परं प्राणान्धारयितुं न शक्नोमि' इति व्यङ्ग्यं प्रिययात्रानिवारणरूपवाच्यसिद्धिं करोतीति वाच्याङ्गत्वाद्वाच्यानतिशायि ॥ यथा वा— 'ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् । पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥'—ग्रामस्य तरुणमित्यनेन ग्रामेऽयमेक एव तरुणः, ततश्च बहुवल्लभत्वेन दुर्लभत्वं व्यज्यते । तरुणमिति कामकलाकौशलम्, तरुण्या इति रतावुत्कण्ठा, नववञ्जुलेत्यादिनोद्दीपनविभावः, मञ्जर्याः करग्रहणयोग्यताप्रदर्शनेन वञ्जुललताया भूतलस्पर्शितया वञ्जुललतामूलस्य स्वैरोपभोगयोग्यता, पश्यन्त्या इति वर्तमानत्वव्यपदेशाद्दर्शनसमसमयमेव मुखमालिन्यप्रतीतेरतिशयोक्तिः, मुहुरित्यौत्सुक्यं जनताभयेन दर्शनस्य विच्छिद्य विच्छिद्य करणं च, नितरामिति स्वापराधप्रकर्षः, मलिनेत्यनुभावश्च व्यज्यते । अत्र 'वञ्जुललतागृहे दत्तसंकेतया मया न गतम्, अनेन तु तत्र गत्वा स्वगमनसूचनाय वञ्जुलमञ्जरीमादाय मदुपाल-

म्भाय पुनरागतम्, अहो ममानौचित्यम्' इति नायिकानौचित्यं व्यङ्ग्यम्। तच्च रसभङ्गहेतुत्वान्न चमत्कारकारि। वाच्यं तु मुखच्छायामालिन्यं विप्रलम्भव्यञ्जकत्वाच्चमत्कारकारि यद्यपि व्यङ्ग्यमप्यनौचित्यमनुरणनन्यायेन परम्परया विप्रलम्भव्यञ्जकम्, तथापि तस्यानुभावरूपवाच्यमुखप्रेक्षितया व्यञ्जकत्वम्; वाच्यं त्वनुभावरूपतया साक्षादेव व्यञ्जकमिति व्यङ्ग्यस्यापराङ्गतैव, यन्नैरपेक्ष्येण व्यञ्जकं तन्मुखप्रेक्षित्वस्यैवापराङ्गत्वेन वक्ष्यमाणत्वात्। न चात्र विप्रलम्भस्य प्राधान्येन व्यङ्ग्यत्वाद्ध्वनित्वे कथं गुणीभूतव्यङ्ग्यतेति वाच्यम्, विप्रलम्भव्यञ्जनापेक्षया ध्वनित्वेऽप्यनौचित्यव्यञ्जनापेक्षया गुणीभूतव्यङ्ग्यत्वादित्याहुः ॥ ७ ॥

अथाधमं काव्यं लक्षयति—

**अव्यङ्ग्यमपि यच्चारु तत्काव्यमधमं स्मृतम्।**
**शब्दचित्रं चार्थचित्रमिति तद्द्विविधं विदुः।**

**उत्तालतालहिन्तालकृतमालतमालकम्।**
**विपिनं तत्समालोक्य नन्दनस्यास्मरद्विभुः॥**

चारु गुणालंकारसंबन्धनिबन्धनचमत्कारकारकम्, तदुभयसंबन्धमात्रस्य सकलसाधारण्यात्। एतच्च ये शब्दार्थनिष्ठ

गुणं मन्यन्ते तन्मतेन बोध्यम्, गुणानां रसनिष्ठत्वे गुणोत्कर्षेण रसोत्कर्षावश्यंभावादव्यङ्ग्यत्वासंभवात्। यद्वा, चारु गुणाभिव्यञ्जकवर्णालंकारमात्रनिबन्धनचमत्कारकारकमित्यर्थः। वस्तुतस्तु, अव्यङ्ग्यपदमस्फुटव्यङ्ग्यपरम्, 'अनुदरा कन्या' इत्यादावीषदर्थेऽपि नञः संभवात्। अतो मतद्वयेऽप्यविरोधः। युक्तं च तथा, व्यङ्ग्याभावे काव्यत्वहानेः। न चैवमस्फुटाख्यगुणीभूतव्यङ्ग्येऽतिव्याप्तिरिति वाच्यम्, उपधेयसंकरेऽप्युपाधेरसंकरादित्याहुः। अविवक्षितव्यङ्ग्यत्वमव्यङ्ग्यत्वम्, अतो नातिव्याप्तिरित्यप्याहुः तच्चाधमकाव्यं शब्दचित्रमर्थचित्रं चेति द्विविधं विदुः। इदं च स्वरूपकथनमात्रपरं न तु विभागपरम्, षष्ठोल्लासे विभागस्य दर्शयिष्यमाणत्वादिति ध्येयम्॥ यथा 'उत्तालताल—' इत्यत्र पूर्वार्धे शब्दचित्रमुत्तरार्धे च स्मरणालंकारनिबन्धनार्थचित्रम्॥ यथा वा— 'स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्भश्छटामूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः। भिन्द्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुमद्रोहोद्रेकमयोर्मिमेदुरमदा मन्दाकिनी मन्दताम्॥'— स्वच्छन्दं वात्याद्युपाधिमन्तरेणैवोच्चलन्त्यो या अच्छा निर्मलाः कच्छकुहरेषु तटसमीपगर्तेषु च्छातेतराः कृशेतरा अम्भश्छटा जलसमूहास्ताभिर्मूर्च्छन्मोहा विगलदज्ञाना ये महर्षयस्तैर्हर्षेण विहिताः

स्नानादय आह्निका यस्यां सा तथा, उद्यन्नुद्गच्छन्नुदार उद्भटो दर्दुरो मण्डूको यासु तासु दरीषु तटकंदरासु दीर्घा अदरिद्रा अस्तोका ये द्रुमास्तेषां द्रोहोद्रेक उन्मूलनातिशयस्तत्प्रचुराभिरूर्मिभिर्मेदुरोऽधिको मदो यस्याः सा मन्दाकिनी गङ्गा वो मन्दतामह्नाय झटिति भिन्द्यात्– इत्यत्र शब्दगुणेनौजसा शब्दालंकारेणानुप्रासादिना च युक्तत्वाच्चारुत्वम्। इदं च शब्दचित्रस्योदाहरणम्। अर्थचित्रं यथा वा— 'विनिर्गतं मानदमात्ममन्दिराद्भवत्युपश्रुत्य यदृच्छयापि यम्। ससंभ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियामरावती ॥'– मानदं शत्रूणां मानखण्डकं यं हयग्रीवं यदृच्छया लीलया, न तु युयुत्सया, आत्ममन्दिराद्विनिर्गतम्, न त्वमरावतीसमीपमागतम्, उपश्रुत्य, न तु दृष्ट्वा, ससंभ्रमेणेन्द्रेण द्रुतं झटिति पातितार्गला संघटितकवाटा सती, अमरावती भिया निमीलिताक्षीव भवति– इत्यत्र प्रसादादिना गुणेनोत्प्रेक्षालंकारेण च युक्तत्वाच्चारुता। यद्यप्यत्र प्रथमश्लोके मन्दाकिनीविषयो भक्तिरूपो भावो व्यज्यते द्वितीयश्लोकेऽपि वीररसो व्यज्यते, तथापि 'निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरः–' इत्यत्रेव वाच्यस्य व्यङ्ग्यप्रवणतां विना विश्रान्त्यभावाभावेन प्रतीयमानार्थस्येव स्फुटत्वाद्व्यङ्ग्यस्य न स्फुटतेति विवक्षितमस्फुटव्यङ्ग्यत्वमक्षतमित्येके। व्यङ्ग्यसद्भावेऽप्यत्र

व्यङ्ग्ये कविविवक्षावैधुर्यादव्यङ्ग्यत्वम्; सहृदयास्तु रसास्वादलालसा अत्रापि रसं भुञ्जत एवेति सहृदयदृष्ट्या नाधमत्वमित्यन्ये । प्रथमश्लोके 'मन्दाकिनी वो मन्दतां भिन्द्यात्' इति योजनायां व्यवधानम्, द्वितीये च व्यभिचारिणो भयस्य स्वशब्देनोपादानात् 'व्यभिचारिरसस्थायिभावानां शब्दवाच्यता' इति वक्ष्यमाणमनौचित्यं च व्यङ्ग्यप्रतीतिमपकर्षतीत्यप्रतीयमानव्यङ्ग्यत्वादधमत्वम्, दोषाज्ञाने ॥ व्यङ्ग्यप्रतीतौ तु नाधमत्वमित्यप्याहुः ॥ ८ ॥

इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कसाग्निचिद्विश्वजिदतिरात्रयाजि-
सत्यमङ्गलरत्नखेटश्रीनिवासदीक्षिततनयस्य कामाक्षीगर्भ-
संभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरणसहजता-
लब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षितस्य
कृतौ काव्यदर्पणे काव्यलक्षणनिर्णयः
प्रथम उल्लासः ॥



## द्वितीय उल्लासः ।



प्रथमोल्लासे हि गुणादिविशिष्टं शब्दार्थयुगलं काव्यमित्युक्तम् । तत्र शब्दार्थयोः प्राधान्यात्प्रथमं तयोः स्वरूपं दर्शयिष्यन्नर्थापेक्षयापि शब्दस्य प्राधान्याच्छब्दस्वरूपं तावद्विभजन्नेव निर्दिशति—

**शब्दोऽत्र त्रिविधः शक्तलक्षकव्यञ्जकात्मना ॥**

शक्तलक्षकव्यञ्जकभेदेन शब्दोऽत्र काव्ये त्रिविधः । यद्यपि शास्त्रेषु शक्तलक्षकभेदेन द्विविध एव शब्दः, तथापि काव्ये व्यञ्जक इत्यपरोऽपि समस्तीत्युक्तमत्रेति । लक्षणायाः शक्तिमूलकत्वाच्छक्तस्य प्रथमं निर्देशः, व्यञ्जनाया उभयमूलकत्वाद्व्यञ्जकस्योभयानन्तरं निर्देश इति ध्येयम् ॥ १ ॥

अथार्थमपि विभजन्नेव निर्दिशति—

**तदर्थोऽपि त्रिधा शक्यलक्ष्यव्यङ्ग्यविभेदतः ॥**

तेषां शक्तलक्षकव्यञ्जकरूपाणां शब्दानामर्थस्तदर्थः । सो-

ऽपि शक्यलक्ष्यव्यङ्ग्यभेदात्त्रिविधः । अत्र यद्यपि विभागादेव त्रिविधत्वसिद्धिस्तथापि न्यूनाधिकसंख्याव्यवच्छेदाय त्रिधेत्युक्तम् । यद्यपि वाचकादिशब्दनिर्देशानन्तरं तत्तल्लक्षणमुक्त्वैवार्थनिरूपणमुचितं तथाप्यर्थघटितमेव तेषां लक्षणं वक्तव्यम् ; अतः प्रागर्थस्वरूपप्रदर्शनमिति ध्येयम् ॥ १० ॥

ननु वाक्यार्थस्योक्तत्रैविध्यानन्तर्भावाद्विभागन्यूनतेत्यत आह—

**तुर्यस्तात्पर्यविषयो वाक्यार्थ इति तार्किकाः ।**
**अन्ये शक्यं तमप्याहुरपरे लक्ष्यमूचिरे ॥**

आकाङ्क्षायोग्यतासत्तिमतां पदानां समुच्चारणे सत्यपदार्थोऽपि घटानयनादिसंसर्गरूपोऽपूर्वो वाक्यार्थस्तात्पर्यविषयतया समुल्लसतीत्यभिहितान्वयवादिनो नैयायिकादयः । वाक्यार्थोऽपि शक्य एवेत्यन्विताभिधानवादिनः प्राभाकराः । वाक्यार्थो लक्ष्य इति भाट्टा वेदान्तिनश्चाहुः । वस्तुतस्तु वाक्यार्थो न शक्यो नापि लक्ष्य इति पञ्चमे वक्ष्यते । न चैवं विभागन्यूनतेति वाच्यम्, शक्यपदेन वृत्त्यन्तरं विना शक्तिप्रयुक्तोपस्थितिविषयत्वस्य विवक्षितत्वादिति दिक् ॥ ११ ॥

अथार्थव्यञ्जकतामाह—

**वाच्यादयस्त्रयोऽप्यर्थाः प्रायशो व्यञ्जका मताः।**
**जयत्यधिवसन्गङ्गां देवस्तापैरनीक्षितः॥**

वाच्यलक्ष्यव्यङ्ग्यरूपास्त्रयोऽप्यर्थाः प्रायशो व्यञ्जकाः, न तु सर्वत्र॥ तत्र जयतिपदवाच्यस्योत्कर्षेण वर्तत इत्यस्य वक्तृनमस्कारव्यञ्जकतया वाच्यस्य व्यञ्जकत्वम्, गङ्गापदलक्ष्यस्य तीरस्य शैत्याभिव्यञ्जकतया लक्ष्यस्य व्यञ्जकत्वम्, तथा गङ्गामित्यत्रैव व्यङ्ग्येन शैत्येन भगवतस्तापानीक्षणसामर्थ्यव्यञ्जनाद्व्यङ्ग्यस्यापि व्यञ्जकत्वमिति ध्येयम्॥ यद्यप्युद्देशक्रमानुरोधाच्छब्दस्य व्यञ्जकत्वमभिधायार्थस्य व्यञ्जकत्वमभिधातुमुचितम्; तथापि शब्दव्यञ्जकत्वं स्फोटव्यञ्जकेषु वर्णेष्वेव दृष्टम्, अर्थव्यञ्जकता तु न क्वापि दृष्टा, ततः कथमर्थानामपि काव्यत्वमित्याशङ्कामपनेतुमिदमिहोक्तं न तु प्राधान्येनार्थव्यञ्जकत्वमुपदर्शयितुम्। अत एवाग्रे शब्दस्य व्यञ्जकत्वमुपपाद्यार्थस्य व्यञ्जकत्वं प्रपञ्चयिष्यत इति ध्येयम्॥ यथा वा वाच्यस्य व्यञ्जकता—'माए घरोवअरणं अज्ज हु णत्थि त्ति साहिअं तुमए। ता भण किं करणिज्जं एमेअ ण वासरो ठाइ॥'— मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया। तद्भण किं करणीयमेवमेव न वासरस्तिष्ठति॥ हे मातः, गृहोपकरणं नद्याद्य-

देयं जलादिरूपं नास्तीति त्वया संप्रति कथितं किल, तत्किं वा कर्तव्यं वद, वासर एवमेव न तिष्ठति— इत्यत्र तद्भण किं करणीयमित्याद्यर्थेन वक्तृवैशिष्ट्यज्ञानाद्गृहोपकरणसंपादनव्याजेन स्वैरविहारोद्यमो व्यज्यते। तत्रापि मातरिति वृद्धता व्यज्यते। तया च स्वयं जलाहरणाद्यसामर्थ्यम्। गृहोपकरणमित्यवश्यसंपादनीयत्वम्, अद्य खल्वित्यपलापाशक्यता, त्वयेति न मयैव व्याजः संपाद्यत इत्ययमर्थः, तद्भणेति स्वस्य कर्तव्याज्ञानाभिनयः, एवमेवेत्यादिना क्षणमात्रमपि विलम्बासहता च व्यज्यत इति ध्येयम्। पूर्वत्र जयतीति पदार्थस्य व्यञ्जकत्वम्, अत्र तद्भण किं करणीयमित्यादिवाक्यार्थस्य व्यञ्जकत्वमिति भेदः। न चैवमस्य वाच्यव्यञ्जकतोदाहरणत्वमयुक्तं स्याद्वाक्यार्थस्य वाच्यत्वाभावादिति वाच्यम्, वाक्यार्थस्यापि वाच्यान्तर्भावस्योक्तत्वादिति दिक्॥ लक्ष्यस्य व्यञ्जकता यथा वा— 'साहेन्ती सहि सुहअं खणे खणे दूमिआ सि मज्झ कए। सब्भावणेहकरणिज्जसरिच्छं दाव विरइअं तुमए॥'— साधयन्ती सखि सुभगं क्षणे क्षणे दूनासि मम कृते। सद्भावस्नेहकरणीयसदृक्षं तावद्विरचितं त्वया॥ हे सखि, मम कृते मन्निमित्तं सुभगं नायकं साधयन्ती संघटयितुं कृतसंचारेति यावत्। क्षणे क्षणे दूनासि श्रान्तासि। सद्भावस्य समीचीनहृदयतायाः

स्नेहस्य च यत्करणीयं तत्सदृशं त्वया कृतमिति वाक्यार्थः। अत्र दूत्यां प्रमाणान्तरेणापकारित्वावगमान्मुख्यार्थबाधावगमेन शत्रुत्वमाचरितमिति विपरीतलक्षणयावगम्यते। तेन च 'त्वमधमा येन दूतीविरुद्धं नायकोपभोगमाचरितवती, सोऽप्यधमो येन दूतिकायां त्वय्यनुरक्तः' इति व्यज्यते। इदमपि वाक्यलक्षितस्यार्थस्य व्यञ्जकतायामुदाहरणमिति भेदः॥

व्यङ्ग्यस्य व्यञ्जकता यथा वा— 'उअ णिच्चल णिप्पन्दा बिसिणीपत्तम्मि रेहइ बलाआ। णिम्मलमरअअभाअणपडिट्ठिआ सङ्खसुत्ति विअ॥'—पश्य निश्चलःनिः स्पन्दा बिसिनीपत्रे राजते बलाका। निर्मलमरकतभाजनप्रतिष्ठिता शङ्खशुक्तिरिव॥ इदं हि संकेतार्थिनं कामुकं प्रति नायिकावचनम्। हे निश्चल संकेतार्थितयात्रैव स्थितिशील, नलिनीदले निःस्पन्दा बकी निष्कलङ्कमरकतपात्रस्थिता शङ्खशुक्तिर्मुक्तास्फोट इव राजते पश्य — इत्यत्र निस्पन्दत्वेनाश्वासवत्त्वम्, तेन च जनराहित्यम्, तेनापि तदेव संकेतस्थानमिति च व्यज्यते। यद्वा, संकेतस्थानमगत्वैव गतोऽस्मीति मिथ्या वदन्तं नायकं प्रति नायिकावचनमिदम्। अत्रापि निःस्पन्दत्वेनाश्वासवत्त्वम्, तेन च 'न त्वं तत्र गतोऽसि, मिथ्यैव गतोऽस्मीति वदसि गतश्चेन्नेयं बलाका निःशङ्का वर्तेत' इति व्यज्यते। अस्मिश्च पक्षे निश्चलेति संबोधनम् 'मिथ्या वदसि' इति व्यङ्ग्ये

सहायतां प्रतिपद्यते ॥ केचित्तु– नायकं प्रत्यन्यापदेशेन दूतीवचनमिदम् । गत्यर्थानां ज्ञानार्थकत्वाभिश्चलपदं ज्ञानशून्यपरम् । बलाकापदेन च स्त्रीलिङ्गमहिम्ना नायिका प्रतीयते । ततश्च हे ज्ञानशून्य, स्वयमेव समागत्य पश्य, सा विरहासहा संप्रति बिसिनीपत्रे राजते; कतिपयक्षणविलम्बे प्राणाश्च धारयिष्यति यतो निःस्पन्दा । निर्मलमरकतेत्यत्र बिसिनीपत्रस्य मरकतभाजनोपमिततया तदङ्गसङ्गान्नीरसता व्यज्यते । तस्याः शुक्त्योपमितत्वेन पाण्डुत्वम्, तेन चोपमाव्यङ्ग्येनानुभावेन विप्रलम्भातिशयो व्यङ्ग्यः– इत्याहुः ॥ १२ ॥

एवमर्थस्य स्वरूपं व्यञ्जकत्वं च निरूप्यावसरसंगत्या वाचकादीनां क्रमेण लक्षणमाह—

**साक्षात्संकेतितं योऽर्थमभिधत्ते स वाचकः ।**
**घनश्यामः क्रियाद्रामः श्रियं सुग्रीवराज्यदः ॥**

अत्राभिधत्त इत्यस्य प्रतिपादयतीत्यर्थः, न त्वभिधया प्रतिपादयतीति ; तथा सत्यभिधाया वाचकशब्दव्यापारत्वेनान्योन्याश्रयात्, तावत एव सम्यक्त्वे शेषवैयर्थ्याच्च । संकेतश्च 'अस्माच्छब्दादयमर्थो बोध्यः' इत्याकारक आप्ताभिप्रायो

न त्वीश्वराभिप्रायमात्रम्, यदृच्छाशब्दस्याप्यग्रे संग्राह्यत्व-कथनेन तत्राऽव्याप्तेः। एवं च लक्ष्यस्याप्यर्थस्य तादृशाप्ता-भिप्रायविषयत्वेन संकेतितत्वाविशेषाल्लक्ष्यार्थप्रतिपादके ला-क्षणिकपदेऽतिव्याप्तिवारणाय साक्षादिति। अर्थान्तरप्रती-त्यद्वारकत्वमिह साक्षात्त्वं विवक्षितम्। तावन्मात्रं च संब-न्धितयाकाशस्मारके घटादिशब्देऽतिव्याप्तम्। अतः संके-तितमिति। शब्दत्वेन विशेषणाच्च न चेष्टायामतिव्याप्तिः— इत्येके। अन्ये तु— साक्षात्संकेतितो योऽर्थस्तत्प्रतिपादकत्वं लक्षणम्। संकेतश्च पूर्वोक्त आप्ताभिप्राय एव, लक्षणास्थले च परम्परया संकेतः शक्यं बोधयित्वा लक्ष्यं बोधयत्वित्य-भिप्रायेणैवाप्तेन लाक्षणिकपदप्रयोगात्— इत्याहुः। अपरे तु— संकेतपदं संबन्धपरम्। तथा च साक्षात्संबन्धवि-षयार्थप्रतिपादकत्वं वाचकत्वम्। ननु— 'छत्रिणो गच्छन्ति' इत्यत्र च्छत्र्यच्छत्रिसाधारणैकसार्थगन्तृत्वेन लक्षणया च्छ-त्रिणोऽपि प्रतिपादके च्छत्रिपदेऽतिव्याप्तिः। न च, यः शब्दो यद्विषयकसाक्षात्संबन्धेन यदर्थस्मृतिहेतुः स तस्य वाचक इति विवक्षितम्, छत्रिपदं च साक्षात्संबन्धेन च्छत्र्यच्छत्रिसाधारणरूपेण न च्छत्रिस्मारकमिति न तत्रा-तिव्याप्तिरिति वाच्यम्; छत्रिविषयकसाक्षात्संबन्धस्यापि ल-क्षणया च्छत्रिस्मरणेऽपि प्रयोजकत्वमस्त्येव, अन्यथा शक्य-

ग्रहेऽपि लक्षणया तत्स्मृत्यापत्तेः। न चेष्टापत्तिः, शक्यसंबन्धाग्रहे लक्षणाया अप्रवृत्तेः — इति चेन्न; छत्रिण इत्यस्य च्छत्रिस्मृतिः साक्षात्संबन्धेनैव, अच्छत्रिस्मृतिः परं लक्षणयेत्यजहल्लक्षणैव नास्ति। युगपद्वृत्तिद्वयविरोधश्च 'गङ्गायां मत्स्यघोषौ' इत्यादाविवादोषायैव। यद्वा, साक्षात्त्वस्य प्रतिपादनक्रियाविशेषणत्वेनाङ्गीकारान्न दोषः। ननु— एवमपि 'साक्षात्संबन्धविषयमर्थं यः पदार्थस्मृत्यन्तरमद्वारीकृत्य प्रतिपादयति स वाचकः' इति हि पर्यवस्यति। तथा सति शक्यभूतच्छत्रिमात्रस्मृतिं द्वारीकृत्य च्छत्र्यच्छत्रिस्मारके च्छत्रिपदेऽतिव्याप्त्यभावेऽपि 'राजा हरति लोकानां हृदयं मृदुभिः करैः' इत्याद्यभिधामूलव्यञ्जनास्थले प्रकरणादिनाभिधायाः प्राकरणिकचन्द्राद्यर्थस्मृतौ नियमने सत्यप्राकरणिकभूपाद्यर्थस्य व्यञ्जनया प्रतिपादके राजादिपदेऽतिव्याप्तिः, तत्र प्राकरणिकचन्द्रादिपदार्थस्मृतेरप्राकरणिकभूपाद्यर्थस्मृतौ द्वारत्वाभावात्। न च पदार्थस्मृत्यन्तराव्यवहितत्वमेवात्र साक्षात्त्वं विवक्षितमिति वाच्यम्; तथापि 'सर्वदो माधवः पायादन्धकक्षयकृत्स वः' इत्यादौ यत्र हरिहरयोर्द्वयोरपि प्राकरणिकत्वं तत्र प्रसिद्धिप्राचुर्येणान्धकासुरनाशकर इति हरविषयार्थस्य झटिति प्रतीतिः, पश्चात्पर्यालोचनयान्धकानां यदुप्रभेदानां क्षयकृद्गृहकृदिति हरि-

विषयार्थस्य निहतार्थतया विलम्बेन प्रतीतिः; तत्रान्धकक्ष्या-यादिपदेऽव्याप्तिः पदार्थस्मृत्यन्तराव्यवधानेन स्मारकत्वाभा-वात्— इति चेन्न; अस्वतन्त्रत्वेन पदार्थविशेषणात्। स्वा-तन्त्र्यं च शक्यतावच्छेदकप्रकारेणान्वयबोधविषयत्वम्। ततश्च स्वतन्त्रपदार्थस्मृतिव्यवधानेऽप्यस्वतन्त्रपदार्थस्मृत्यव्य-वहितत्वमस्त्येवेति नाव्याप्तिः। अजहल्लक्षणास्थले तु च्छ-त्रिणां शक्यतावच्छेदकीभूतच्छत्रित्वप्रकारेणान्वयबोधाविष-यत्वान्न स्वातन्त्र्यमित्यस्वतन्त्रपदार्थस्मृतिव्यवधानेनैव लक्ष्य-स्मारकतेति न तत्राप्यतिव्याप्तिः। न चैवं लाक्षणिकस्थले साक्षात्संबन्धविषयस्यान्वयबोधविषयत्वाभावेन स्वातन्त्र्या-भावादस्वतन्त्रपदार्थस्मृत्यव्यवधानपदेनैव तत्रातिव्याप्तिवार-णात्साक्षात्पदवैयर्थ्यमिति वाच्यम्, 'गङ्गायां मत्स्यघोषौ' इत्यत्र साक्षात्संबन्धविषयस्याप्यन्वयबोधविषयत्वेन स्वतन्त्र-त्वात्तत्स्मृतिव्यवधानेऽपि तीरस्मृतेरस्वतन्त्रपदार्थस्मृत्यव्यव-हितत्वात्तीरस्मृतिजनकतादशायामतिव्याप्तिवारणाय साक्षा-त्पदावश्यंभावात्। न चैवम् 'राजा हरति—' इत्यत्र व्यञ्जनया भूपाद्यप्राकरणिकार्थस्मारकेऽतिव्याप्तिः स्यात्, तत्र प्राकरणिकार्थस्यान्वयबोधविषयत्वेन स्वातन्त्र्यात्तत्स्मृति-व्यवधानेऽप्यस्वतन्त्रपदार्थस्मृत्यव्यवधानसत्त्वादिति वाच्यम्, अनियन्त्रितसंकेतस्यैव संकेतपदेन विवक्षितत्वात्—इत्याहुः॥

यथा घनश्यामादिशब्दाः साक्षात्संकेतितार्थस्मारकतया वाचकाः ॥ १३ ॥

ननु संकेतिताः क इत्याकाङ्क्षायामाह—

**जातिर्गुणः क्रिया द्रव्यमिति संकेतिता मताः ॥**

जातिर्घटत्वादिका, गुणो नीलपीतादिकः, क्रिया चलनादिका, द्रव्यं सजातीयवस्त्वन्तररहितमाकाशादिकं वक्तृयदृच्छासंकेतितडित्थादिशब्दव्यङ्ग्यः स्फोटश्च, एते चत्वारः संकेतविषया मताः । ननु— 'घटमानय' 'घटं स्थापय' इत्यादिवाक्येषूत्तमवृद्धेनोक्तेषु प्रयोज्यस्य घटानयनस्थापनादिव्यवहारं पश्यन्व्युत्पित्सुर्व्यवहारविषयभूतायां व्यक्तावेव शक्तिं गृह्णाति न तु जात्यादावितादृषये—इति चेन्न ; व्यक्तेर्व्यवहारविषयत्वेऽपि व्यक्तीनामानन्त्यात्सामान्यलक्षणायां मानाभावेन शक्तिग्रहसमये सर्वव्यक्त्युपस्थित्यसंभवान्न तासु शक्तिग्रहः । यदि च तत्कालोपस्थितकतिपयव्यक्तिष्वेव शक्तिर्गृह्येत तदा यासु न शक्तिग्रहस्तासां घटादिपदेनोपस्थितिर्न स्यात् । यदि च क्वचिच्छक्तिग्रहेऽप्यन्यत्र शाब्दधीरिष्यते तदा शक्तिधीः शाब्दज्ञाने व्यभिचारिणीति कारणमेव न स्यात् । यदि च यद्धर्माश्रये शक्तिग्रहस्तद्धर्माश्रयस्य स्मृ-

त्यगोचरस्यापि योग्यतावशादन्वयबोधविषयत्वं स्यादेव स-मानप्रकारकत्वस्यैव नियामकत्वादिति मतम् , तथापि व्य-क्तिमात्रस्य शक्यत्वे 'गौः' 'शुक्लः' 'चलः' इत्यादिपदानां व्यक्तिमात्रवाचकत्वेन पर्यायतापत्त्या सह प्रयोगानुपपत्तिः, जातिर्गुणः क्रियेति विभागानुपपत्तिश्च। यदि च जात्यादि-विशिष्टव्यक्तिषु शक्तिग्रहमङ्गीकुरुषे तदा लाघवाज्जात्यादेरेव शक्यता युक्ता, व्यक्तिलाभस्त्वाक्षेपाल्लक्षणया वा भविष्यति। स च संकेतग्रहोपाधिभूतो जात्यादिरूपो धर्मो वस्तुनः स्वा-भाविको वक्तृयदृच्छोपाधिकश्चेति सामान्यतो द्विविधः। स्वाभाविकधर्मश्च सिद्धसाध्यभेदेन द्विविधः। तत्र सिद्धो-ऽपि वस्तुनः प्राणप्रदो विशेषाधानहेतुश्चेति द्विविधः। तत्राद्यो जातिः। सा हि वस्तुनः प्राणप्रदतुल्यत्वात्प्राणप्रदे-त्युच्यते। तदवच्छिन्नमेव हि वस्तु व्यवहारयोग्यं भवति नान्यथा। तदुक्तं भर्तृहारिणा— 'गौः स्वरूपेण न गौर्ना-प्यगौर्गोत्वाभिसंबन्धात्तु गौः' इति। गौः स्वरूपेण व्यक्ति-मात्रेण गौरिति न व्यवह्रियते नाप्यगौरश्वादिरिति वा व्य-वह्रियते, किं तु गोत्वाभिसंबन्धादेव गौरिति व्यवह्रियत इत्यर्थः। यद्वा प्राणप्रदत्वं यावदाश्रयं तदाधारत्वम्। गुणा-नां तु नित्यत्वपक्षेऽपि न यावदाश्रयं तद्वृत्तित्वम् , आश्रये सत्यपि पाकादिना समवायनाशे तदनाधारतास्वीकारात्।

द्वितीयस्तु शुक्लादिर्गुणः । जात्या प्रथमं विशेषितमेव हि वस्तु द्वितीयक्षणे समवायोत्पत्तौ पश्चाद्गुणैर्विशेष्यते । द्वितीयस्तु साध्यरूपो धर्मः क्रिया । यद्यपि क्रियापि नित्या न साध्या, तथाप्याख्यातेन साध्यतया प्रतीतेः सा साध्येत्युच्यते । यदाहुः— 'यावत्सिद्धमसिद्धं वा साध्यत्वेन प्रतीयते' इति । सा च क्रिया पाकादिः पौर्वापर्येण वर्तमानाभिः स्वावयवकल्पाभिश्चुल्लीसंमार्जनाद्यवस्रावणान्ताभिः क्रियाभिरभिव्यज्यते । वक्तृयदृच्छोपाधिकस्तु धर्मः पूर्वपूर्ववर्णैः स्फुटतयाभिव्यक्तश्चरमवर्णबुद्ध्या स्फुटतरमभिव्यक्तः स्फोट एव । स च व्यञ्जकानां वर्णानां क्रमवत्त्वेऽपि न स्वयं क्रमवान्, इतरथा वर्णवत्तस्यापि क्रमवत्त्वेऽर्थप्रत्यायकत्वासामर्थ्यप्रसङ्गात् तादृशस्फोटरूपं च डित्थादिशब्दव्यङ्ग्यस्वरूपं वक्तृयदृच्छया डित्थाद्यर्थेषु शक्तिग्रहोपाधित्वेन संनिवेश्यत इति संज्ञारूपं यदृच्छात्मकं चोच्यते । यद्यपि जात्यादिशब्दानामपि स्फोटव्यञ्जकत्वमविशिष्टं तथापि जात्यादीनामेव प्रकारत्वात्तेषामेवोपाधित्वम्, डित्थादिशब्देषु स्फोट एव प्रकार इति स एवोपाधिः । न चैवं यदृच्छाशब्दे द्रव्यमुपाधिरिति व्यवहारः कथमिति वाच्यम्, स्फोटरूपशब्दस्यापि द्रव्यत्वेन तदविरोधात् । अत एव 'गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः' इति

महाभाष्यकारः। ननु– भिन्नासु घटादिव्यक्तिषु ‘घटोऽयम्’ ‘घटोऽयम्’ इत्याद्यनुगतप्रतीतिप्रयोगविषयत्वं हि जातित्व-मिहाभिमतम्। तच्च परमाणुत्वेऽतिव्याप्तम्। न च परमा-णुत्वमपि जातिरेवेति वाच्यम्, परमाणुत्वादीनां गुणमध्ये पाठात्– इति चेन्न, तेषां गुणमध्ये पाठात्पारिभाषिकमेव गुणत्वं न तु वास्तवमिति ध्येयम्। ननु– गुणक्रिययोरप्याा-नन्त्याद्व्यक्तिशक्तिपक्षोक्तदूषणसाम्यम्– इति चेन्न; शुक्लनीला-दिगुणव्यक्तयः प्रत्येकमेकैका एव नित्याश्च तत्तद्द्रव्यव्यक्तिभि-र्व्यज्यन्ते। विनाशोत्पादधीस्तु तत्समवायविषयिणी। एवं पाकादिक्रिया अप्येकैका एव नित्याश्च चुल्लीसंमार्जनाद्यवस्था-वणान्ततत्तद्व्यापारव्यङ्ग्याः। व्यञ्जकक्रमाच्च क्रियायाः क्र-मिकत्वव्यवहारः। भेदप्रतीतिस्त्वाश्रयभेदौपाधिकी, यथैक-स्यैव मुखस्य दर्पणतैलखड्गाद्यालम्बनभेदाद्भेदप्रतीतिस्तद्वदिति दिक्॥ १४॥

एवं जात्यादयश्चत्वारोऽपि तत्तत्पदसंकेतविषया इत्युक्तम्। तत्र मतान्तराण्याह–

**जातिरेवाथ वा तद्वानेव वापोह एव वा॥**

घटादिशब्देष्विव शुक्लादिशब्देष्वपि जातिरेव संकेतविषयः।

तथा हि— शुक्लादयो गुणाः क्रियाश्च प्रतिव्यक्ति भिन्नभिन्ना एव, उत्पादविनाशप्रतीतेस्तस्या बाधकं विना तत्समवायविषयकत्वकल्पनानौचित्यात्समवायस्य नित्यत्वाच्च । ततश्च हिमपयःशङ्खाद्याश्रयभेदे शुक्लादयो गुणा भिन्ना एव । भिन्नेष्वपि तेषु शुक्लः शुक्ल इत्यनुगतप्रतीतिबलाच्छुक्लत्वादिकं जातिः । तथा गुडतण्डुलादिपाकादिक्रियासु पाकत्वादिकं जातिरेव । एवं बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु स्फुटतरवैलक्षण्यानुभवाद्भेदसिद्धौ तत्राप्यनुगतबुद्ध्यनुरोधाड्डित्थशब्दत्वादिकं जातिः । सा च शब्दार्थयोरभेदवादिमते डित्थाद्यर्थेऽपि वर्तते । तद्भेदवादिमतेऽपि परम्परयार्थेऽपि तस्या वृत्तिरविरुद्धा । यद्वा, प्रतिदिनमुपचयापचयवत्त्वेन डित्थादिशरीरस्य भेद आवश्यकः, तथाप्यनुगतबुद्ध्या डित्थत्वादिकं जातिरेवेति सर्वेषां शब्दानां जातिरेव संकेतविषय इत्यके । अन्ये तु— तद्वाञ्जातिविशिष्टः पदार्थ एव सर्वत्र संकेतविषयः, प्रथममानयनादिव्यवहारदर्शनेन तत्रैव संकेतग्रहादग्रे तस्यागे मानाभावात्— इत्याहुः । अपरे तु— अघटादिव्यावृत्तिरूपोऽपोह एव घटादिपदसंकेतविषयः, अपोहव्यतिरिक्तजातौ मानाभावात्— इत्याहु । एषु च पक्षेषु युक्तायुक्तविचारणा ग्रन्थगौरवभयात्प्रकृतव्यञ्जनानिरूपणानुपयोगाच्च न कृतेति ध्येयम् ॥ १५ ।

वाचकं निरूप्य परिशेषादभिधाव्यतिरिक्तां व्यञ्जनां सि-
षाधयिषुर्वाचकव्यापारभूतामभिधां तावल्लक्षयति—

**व्यापारः शक्यधीहेतुर्मुख्यः शब्दगतोऽभिधा ॥**

शक्यस्य साक्षात्संकेतविषयस्य या धीस्तद्धेतुर्मुख्यो यः शब्द-
निष्ठो व्यापारः सोऽभिधा । अत्र शब्दगतव्यापारत्वमात्रं
लक्षणायामतिव्याप्तम्, अतः शक्यधीहेतुरिति । न चैवमपि
'छत्रिणो गच्छन्ति' इत्यजहल्लक्षणायां छत्र्यच्छत्रिसाधार-
णैकसार्थगन्तृत्वेन शक्यानां छत्रिणामपि प्रतीतेस्तत्रातिव्या-
प्तिरिति वाच्यम्, शक्यतावच्छेदकप्रकारेण शक्यधीहेतुत्वस्य
विवक्षितत्वात् न च 'गङ्गायां घोष' इत्यादौ गङ्गात्वेनैव
तीरप्रतीतिरिति मते लक्षित्वेनैवात्रापि लक्ष्यलक्षितप्रती-
तिरित्युक्तदोषतादवस्थ्यमिति वाच्यम्, शक्यमात्रधीहेतुत्वस्य
विवक्षितत्वात् । तावच्चाभिधामूलव्यञ्जनायामतिव्याप्तमिति
मुख्यपदम् । मुख्यत्वं च तदर्थप्रतीतौ तद्गतव्यापारान्तरानपे-
क्षत्वम् । अभिधामूलव्यञ्जनायां व्यङ्ग्यार्थप्रतीतौ व्यङ्ग्य-
विषयकशक्त्यपेक्षास्त्येव, अन्यथा शक्त्यग्रहेऽपि व्यञ्जनया
तत्प्रतीत्यापत्तेः । न चैवं लक्षणायामपि तावतैवातिव्याप्ति-
निरासे शक्यधीहेतुपदवैयर्थ्यमिति वाच्यम्, स्वरवर्णादिगत-
व्यञ्जनायामतिव्याप्तिनिरासाय तदवश्यंभावादित्याहुः । अ-

न्ये तु– शक्तिरेवाभिधा। शक्तिश्च संकेतयितुरिच्छा। संकेतयिता च जात्यादिवाचकपदेष्वीश्वर एव, डित्थादिपदेषु तत्तत्पित्रादिः। तदिच्छायाश्च स्वरूपसंबन्धेन शब्दनिष्ठत्वमप्यविरुद्धम्। अतः शक्त्यतिरिक्तायामभिधायां न किंचित्प्रमाणम्– इत्याहुः ॥ १६ ॥

अथाभिधां विभजते—

**रूढिर्योगो योगरूढिरिति सा त्रिविधाभिधा ॥**

स्फुटम् ॥ १७ ॥

रूढिं लक्षयति—

**रूढिस्त्वखण्डशक्त्यैव स्यादेकार्थाभिधायिता।**
**पीनौ वधूकुचावुच्चैर्मुक्ताहारौ च राजतः ॥**

समुदायशक्तिमात्रेणैकार्थप्रतिपादकता रूढिः। अवयवशक्त्या प्रतिपादके योगेऽतिव्याप्तिवारणाय समुदायेति। समुदायावयवशक्तिभ्यामर्थप्रतिपादिकायां योगरूढावतिव्याप्तिनिरासाय मात्रपदम्। समुदायशक्त्या वृक्षविशेषादिप्रतिपादकेऽवयवशक्त्या च तुरङ्गश्रोत्रादिप्रतिपादकेऽश्वकर्णादिशब्देऽव्याप्तिवारणायैकपदम्। तत्रावयवशक्त्यार्थान्तरप्रतिपादनेऽपि समुदायशक्तिमात्रेण वृक्षविशेषाद्येकार्थप्रतिपादकत्वान्ना-

व्याप्तिः । एवं च समुदायशक्तिमात्रेणार्थप्रतिपादकत्वमवयवार्थाप्रतिभानात्तत्प्रतिभानेऽपि तस्य प्रतिपाद्ये बाधाद्वा भवतीति द्विविधा रूढिः ॥ यथा पीनौ वधूकुचाविति पदाभ्यां नावयवार्थप्रतिभानम्, मुक्ताहारपदे मुक्त आहारो याभ्यामित्यवयवार्थप्रतिभानेऽपि तस्य मुक्तामयहारलक्षणे प्रतिपाद्ये बाध इत्येषा रूढिः ॥ यथा वा— 'प्रत्यर्थिक्षितिपालमौलिकलितप्रत्यग्रमुक्तातुलाकोटिस्पर्शनमातनोति चरणाम्भोजं सदा तावकम् । वीर श्रीरघुनाथनायक विभो विश्वंभराधीश ते दत्ते रूप्यतुलाप्रदानकलना चित्ते न मे विस्मयम् ॥'— अत्रापि मुक्तादिशब्देषु नावयवार्थप्रतिभानम् । तुलाकोटिशब्देऽवयवार्थप्रतिभानेऽपि तस्य पादाङ्गदलक्षणे प्रतिपाद्ये बाध इत्येषा रूढिः । यद्यपि प्रत्यर्थिक्षितिपालानां मौलिभिः शिरोभिः प्रतिमाकारैः कलितो घटितः प्रत्यग्रमुक्तामयो यस्तुलाकोटिः पादाङ्गदं तस्य स्पर्शनं धारणमेव प्रत्यर्थिक्षितिपालकिरीटखचितप्रत्यग्रमुक्तात्मकतुलितद्रव्यकोटिप्रतिपादनमित्यभेदाध्यवसायार्थं तुलाकोटिशब्देऽवयवार्थोऽपि विवक्षितः, तथापि तस्य पादाङ्गदगतत्वेनाप्रतिपादनात्तत्र रूढिरेव ॥ १८ ॥

योगं लक्षयति—

**योगोऽवयवशक्त्यैव स्यादेकार्थाभिधायिना ।**
**रागिन्कान्तापदाघातस्तवाशोकस्य सांप्रतम् ॥**

रूढावतिव्याप्तिवारणायावयवेति । योगरूढौ तद्वारणाय एवेति । अवयवशक्तिमात्रेण कुसुमितादिवस्तुप्रतिपादके समुदायशक्त्या च दिवाकरनिशाकरादिप्रतिपादके पुष्पवदादिशब्देऽव्याप्तिवारणायैकपदम् । अवयवशक्तिमात्रेण प्रतिपादकत्वमपि समुदायार्थाप्रतिभानात्तत्प्रतिभानेऽपि तस्यावयवशक्तिप्रतिपाद्यार्थानन्वयाद्वा भवतीति योगोऽपि द्विविधः । यथा रागिन्निति केवलं योगः । अशोकपदे शोकरहितत्वमेव कङ्केलिवृक्षत्वमित्यभेदाध्यवसायार्थं समुदायार्थस्य विवक्षितत्वेऽपि शोकरहितत्वरूपावयवशक्तिप्रतिपाद्यार्थेऽनन्वय एव ॥ यथा वा— 'शाखाभृतां यत्प्रमदावनेषु समाश्रितानामपि पुष्पवत्ताम् । छायातमिस्रप्रकरैरजस्रं पादा भजन्ते परिभूतिमेव ॥'- अत्रापि शाखाभृतामिति केवलं योगः । पुष्पवत्तामिति पदे कुसुमवत्त्वमेव दिवाकरनिशाकरत्वमित्यभेदाध्यवसायार्थं समुदायार्थस्य विवक्षितत्वेऽपि कुसुमवत्त्वरूपावयवशक्तिप्रतिपाद्यार्थेऽनन्वय एव ॥ १९ ॥

योगरूढिं लक्षयति—

**योगरूढिस्तु शक्तिभ्यामेकार्थप्रतिपादनम् ।**
**मृगाक्षी पद्मनाभस्य मन्दिरे वसतान्मम ॥**

शक्तिभ्यामवयवशक्तिसमुदायशक्तिभ्याम् । अत्र शक्तिद्वयेन भिन्नभिन्नार्थप्रतिपादकेऽश्वकर्णादिपदेऽतिव्याप्तिवारणायैकप · दम् । यथा मृगाक्षीपदं पद्मनाभपदं च । इयमप्यवयवशक्त्ये- वावयवगतवृत्त्यन्तरेण समुदायार्थप्रतिपादनेऽपि भवति; तथावयवार्थान्तरस्य विवक्षितत्वेऽपि तस्य समुदायार्थानन्व- येऽपि भवति । यथा— 'तेजःस्फूर्तिरसावनन्तमणिभिः स्थैर्यं च हेमाद्रिणा कीर्त्तिस्ते शशिकोटिभिश्च तनुते नित्यं तुलारो- हणम् । वीर श्रीचिनचेन्नयाच्युतधराधौरेयभाग्योन्नते चित्रं किं रघुनाथभूप भवतो हेम्ना तुलारोहणम् ॥'— अत्रानन्त- मणिभिरित्यनन्तस्याकाशस्य मणय इव मणय इत्यवयवगत- गौण्या समुदायशक्त्या चादित्याः प्रतीयन्ते । तथादित्या एवानेके मणयो रत्नानीत्यभेदाध्यवसायार्थमवयवार्थान्तरस्य विवक्षितत्वेऽपि तस्य समुदायार्थानन्वयश्च । तथा हेमाद्रिणेति हेममयोऽद्रिरित्यवयवशक्त्या समुदायशक्त्या च मेरुप्रतीतौ, हेमाद्रिरेवाद्रिसदृशं हेमेत्यभेदाध्यवसायार्थमवयवार्थान्तरस्य विवक्षितत्वेऽपि तस्य समुदायार्थे मेरावनन्वयः । न च हेमाद्र्यादिपदानां केवलं मेरुप्रमुखेषु रूढिरेवास्त्विति वाच्यम् ,

तत्रैव यौगिकार्थप्रतिभानस्यापि सर्वसाक्षिकत्वात् । न च तदवयवशक्तिमात्रेण मेर्वाद्यर्थप्रतिपादकत्वोपपत्तौ समुदायशक्तिर्माऽस्त्विति वाच्यम्, 'मेरुः सुमेरुर्हेमाद्रिः—' इत्याद्यभिधानकोशपरम्परया विशिष्य तत्र समुदायशक्तेरपि सिद्धेः, अन्यथा राजभिः क्रीडार्थं निर्मिते हेममयाद्राविव विशिष्यानुशासनानपेक्षणेन तद्व्यवहारापत्तेरित्याहुः । क्वचिद्योगरूढस्यापि पदस्यावयवार्थानन्वयात्समुदायार्थमात्रे विश्रान्तिः । यथा स्थलकमले नीरजादिपदम् । क्वचित्तु समुदायार्थानन्वयादवयवार्थमात्रे विश्रान्तिः । यथा नीलनीरजमित्यादौ । अत्रोभयत्रापि लक्षणैवेति न्यायविदः । तथा हि— नीरजपदे हि नीरजनिकर्तृत्वमवयवशक्त्या समस्ति । समुदायशक्त्या तु पद्मत्वं प्रतीयते । ततश्च नीरजपदरूपैकपदोपादानरूपयान्तरङ्गप्रत्यासत्त्या स्थलकमलेन्दीवरान्वयात्प्रागेव नीरजनिकर्तृत्वसमानाधिकरणत्वेनोपस्थितस्य पद्मत्वस्य पद्मत्वसमानाधिकरणत्वेनोपस्थितस्य नीरजनिकर्तृत्वस्य च स्थलकमलेन्दीवरान्वये नाकाङ्क्षा न वा विशिष्टस्य तदन्वयविषयिणी शाब्दधीरिति तदन्वयार्थं स्वतन्त्रपद्मत्वनीरजनिकर्तृत्वोपस्थितये नीरजपदस्य लक्षणैवाभ्युपगन्तव्या, न तु रूढिर्योगो वा । न च प्रथमं योगरूढिभ्यां स्वार्थोपनयेऽपि पश्चात्स्थलकमलेन्दीवरान्वयार्थं विरुद्धवृत्तिमूकीभावे सति तदितरवृत्त्यैव

स्वतन्त्रपद्मत्वनीरजनिकर्तृत्वोपस्थितेराकाङ्क्षादिसद्भावान्न तदर्थमिह लक्षणेति वाच्यम्, केवलरूढ्यादिना स्वतन्त्रपद्मत्वाद्युपस्थित्यर्थं शब्दस्य पुनरनुसंधानकल्पनागौरवापत्तेः। लक्षणापक्षे तु नायं दोषः, योगरूढ्या नीरजनिकर्तृत्वसंवलितपद्मत्वरूपाविशिष्टोपस्थिते र्विशेषणविशेष्यान्यतरलक्षणाद्वारत्वेन द्वारे सति द्वारिणः पुनरनपेक्षणात्। न च शक्योपस्थितिर्लक्षणया लक्ष्योपस्थिताविव शक्योपस्थित्यन्तरेऽपि द्वारं येन केवलरूढ्यादिना स्वतन्त्रपद्मत्वाद्युपस्थितावपि पुनरनुसंधानं न कल्प्येतेत्याहुः। अन्ये तु—विशेषणस्य स्वतन्त्रोपस्थित्यर्थं लक्षणायामपि विशेष्यस्य स्वतन्त्रोपस्थितये न लक्षणा। अत एव 'नित्यो घटः' इत्यत्र नित्यत्वस्य विशेषणान्वयितया विशेषणस्य घटत्वस्य स्वतन्त्रोपस्थित्यर्थं लक्षणा, 'नष्टो घटः' इत्यत्र तु न लक्षणेति नैयायिकैरेव स्वीकृतम्। ततश्च नीलनीरजमित्यत्र लक्षणायामपि स्थलकमले नीरजमित्यत्र न लक्षणा— इत्याहुः। अपरे तु— यथा 'राजा हरति लोकानां हृदयं मृदुभिः करैः' इत्यादौ प्रकरणादिना प्रकृतचन्द्रादावेवाभिधायां नियमितायां भूपाद्यर्थान्तरविषया त्वभिधा मूकीभवति, तथा प्रकरणादिना स्थलकमलेऽवयवशक्तेरिन्दीवरे समुदायशक्तेश्च तिरोभावात्प्रथममेव पद्मत्वं नीरजनिकर्तृत्वं चोपस्थितं भवतीति न क्वापि लक्षणेत्याहुः॥ २०॥

एवं त्रिविधामप्यभिधां निरूप्य व्यापारप्रसङ्गाल्लक्षणाश्रयत्वेन लक्षकं निरूपयितुं वा लक्षणां लक्षयति—

**तात्पर्यविषयीभूतार्थान्वयानुपपत्तितः ।**
**शक्यभिन्नार्थधीहेतुर्व्यापारो लक्षणोच्यते ॥**

अभिधायामतिव्याप्तिवारणाय शक्यभिन्नेति । व्यञ्जनायामतिव्याप्तिवारणायान्वयानुपपत्तित इति । तत्र तु न मुख्यार्थान्वयानुपपत्तिः । तावत्युक्ते 'छत्रिणो गच्छन्ति' इत्यत्राव्याप्तिः, तत्र मुख्यार्थानां छत्रिणामपि गमनान्वययोग्यत्वेन तदनुपपत्त्यभावात् । अत उक्तं तात्पर्यविषयीभूतेति । तत्र हि छत्र्यछत्रिसमुदायकर्तृकमेव गमनं तात्पर्यविषयीभूतम् । तेन च छत्रिमात्रस्य नान्वययोग्यतेति नाव्याप्तिः । तात्पर्यानुपपत्तिमात्रं च व्यञ्जनायामस्ति, तात्पर्यनिर्वाहायैव सर्वत्र वृत्तिकल्पनात् । अतस्तात्पर्यविषयीभूतार्थान्वयानुपपत्तिपर्यन्तमुक्तम् । न च तादृशव्यापारः शक्तिभिन्नः शक्यसंबन्ध एव, स च लक्ष्यभूततीरादिनिष्ठ इति कथमस्य शब्दव्यापारतेति वाच्यम्, तस्यार्थनिष्ठस्यापि शब्द आरोपात् । तदुक्तं काव्यप्रकाशिकायाम्— 'लक्षणारोपिता क्रिया' इति— इति प्राञ्चः । शक्यघटितपरम्परासंबन्धेन सोऽपि शब्दनिष्ठ एवेति नव्याः । तात्पर्यविषयार्थान्वयानु-

पपत्त्या शक्यसंबन्धादशक्यार्थस्मृतिर्लक्षणेति प्राञ्चः । तद्-युक्तम्; अर्थप्रतिपत्त्यर्थं हि वृत्तिकल्पनं न तु सैव वृत्तिरिति युक्तं कल्पयितुमिति ध्येयम् ॥ २१ ॥

एवं लक्षणां लक्षयित्वा तां विभजते—

## द्विविधा सा रूढिपूर्वा फलपूर्वेति भेदतः ॥

सा लक्षणा रूढिलक्षणा फललक्षणा चेति सामान्यतो द्वि-विधा । प्रयोगबाहुल्येन रूढितुल्यतया प्रसिद्धा लक्षणा रूढिलक्षणा । यथा 'कुशलोऽयं रथकर्मणि तक्षा' इति । कुशलशब्दो हि कुशं लात्यादत्त इत्यवयवशक्त्या कुशादान-कर्तरि वर्तते समुदायशक्त्या समर्थ इति नीरजपदवद्योग-रूढः । इयांस्तु विशेषः— नीरजपदस्य 'नीलनीरजम्' इति योगार्थेऽपि प्रयोगबाहुल्यमस्ति, कुशलशब्दस्य तु मण्ड-पशब्दस्य मण्डपानकर्तृत्वरूपयोगार्थ इव कुशादानकर्तृत्व-रूपयोगार्थे न प्रयोगबाहुल्यमिति । ततश्च रथकर्मणि कुशा-दानकर्तृत्वरूपयोगार्थासंभवात्कुशलशब्दः सामर्थ्यमात्रे विवे-चकत्वरूपशक्यसंबन्धसत्त्वेन लक्षणया वर्तते, यथा स्थल-कमले नीरजशब्दोऽवयवार्थानन्वयाल्लक्षणया समुदायार्थपुर-स्कारेण वर्तते । न च कुशलशब्दस्य लाक्षणिकत्वे शक्य-

संबन्धज्ञानाय कुशादानकर्तृत्वविशिष्टसामर्थ्यरूपः शक्यार्थोऽपि प्रतीयेतेति वाच्यम्, व्युत्पन्नस्येष्टत्वादव्युत्पन्नस्य नीरजादिपदसाधारण्यात्। इयं च लक्षणा प्रयोगबाहुल्याद्रूढिवदतिप्रसिद्धेति रूढिलक्षणा। विवक्षितार्थान्तरद्योतनफला तु फललक्षणा। यथा 'गङ्गायां घोषः' इति। अत्र हि गङ्गापदं मुख्यार्थस्य प्रवाहस्य घोषान्वयायोग्यत्वात्सामीप्यादिरूपशक्यसंबन्धस्य च सत्त्वात्तीरे लक्षणया वर्तते। स्वायत्ते शब्दप्रयोगे सत्यपार्थकावाचकपदप्रयोगानौचित्याद्गङ्गागतपावनत्वादिधर्माणां तीरनिष्ठतया प्रतीतिः प्रयोजनमिति फललक्षणैषा ॥ २२ ॥

रूढिलक्षणां विभजते—

**स्याद्रूढिलक्षणा द्वेधा गौणी शुद्धेति भेदतः ॥**

स्फुटम् ॥ २३ ॥

**शक्यसादृश्यसंबन्धरूपा गौणीति सा मता।**
**लावण्यनिधिरेषैव प्रवीणा युववञ्चने ॥**

शक्यसादृश्यरूपसंबन्धात्मिका सा रूढा गौणी मता। ननु—सादृश्यं न संबन्धः, विशिष्टधीनियामकस्यैव संबन्धत्वात्। न हि संयोगे सति 'दण्डी देवदत्तः' इतिवत्समवाये सति 'रूपी घटः' इतिवद्वा सादृश्ये सति 'सिंहवान्देवदत्तः'

इति विशिष्टधीरस्ति । तस्माद्गौणी लक्षणातो भिन्नैव वाच्या— इति चेन्न ; व्यतिरेकलक्षणास्थले विशिष्टबुद्ध्यनियामकस्यापि निरोधस्य शक्यसंबन्धत्वाभ्युपगमेन सादृश्यस्यापि शक्यसंबन्धत्वाविरोधादित्याहुः ॥ यथा लावण्यपदस्य लवणत्ववाचिनो हृदयंगमत्वादिसादृश्यात्सुषुमाविशेषे वृत्तिः, यथा वा प्रकृष्टवीणावत्त्वविशिष्टसमर्थवाचकस्य प्रवीणशब्दस्य विवेचकत्वादिसादृश्येन समर्थमात्रे वृत्तिरितीह निरूढा गौणीति ॥ २४ ॥

**शुद्धा सा सादृश्यभिन्नशक्यसंबन्धरूपिणी ।**
**पुष्पं धनुर्ज्या द्विरेफाः स्मरस्तदपि दिग्जयी ॥**

सादृश्यभिन्नशक्यसंबन्धरूपा रूढा शुद्धा ॥ यथा द्विरेफशब्दस्य 'द्वौ रेफौ यस्य' इति व्युत्पत्त्या भ्रमरशब्दवृत्तेस्तद्वाच्ये मधुव्रते रूढिलक्षणा शुद्धा, सादृश्यान्यभ्रमरशब्दघटितशक्यसंबन्धरूपत्वात् । न च द्विरेफपदस्य भ्रमरशब्दे शक्तिर्नेति कथमत्र शक्यसंबन्ध इति वाच्यम्, द्विरेफशब्दस्यापि भ्रमरशब्दे योगरूढ्यङ्गीकारात् अथ वा, वृत्त्यन्तरं विना शक्तिप्रयुक्तोपस्थितिविषयत्वेन वाक्यार्थवद्भ्रमरशब्दस्यापि शक्यत्वोपपत्तेरित्याहुः । एवं त्वगादिशब्दानां त्वगिन्द्रियादिषु शुद्धा रूढिलक्षणेति ध्येयम् ॥ २५ ॥

फललक्षणां विभजते—

**जहती चाप्यजहती जहत्पूर्वाजहत्यपि।**
**सारोपा साध्यवसितिरित्यन्या पञ्चधा मता॥**

अन्या फललक्षणा जहल्लक्षणाजहल्लक्षणा जहदजहल्लक्षणा सारोपलक्षणा साध्यवसानलक्षणा चेति पञ्चविधा॥ २६॥

तत्र जहल्लक्षणां लक्षयति—

**स्याज्जहल्लक्षणा यत्र स्वार्थं त्यक्त्वान्यवृत्तिता।**
**साक्षी मुकुन्दकेलीनां यमुनायामयं व्रजः॥**

यत्र स्वार्थत्यागेन परार्थवृत्तिता तत्र जहल्लक्षणा॥ यथा यमुनायामित्यत्र वाच्यस्य प्रवाहस्य घोषान्वयायोग्यत्वाद्यमुनाशब्दः स्वार्थं परित्यज्य स्वार्थसंबन्धिनि तीरे वर्तत इति तत्र जहल्लक्षणा। इयमेव वाच्यमर्थमन्वयायोग्यत्वेनोपलक्षणीकृत्यान्वययोग्यमर्थं लक्षयतीति लक्षणलक्षणेत्युच्यते। परस्य तीरादेर्घोषाद्यधिकरणतासिद्धये तीराद्यर्थान्तरप्रतीतिव्यापारत्वमात्रेण स्वार्थप्रतीतिजनकत्वं यत्र तत्र लक्षणलक्षणेत्यन्ये। ननु— स्वार्थत्यागेन परार्थवृत्तिता यत्र तत्र जहल्लक्षणेत्ययुक्तम्। तथा हि— 'गङ्गायां घोषः' इत्यादौ गङ्गापदेन तीरत्वप्रकारिका न तीरप्रतीतिः किं तु स्रोतस्त्वप्रकारिकैव। अन्यथा तीरस्य प्रवाहाभेदाप्रतीतेः प्रतिपिपादयिषि-

तप्रवाहगतपावनत्वादिधर्मप्रतीतिस्तीरे न स्यात्। अत एव 'तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसंप्रत्ययः' इति काव्यप्रकाशिकायामुक्तम्। ननु— अनुपपन्नमिदम्। न हि येन रूपेणानन्वयनिश्चयस्तेन रूपेणोपस्थितेऽन्वयधीर्भवति, अयोग्यत्वस्य तादवस्थ्यात्। अतः कथं स्रोतस्त्वेनोपस्थिते घोषवासान्वयः। किं चैवम् 'स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणा' इत्यभियुक्तोक्तिविरोधश्च, स्रोतस्त्वेनैवात्र प्रतीतेः। अपि च मुखादौ 'चन्द्रोऽयम्' इत्यादिसाध्यवसानलक्षणातो भेदो न स्यात्, आरोप्याभेदप्रतीतेरुभयत्राविशेषात्— इति चेन्न। न हि समानप्रकारकज्ञानमात्रं विरोधि, किं तु समानविषयकत्वविशेषितम्। अन्यथा घटः क्वचिदस्ति क्वचिन्नास्तीत्यपि धीर्न स्यात्। न चात्र समानविषयकत्वमस्ति, स्रोतस्त्वेन तीरस्यैवोपस्थितेर्विषयभेदात्। अतो नायोग्यताज्ञानम्। न चासंसर्गग्रहे स्रोतस्त्वग्रह एव तीरे कथमिति वाच्यम्, प्रत्यक्षाहार्यारोप इव लक्षणायामप्यसंसर्गग्रहस्याभेदधीप्रतिबन्धकत्वाकल्पनात्। अत एव 'चन्द्र एवेदं मुखम्' इत्यादिसारोपलक्षणादावभेदधीः सर्वानुभवसिद्धा। अन्यथा फललक्षणैव न स्यात्, प्रकारान्तरेण प्रतिपिपादयिषितप्रयोजनासंभवात् 'सर्वतो बलवती ह्यन्यथानुपपत्तिः' इति न्यायात्।

नापि 'स्वार्थादन्येन–' इत्यभियुक्तोक्तिविरोधोऽपि, तीरत्वेनैव ज्ञाते शक्यसंबन्धग्रहानन्तरं स्रोतस्त्वेन भानाभ्युपगमात्। तीरत्वस्य नियतोपस्थितस्याप्यभाने स्रोतस्त्वस्य च भाने लक्षणास्वाभाव्यमेव नियामकम्, अन्यथा प्रयोजनालाभात्। साध्यवसानलक्षणाया भेदस्त्वसारोपविषयानिगरणादेव। न चात्राप्यारोपविषयतीरादिवाचकपदानुपादानात्तन्निगरणमपि तुल्यमिति वाच्यम्; न ह्यारोपविषयवाचकपदानुपादानमात्रं विषयनिगरणम्, किं तु यत्र विषय आरोप्यारोपविषयवाचकपदोपादानेऽप्यभेदप्रत्ययस्तत्र विषय आरोप्यमात्रवाचकपदोपादाने विषयनिगरणम्। तथा च नात्र विषयनिगरणमिति सहृदयैर्विभावनीयम्। ननु– स्रोतस्त्वेन तीरस्य पूर्वमननुभवान्न गङ्गापदे स्रोतस्त्वेन तीरोपस्थितिः संभवति। 'चन्द्र एवेदं मुखम्' इत्यत्र तु वाक्यार्थत्वेनैवाभेदानुभव इति न दोषः– इति चेन्न; 'पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः' इत्यादिसाध्यवसानायां नीलोत्पलशरादिपदैर्नेत्रकटाक्षादीनामिन्दीवरत्वसायकत्वादिप्रकारकस्मृतेः सर्वानुभवसिद्धत्वेन लक्षणास्वाभाव्यस्यैव तथाविधस्मृतावपि नियामकत्वेनावश्यकल्प्यत्वात्। अतोऽत्र स्रोतस्त्वेनैव तीरादिप्रतीतेः कथं स्वार्थत्याग इति चेत्सत्यम्; स्वार्थपदेन स्वशक्यतावच्छेदकावच्छिन्नस्यैव विवक्षितत्वात्। अथ वा, गङ्गा-

घट्टतीरत्वेनैव तीरस्मृतिः । न चैवं प्रयोजनालाभाल्लक्षणैव न स्यादित्युक्तमिति वाच्यम्; यथैव त्वन्मते लक्षणास्वाभाव्यात्तीरस्य स्रोतस्त्वेनोपस्थितिस्तादृशोपस्थित्या च पावनत्वादिप्रतीतिरिति कल्प्यते तथास्माभिरपि लक्षणास्वाभाव्यादेव गङ्गापदप्रतिपाद्यत्वज्ञानादेव प्रयोजनलाभ इत्यास्थीयते विशेषाभावात् । अत एव 'छत्रिणो गच्छन्ति' इत्यजहत्स्वार्थाया छत्र्यच्छत्रिसमुदायस्य च्छत्रिपदात्साधारणेनैकसार्थगन्तृत्वेन प्रतीतिर्न तु च्छत्रित्वेनेति न्यायविदः । एवं च साध्यवसानलक्षणातोऽस्या भेदः स्फुट एवाभेदाविषयत्वादिति दिक् ॥ इयं च जहल्लक्षणा 'एकः कृती शकुन्तेषु योऽन्यं शक्रान्न याचते' इत्याद्यप्रस्तुतप्रशंसादेरलंकारस्य बीजम् । एवम् 'उपकृतं बहु नाम किमुच्यते सुजनता प्रथिता भवता परम्' इत्यादिविपरीतलक्षणापि जहल्येव । सा च 'कः स्वर्धुनि विवेकस्ते नयसे पापिनो दिवम्' इत्यादिव्याजस्तुतेर्बीजम् ॥ २७ ॥

अथाजहल्लक्षणमाह—

**स्वसिद्धये पराक्षेपे त्वजहल्लक्षणोच्यते ।**
**वीक्ष्यानुद्रवतः कुन्तान्द्रवन्ति च्छत्रिणो रणात् ॥**

यत्र स्ववाच्यस्यान्वयसिद्ध्यर्थं स्ववाच्यसंबन्धी लक्ष्यते तत्रा-

जहल्लक्षणा। यथा अनुद्रवतः कुन्तानित्यत्र कुन्तपदं स्ववा-
च्यस्य कुन्तस्यानुद्रवणक्रियान्वयार्थं कुन्तवत्सु पुरुषेषु वर्तते।
अत्र कुन्तस्यापि पुरुषसाहित्येन क्रियान्वयादजहल्लक्षणा।
अत्र च कुन्तबाहुल्यप्रतीतिः फलम्। तया च हन्तृत्वं व्य-
ज्यते। यथा वा च्छत्रिणो द्रवन्तीत्यत्र च्छत्र्यच्छत्रिसमु-
दायकर्तृकं गमनमेव तात्पर्यविषयीभूतम्। तत्र च्छत्रिमात्रस्य
नान्वय इति स्ववाच्यच्छत्र्यन्वयसिद्ध्यर्थं छत्रिपदं छत्र्य-
च्छत्रिसमुदाये वर्तते। अत्र च च्छत्रिणामप्यच्छत्रिसाहि-
त्येनान्वयादजहल्लक्षणा। छत्रिबाहुल्यप्रतीतिः फलम्। इय-
मेव स्वार्थमुपादायान्यल्लक्षयतीत्युपादानलक्षणेत्युच्यते। अत्रा-
पि कुन्तच्छत्रिपदाभ्यां कुन्तत्वेन च्छत्रित्वेन च लक्ष्यप्रतीति-
रित्येकं मतम्; कुन्ता इत्यत्र कुन्तकुन्तिसाधारणेन कुन्तसं-
योगित्वेन तदुभयोपस्थितिः, छत्रिण इत्यत्रैकसार्थगन्तृत्वेनो-
भयोपस्थितिरित्यपरं मतमिति ध्येयम्। इयं च 'अयमैन्द्री-
मुखं पश्य रक्तश्चुम्बति चन्द्रमाः' इत्यादिसमासोक्तेर्बीजम्।
केचित्तु— 'गामालभेत' इत्यादौ गवादिपदं स्ववाच्याया
जातेः श्रुतिचोदितालम्भनाद्यन्वयसिद्धये स्ववाच्यजातिविशि-
ष्टां व्यक्तिं लक्षयति न त्वभिधत्ते, 'विशेष्यं नाभिधा गच्छे-
त्क्षीणशक्तिर्विशेषणे' इति न्यायात्। ततश्च तत्र स्ववाच्यमु-
पादाय व्यक्तिलक्षणादुपादानलक्षणा— इत्याहुः। तदयुक्तम्। न

हीयं फललक्षणा, अनादित्वेन प्रयोजनाकल्पनात् । न च तर्हि रूढिलक्षणास्त्विति वाच्यम् । न हि रूढिलक्षणायामुपादानलक्षणाख्यो भेदोऽस्ति । किं च यत्र निर्वचनानुपपत्तिरेव बाधस्तत्र रूढिलक्षणा, कुशलादिपदे तथा दर्शनात् । न च गोशब्दस्य व्यक्तौ निर्वचनानुपपत्तिरस्ति, 'गच्छतीति गौः' इति निर्वचनस्य व्यक्तौ सत्त्वात् । किं बहुना ? अनन्यलभ्य एव शब्दार्थः ; व्यक्तिस्त्वविनाभावाज्जात्यानुमातुं शक्यत इति न तत्र लक्षणा युक्ता । न च व्यक्तेरनुमेयत्वे शाब्दबोधविषयत्वं न स्यादिति वाच्यम्, अर्थाध्याहारस्थलवददोषात् । न चैवमपि व्यक्तेर्गोपदप्रकृत्यर्थत्वाभावेन तत्र प्रत्ययार्थकर्मत्वानन्वयापत्तिः ; अत एव 'गङ्गायां घोषः' इत्यत्रापि गङ्गापदशक्यस्य प्रवाहस्य स्वसंबन्धितीरोपस्थापकत्वसंभवेऽपि प्रत्ययार्थभूताधारत्वान्वयार्थमेव तत्रापि लक्षणास्वीकार इति वाच्यम्; तत्र तथात्वेऽपि प्रकृते जातेर्व्यक्त्यवच्छेदकतयालम्भान्वययोग्यत्वाज्जातावेव कर्मत्वान्वयसंभवेन व्यक्तौ लक्षणाया अकल्प्यत्वात् । अत एव क्रियाकारकयोरविनाभावादन्यतरप्रतीतावन्यतरानुमितिसंभवात्क्रियतामित्यत्र न कर्ता लक्ष्यते । तथा, कुर्वित्यत्र यत्किंचित्कर्म, प्रविशेत्यत्र गृहम्, पिण्डीमित्यत्र भक्षयेति क्रिया च न लक्ष्यते । ननु– एवमपि 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र भो-

जनाभावसहितं पीनत्वमनुपपद्यमानं रात्रिभोजनं लक्षयतु, रात्रिभोजनस्य पीनत्वेन सामानाधिकरण्यरूपसंबन्धसत्त्वाद्रात्रिभोजनमात्रादेवायं पीन इति पुरुषवैशिष्ट्यप्रतीतिरूपफलसत्त्वाच्च लक्षणासामग्र्या अविकलत्वात्— इति चेन्न; 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र श्रुतः शब्द एवानुपपद्यमानो योग्यताघटकतया 'रात्रौ भुङ्क्ते' इत्याभिप्रायिकं शब्दं कल्पयति । यद्वा दिवाभोजनाभावेऽपि प्रतीतं पीनत्वमनुपपद्यमानं रात्रिभोजनं कल्पयतीति तत्राप्यन्यथासिद्धत्वाद्रात्रिभोजनं न लक्ष्यमित्याहुः ॥ इयं चाजहल्लक्षणा जहल्लक्षणावच्छुद्धैव, सादृश्यमूलकत्वाभावात् । अस्यामपि लक्ष्यस्य वाच्यस्य च न भेदेन प्रतीतिः, प्रतिपिपादयिषितप्रयोजनालाभप्रसङ्गादित्यप्याहुः ॥ २८ ॥

अथ जहदजहल्लक्षणां निरूपयति—

**स्वार्थैकदेशे वृत्तौ तु जहत्यजहती मता ।**
**पुष्पितं वनमालोक्य पथिकाः पुङ्खिताधयः ॥**

यत्र समुदायवाचिनः शब्दस्य स्वार्थैकदेशे वृत्तिस्तत्र जहदजहल्लक्षणा ॥ यथा पुष्पितं वनमित्यत्र वनपदस्य स्वार्थैकदेशपरित्यागेन तदेकदेशे वृत्तिः । पुष्पितभूयस्त्वद्योतनं फलम् ॥ २९ ॥

सारोपामाह—

**सारोपा तत्र यत्रोक्तौ विषयी विषयस्तथा ॥**

यत्र विषय्यारोप्यमाणश्चन्द्रादिर्विषय आरोपविषयो मुखा-दिश्च मिथोऽनपह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते तत्र सारोपा ॥ ३० ॥

सारोपां विभजते—

**सारोपा द्विविधा ज्ञेया गौणी शुद्धेति भेदतः ॥**

स्फुटम् ॥ ३१ ॥

**सादृश्यात्मकसंबन्धरूपा सा गौण्युदीर्यते ।**
**शुद्धा तदन्यसंबन्धरूपा सा तु निगद्यते ।**
**मुखेन्दुर्नयनानन्दस्तन्व्या विजयतेतराम् ॥**

सादृश्यात्मकसंबन्धरूपा सारोपा गौणसारोपा । यथा मुखे-न्दुरित्यत्र विषयिविषयवाचकयोरिन्दुमुखपदयोः सामानाधि-करण्यनिर्देशात्सारोपा । इन्दुशब्दस्य मुखे हृदयंगमत्वादि-सादृश्येन वृत्तेर्गौणसारोपा । ताद्रूप्यप्रतीतिः प्रयोजनम् । नयनानन्द इत्यत्र तु नयनानन्दकारणे मुखेन्दौ सादृश्या-न्येन हेतुहेतुमद्भावसंबन्धेन नयनानन्दपदस्य वृत्तेः शुद्धसा-रोपा । ताद्रूप्यप्रतीतिः प्रयोजनम् । एवम् 'मुखं चन्द्रः'

इति व्यासेऽपि गौणसारोपा। अत्रापि ताद्रूप्यप्रतीतिस्तया चान्यवैलक्षण्येन कार्यकारित्वं च फलम्। यद्यप्यत्र 'गङ्गायां घोषः' इत्यादाविव जहल्लक्षणैवेति न ततो भेदेन कथनं युक्तम्, तथापि विषयिविषयवाचकपदोपादानकृतवैलक्षण्यात्ताद्रूप्यप्रतीतिरूपफलभेदाच्च भेदेन कथनम्। 'मुखं चन्द्रः' इत्यत्र चन्द्रशब्दो लक्षणया चन्द्रत्वसहचारिणं हृदयंगमत्वादिधर्मं लक्षणया प्रतिपादयति। ततश्च तं निमित्तीकृत्य मुखमभिधत्ते न तु मुखमपि लक्षयतीति केचित्। तदयुक्तम्। वाच्यवृत्तेरेव प्रवृत्तिनिमित्तत्वाच्चन्द्रत्वसहचारिधर्मस्य च वाच्यवृत्तित्वाभावात्तं निमित्तीकृत्य चन्द्रशब्देन मुखमभिधातुं न युक्तम्। चन्द्रशब्दस्य मुखेऽपि शक्तिकल्पनं चायुक्तम्। तस्माच्चन्द्रत्वसहचारिगुणाभेदेन मुखगतगुणा एव चन्द्रशब्देन लक्ष्यन्ते। तैश्च गुणैर्मुखमाक्षिप्यते न तु मुखमपि लक्ष्यत इत्यपरे। मुखस्य चन्द्रपदाप्रतिपाद्यत्वे शाब्दं सामानाधिकरण्यं न स्यात्; अतश्चन्द्रशब्दः स्वार्थभूतचन्द्रमुखोभयानुगतं धर्मं लक्षयित्वा तन्मुखेन मुखमपि लक्षणया प्रतिपादयतीत्यन्ये। तदुक्तम्— 'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते। लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता॥' इति। अत्राभिधेयशब्दो वृत्त्यन्तरं विना शक्तिप्रयुक्तोपस्थितिविषयपरः। तेन यत्र यौगिकस्यैव लक्षकत्वं न तत्रा-

व्याप्तिः । अविनाभावश्च संबन्धमात्रं न तु नियतसंबन्धः । तथा सति 'मञ्चाः क्रोशन्ति' इत्यत्र लक्षणा न स्यात् । न च क्रोशनकाले मञ्चपुरुषयोरप्यविनाभावोऽस्तीति वाच्यम्, अविनाभावेनैव तदनुमितिसंभवेन लक्षणावैयर्थ्यात्। किं चाविनाभावस्यैव लक्षणाबीजत्वे, 'घटमुच्चारय' इत्यत्र घटपदस्य स्वरूपपरत्वं लक्षणयेत्यविवादम्, तत्र शब्दस्यार्थेन समं दैशिकस्य कालिकस्य वाविनाभावस्यासंभवाल्लक्षणा न स्यात् । प्रतीतिरिति प्राचीनमतेन । नव्यमते तु प्रतीयतेऽनेनेति प्रतीतिपदं करणव्युत्पन्नमिति ध्येयम् । लक्ष्यमाणगुणयोगात्तु वृत्तिर्गौणीत्यत्र गौण्यपि लक्षणाभेद इति तात्पर्यमिति ध्येयम् । अत्र च शुद्धसारोपा सादृश्यान्यसंबन्धस्यानेकविधत्वादनेकधा भिद्यते । तत्र 'नयनानन्दो मुखेन्दुः' इति कार्यकारणभावेन शुद्धसारोपोदाहृता । तादर्थ्यसंबन्धेन यथा— इन्द्रार्थासु स्थूणासु 'इन्द्राः स्थूणाः' इति । अत्र ताद्रूप्यप्रतीतिस्तया चेष्टार्थदायित्वधीश्च प्रयोजनम् । स्वस्वामिभावसंबन्धेन यथा— राजकीये पुरुषे 'राजायं पुरुषः' इति । अत्रापि ताद्रूप्यप्रतीतिस्तया चालङ्घनीयशासनत्वधीश्च प्रयोजनम् । तत्कर्मकारित्वसंबन्धेन यथा— 'तक्षायं ब्राह्मणः' इति । अत्रापि ताद्रूप्यप्रतीतिस्तया च सामर्थ्यातिशयधीश्च प्रयोजनम् । अवयवावयविभावसंबन्धेन यथा— हस्तावयवे-

ऽग्रमात्रे 'अग्रहस्तः' इति । अत्रापि ताद्रूप्यप्रतीतिस्तया च कौशलातिशयधीश्च प्रयोजनम् । अत्र च समुदायवाचिनो हस्तशब्दस्य स्वार्थैकदेशवृत्तितया जहदजहल्लक्षणात्वेऽपि फलादिभेदाद्भेदेन कथनमिति ध्येयम् ॥ अत्र वृत्तिवार्त्तिककृतः — यथा हि 'गङ्गायां घोषः' इत्यत्र गङ्गापदं स्वशक्यसंनिधानि तीरे प्रवर्तमानं तीरत्वप्रकारिकामेव प्रतीतिं जनयति, तथा 'मुखेन्दुः' इत्यत्रापीन्दुपदं मुखेन्दूभयानुगतं कान्तिमत्त्वादिसाधारणधर्मं लक्षयित्वा तन्मुखेन मुखे वर्तमानं मुखत्वप्रकारिकामेव धियं किं जनयत्याहोस्विदुभयसाधारणकान्तिमत्त्वप्रकारिकाम्? नाद्यः, तथा सति मुखपदेन पौनरुक्त्यापत्तेः । न द्वितीयः, तथा हि 'मुखेन्दुः' इत्यनेन कान्तिमन्मुखमिति प्रतीतिः स्यात्; तथा च 'कान्तिमान्मुखचन्द्रः' इति प्रयोगो न स्यात्, चन्द्रपदस्य कान्तिमत्पदेन पौनरुक्त्यात् । न च, चन्द्रसादृश्यमात्रं लक्षयित्वा तद्वति मुखे प्रवर्तते, ततश्च चन्द्रसदृशं मुखमिति मुखेन्दुपदेन प्रतीतिर्भवति 'चन्द्रसदृशो मुखचन्द्रः' इति तु न प्रयोग इति वाच्यम्; तथा सति सादृश्यस्यापि शब्दोपात्ततयोपमात्वापत्त्या तत्र रूपकव्यवहारविरोधात् । न हि सादृश्यस्य वाच्यत्व एवोपमा, 'चन्द्रसुहृन्मुखम्' इत्यादौ सुहृदादिपदेन तल्लक्षणायामप्युपमासंप्रतिपत्तेः । अपि च 'पदाम्बुजम्'

इत्यत्र 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यम्बुज-मिव पदमिति पूर्वपदार्थप्राधान्येन व्याघ्रादिसमासेनोपमायाः, मयूरव्यंसकादिसमासेनोत्तरपदार्थप्राधान्येन पदमेवाम्बुज-मिति रूपकस्य च संभवेन सर्वत्रानवधारणे प्राप्ते; 'मञ्जु-शिञ्जानमञ्जीरं पातु गौर्याः पदाम्बुजम्' इति यत्र पदे संभवन्नूपुरादिकं निबध्यते तत्र पूर्वपदार्थप्राधान्येनोपमा, यत्र पुनः 'उत्तंसितं विरिञ्चाद्यैः' इति पद्मसाध्यमुत्तंसना-दिकं निबध्यते तत्रोत्तरपदार्थप्राधान्येन रूपकमित्यालंकारि-कव्यवस्था भज्येत। पदाम्बुजमित्यत्राम्बुजसादृश्यमात्रस्य प्रतीतौ तस्योत्तंसनानुगुणत्वाभावेन 'उत्तंसितं विरिञ्चाद्यैः' इत्यत्राप्युत्तरपदार्थप्राधान्यव्यवस्थापकाभावेन रूपकनिर्णाय-काभावात्। किं च 'विद्वन्मानसहंसस्त्वं विजयस्व विशां पते' इत्यत्र श्लिष्टपरम्परितरूपके हंसपदस्य राजनि प्रसि-द्धसादृश्याभावाल्लक्षणा न स्यात्। न च विदुषां मानसं हृदयमेव मानसाख्यं सर इत्यभेदाध्यवसायलभ्यमानसवा-सित्वरूपसाधारणधर्मनिबन्धनं सादृश्यं तत्राप्यस्त्विति वा-च्यम्, तत्र सादृश्यलम्भकस्य श्लेषस्य रूपकोत्थाप्यतया लक्षणोदयात्प्राक्तस्य बुद्धिपथानारोहात्। न च श्लेषस्यैव प्राथम्यं किं न स्यादिति वाच्यम्, रूपकं विना कवेरर्थद्वय-विवक्षायामिह गमकाभावेन श्लेषानिर्वृत्तेरभिधायाः प्रकरण-

नियम्यत्वेन रूपकात्प्रागप्राकरणिकस्य सरसो मानसपदेनानुपस्थित्यवश्यंभावाच्च । किं बहुना ? 'मुखं चन्द्रः' 'राजा हंसः' इत्यादौ सर्वत्रैव लक्षणैव नाङ्गीकर्तव्या । मुखादिगतचन्द्रादितादूप्यस्य सामानाधिकरण्यबलेन वाक्यार्थविधयैव प्रतीत्युपपत्तेः लक्षणाफलस्यान्यथापि सिद्धेर्लक्षणावैयर्थ्यात् — इत्याहुः । तच्चिन्त्यम् । चन्द्रादिपदं सादृश्यसामान्यमेव पुरस्कृत्य मुखादौ प्रवर्तते । न चैवं सादृश्यस्यापि प्रतिपाद्यत्व उपमा स्यादित्युक्तमिति वाच्यम्, उपमानवाचकपदादन्येन पदेन सादृश्यप्रतिपादन एवोपमाङ्गीकारात् । 'पद्माक्षी' इत्यादिलुप्तोपमायामपि यथा 'दधि पश्य' इत्यत्र लुप्ताया विभक्तेरेव कर्मत्वप्रत्यायकता तथा समासशास्त्रवशेन लुप्तस्येवादेरेव सादृश्यप्रत्यायकत्वमिति नोपमानवाचकपद्मादिपदात्सादृश्यप्रतीतिः । न च यत्किंचिद्वैषम्यमात्रेणालंकारान्तरत्वोक्तिरयुक्तेति वाच्यम्, प्रकृताप्रकृतयोरेकधर्मान्वये दीपकं प्रकृतयोरेव तदन्वये तुल्ययोगितेत्यङ्गीकारेण यत्किंचिद्वैषम्यमात्रेणाप्यलंकारान्तरत्वाविरोधात् । किं च यथा 'चन्द्र इव मुखं मुखमिव चन्द्रः' इत्यत्र तृतीयसदृशव्यवच्छेदरूपफलभेदानुरोधेनोपमाप्रतीपद्वयसंसृष्ट्यतिरेकेणोपमेयोपमा पृथगङ्गीक्रियते तथात्रापि मुख्यप्रयोगलभ्येऽर्थे लाक्षणिकप्रयोगवैयर्थ्यपरिहाराय सादृश्यलक्षणया तादूप्यप्रतिप-

त्तिरूपफलभेदसत्त्वादपि नालंकारान्तरत्वविरोधः। यदप्युक्त-मेवं सति 'पदाम्बुजम्' इत्यत्रोत्तंसनानुरोधेन रूपकव्यवस्था भज्येतेति, तदपि न; तत्रापि सादृश्यलक्षणया ताद्रूप्यप्रतीत्योत्तंसनरूपकार्योपपत्तेरुत्तंसनरूपकार्यबलेन रूपकव्यवस्थोपपत्तेः। यदप्युक्तम् 'विद्वन्मानमहंसस्त्वम्–' इत्यत्र प्रसिद्धसादृश्याभावाल्लक्षणया सहृदयस्य प्रथमं सादृश्यप्रतीतिर्न स्यादिति, तदपि न युक्तम्। न हि प्रसिद्धसादृश्यमत्र लक्ष्यमित्युक्तम्, किं तु सादृश्यमात्रम्। ततश्च तत्रापि सामानाधिकरण्यबलाद्वक्तुराप्तत्वनिश्चयवान्सहृदयः सादृश्यविवक्षयैव राजनि हंसपदं प्रयुक्तमिति प्रथमं निश्चिनोति। पश्चात्किं तत्सादृश्यमिति गवेषमाणः श्लेषभित्तिकाभेदाध्यवसायलभ्यमानसवासित्वनिबन्धनं तत्सादृश्यमिति निश्चिनोतीति किमनुपपन्नम्? यदप्युक्तं लक्षणां विनैव सामानाधिकरण्यबलेन ताद्रूप्यप्रतीतिसंभवाल्लक्षणावैयर्थ्यमिति, तदपि न; चन्द्रादिसादृश्ये वक्तृतात्पर्ये सति तत्प्रकारकप्रतीत्यर्थं लक्षणावश्यंभावात्। वस्तुतस्तु, 'मुखं चन्द्रः' इत्यत्र चन्द्रताद्रूप्यप्रतीतिर्मुख इति सर्वानुभवसिद्धम्। ततश्च चन्द्रपदस्य चन्द्रताद्रूप्य एव लक्षणा। सादृश्यप्रतीतिः फलम्। अत एव रूपकादिषूपमा व्यङ्ग्येति सांप्रदायिकाः। निरतिशयसौन्दर्यवत्त्वं वा व्यङ्ग्यम्। न च चन्द्रताद्रूप्यस्य मुखगतत्वाभा-

वेन तत्कथं प्रवृत्तिनिमित्तीकृत्य चन्द्रपदस्य मुखे प्रवृत्तिरन्य-धर्मस्यान्यत्र प्रवृत्तिनिमित्तत्वायोगादिति वाच्यम्; सत्यम्, लक्षणया चन्द्रपदेन चन्द्रतादूप्ये प्रतिपादिते शाब्दसामाना-धिकरण्यबलान्मुखे चन्द्रतादूप्यप्रतीत्यविरोधात्। न चैवं लक्षणां विनैव वाक्यार्थविधया समभिव्याहारात्तादूप्यप्रती-तिरस्त्विति वाच्यम्, तत्प्रकारकप्रतीतेरनुभवसिद्धत्वेन लक्ष-णां विना तदनिर्वाहात्; किं च 'नीलमुत्पलम्' इत्यादा-विव शाब्दसामानाधिकरण्येनाभेदस्य वाक्यार्थविधया सिद्धा-वपि तादूप्यस्य तथात्वायोगात्। तदेव च विषयिविषय-वाचकपदसामानाधिकरण्यस्थले सर्वत्र विवक्षितम्, अन्यथा पदद्वयवैयर्थ्यादभेदप्रतीतेरतिशयोक्ताविव चन्द्रादिविषयिवा-चकपदोपादानादेव सिद्धेर्विषयवाचकमुखादिपदानर्थक्यात्। न च 'साक्षाच्चन्द्र एवेदं मुखम्' इत्यत्र विषयविषयिवाच-कपदद्वयोपादानेऽप्येवकारसाक्षात्पदाभ्यां चन्द्राभेदप्रतीतिर-विकलेति वाच्यम्, तादृशस्थले तथात्वेऽप्युत्सर्गतः पदद्वयो-पादाने तादूप्यप्रतीतेरेवानुभविकत्वादिति ध्येयम्॥ १२॥

अथ साध्यवसानामाह—

**निगीर्य विषयं यत्र विषय्येव निबध्यते।**
**तत्र साध्यवसाना स्याद्गौणी शुद्धेति सा द्विधा॥**

**सरोजकाहलीरम्भासैकताकाशभूधरैः ।**
**शङ्खेन्दुतिमिरैः सृष्टा वल्ली कामिजनोत्सवः ॥**

यत्रारोपविषयं मुखादिकं निगीर्यात्मपरिशेषीकृत्य स्थितो विषय्यारोप्यमाणश्चन्द्रादिरेव निबध्यते तत्र साध्यवसाना । अध्यवसानमेकांश उत्कटं ज्ञानम् । ज्ञानस्योत्कटत्वं च तत्कोटिसहचारितानेकधर्मवद्धर्मिविषयकत्वादिकम् ॥

सा च साध्यवसाना सादृश्यतदन्यसंबन्धमूलतया गौणी शुद्धेति द्विविधा । यथा 'सरोजकाहली—' इत्यत्र गौणी, अत्र पङ्कजाद्यादिप्रतीत्यर्थं सादृश्यं पुरस्कृत्य विषयिपदमात्रोपादानात् । अत्र चाभेदधीस्तया च लावण्यातिशयधीश्च फलम् । कामिजनोत्सव इत्यत्र सादृश्यान्यकार्यकारणभावसंबन्धं पुरस्कृत्य विषयिपदमात्रोपादानेन शुद्धसाध्यवसाना । अत्राप्यभेदधीस्तया चाव्यभिचारेण तत्कार्यकारित्वधीश्च फलम्, क्वचित्ताद्रूप्यधीरपि फलम्, 'अनाकाशे कोऽयं गलितहरिणः शीतकिरणः' इत्यत्र शीतकिरण इति विषयिवाचकपदमात्रोपादानेऽपि 'गलितहरिणः' इति प्रसिद्धचन्द्राद्व्यतिरेकप्रतीत्या ताद्रूप्यमात्रप्रतीतेरिति ध्येयम् । इयं चातिशयोक्तेर्बीजम् । यद्यपीयमपि जहल्लक्षणैव, तथापि विषयिवाचकपदमात्रोपादानकृतवैलक्षण्यात्सादृश्यमूलतयाभे-

दप्रतीतिरूपफलभेदाच्च पृथगुपात्ता । इयं चाजहल्लक्षणापि संभवति ; यथा चन्द्रमुखोभयविषये 'चन्द्रौ पश्य' इति प्रयोगे । वृत्तिवार्त्तिककृतस्तु— मुख्यार्थसादृश्येन लक्षणा हि गौणी । न च तत्रैव तत्सादृश्यमस्ति येन मुख्येऽपि गौणी वृत्तिः स्यात् । शुद्धा त्वजहल्लक्षणा विशेषणवाचिनो विशिष्टे संभवति, विशिष्टविशेषणयोरेकदेश्येकदेशरूपसंबन्धसत्त्वात् । तस्मात् 'चन्द्रौ पश्य' इत्यत्राभिधालक्षणाभ्यामेवार्थद्वयप्रतीतिः 'गङ्गायां मत्स्यघोषौ' इत्यत्रेव वृत्तिद्वयविरोधस्यादोषत्वात् । अतो न गौण्यामजहल्लक्षणा— इत्याहुः । तच्चिन्त्यम् ; 'कुन्ताः प्रविशन्ति' इत्यादावपि कुन्तांशस्य शक्त्यैवोपस्थितिसंभवात्तत्र न लक्षणा कल्प्या । किं तु पुरुषांश एव तत्कल्पना । तत्राजहल्लक्षणाव्यवहारस्तु शक्तेरप्यन्वयप्रतियोग्युपस्थापनार्थमत्यागादेव । ततश्च 'चन्द्रौ पश्य' इत्यत्रापि शक्त्यत्यागेन सादृश्यसंबन्धेन मुखे लक्षणाकल्पनादजहल्लक्षणा गौणसाध्यवसानाप्यङ्गीकार्येति दिक् । इदमत्रावधातव्यम्— लक्षणास्थले लक्षकपदेन लक्षकपदवाच्यतावच्छेदकप्रकारेण लक्ष्यप्रतीतिरिति मते— 'कुन्ताः प्रविशन्ति' इत्यजहल्लक्षणायां कुन्तकुन्तिनोः कुन्तत्वेन रूपेण प्रतीतिः, 'गङ्गायां घोषः' इत्यादिजहल्लक्षणायां तीरादेर्गङ्गात्वादिनैव प्रतीतिः । तथा 'मुखं चन्द्रः' 'इन्द्राः स्थूणाः' इत्यादि-

सारोपायां चन्द्रत्वादिना मुखादिप्रतीतिः तथा 'चन्द्रः' 'इन्द्राः' इत्यादिसाध्यवसानायामपि मुखादेश्चन्द्रत्वादिनैव प्रतीतिः। अजहल्लक्षणाजहल्लक्षणयोर्वाच्यस्य कार्यान्वयानन्वयाभ्यां भेदः। सारोपायां विषयिविषयवाचकपदद्वयोपादानाद्भेदः। साध्यवसानायां विषयनिगरणाद्भेदः। विषयनिगरणं च विषयिविषयवाचकपदद्वयोपादाने यत्र विषयस्य विषयित्वेन प्रतीतिस्तत्र विषयस्य विषयिणात्ममात्रपरिशेषीकरणम्। इदं च विषयनिगरणम् 'गङ्गायाम—' इत्यत्र नास्त्येव, तत्र 'गङ्गातीरे–' इति विषयिविषयवाचकपदद्वयोपादाने तीरस्य गङ्गात्वेन प्रतीत्यभावात्। मतान्तरे तु– 'कुन्ताः प्रविशन्ति' इत्यजहल्लक्षणायां कुन्तकुन्तिनोः कुन्तसंयोगाश्रयत्वेन साधारणरूपेण प्रतीतिः। 'गङ्गायाम्–' इति जहल्लक्षणायां तीरस्य तीरत्वेनैव प्रतीतिः॥ गौणसारोपसाध्यवसानयोश्चन्द्रादिसदृशत्वेन मुखादेः, शुद्धसारोपसाध्यवसानयोस्तादर्थ्यादिना प्रतीतिरित्येकं मतम्। सारोपायां चन्द्रादितादूप्येण मुखादिप्रतीतिः साध्यवसानायां चन्द्राद्यभेदेन मुखादिप्रतीतिरित्यपरं मतम्। भेदस्तु पूर्ववदूह्य इति दिक्॥ २२॥

उपसंहरति—

**एवं निरूपिते रूढिलक्षणाफललक्षणे ॥**

स्फुटम् ॥ ३४ ॥

प्रकारान्तरेण फललक्षणाया भेदं वक्तुमर्थसिद्धमर्थं कथयति—

**तत्राद्या व्यङ्ग्यरहिता सव्यङ्ग्या फललक्षणा ॥**

तत्राद्या रूढिलक्षणा व्यङ्ग्यरहिता । फललक्षणा तु प्रयोजनस्य व्यञ्जनैकगम्यत्वनियमेन व्यङ्ग्यसहितैव ! ततश्च रूढिलक्षणाफललक्षणाभ्यामन्या लक्षणा न विधेया, नेयार्थत्वरूपदोषापातादित्यवधेयम् ॥ ३५ ॥

अर्थसिद्धार्थकथनफलमाह—

**तच्च व्यङ्ग्यं क्वचिद्गूढमगूढं च क्वचिद्भवेत् ।**
**विकासिहासा निर्यान्ति चुम्बत्यैन्द्रीमिने स्त्रियः॥**

तथा च सप्तविधापि फललक्षणा गूढव्यङ्ग्याऽगूढव्यङ्ग्यभेदेन प्रत्येकं द्विविधा सती चतुर्दशधा भिद्यत इति ध्येयम् । अत्र गूढत्वं सहृदयैकवेद्यत्वम्, न तु सहृदयैरपि दुःखेन प्रतीयमानत्वम्, तथा सति वक्ष्यमाणास्फुटत्वलक्षणगुणीभूतव्यङ्ग्यरूपतया लक्षणामूलप्रधानव्यङ्ग्यध्वनिभेदाभावा-

पत्तेः। अगूढत्वं च सहृदयासहृदयोभयवेद्यत्वम्। अगूढव्यङ्ग्यं च वक्ष्यमाणगुणीभूतव्यङ्ग्यान्तर्गतमेवेति ध्येयम्। तत्र गूढं यथा विकासिहासा इति। अत्र विकासः पुष्पधर्मः। स चान्तरभागद्योतकत्वसादृश्येन स्मिते समारोप्यते। सौरभवत्त्वादि व्यङ्ग्यम्। तच्च सहृदयैकवेद्यमिति गूढम्। अगूढं यथा चुम्बत्यैन्द्रीमिति। चुम्बनपदं मिथुनयोः कपोलादिस्थले वक्त्रसंयोगवाचकमित्यत्यन्ततिरस्कृतवाच्यतया संबन्धमात्रं लक्षयत्प्रत्यूषस्य तादात्विकतां व्यञ्जयति। अत्र च व्यङ्ग्यं सहृदयासहृदयवेद्यमित्यगूढम्। गूढं यथा वा—'मुखं विकसितस्मितं वशितवक्रिम प्रेक्षणं समुच्चलितविभ्रमा गतिरपास्तसंस्था मतिः उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते॥'—अत्र विकासः पुष्पधर्मः। स चान्तरभागद्योतकत्वादिसादृश्येन स्मिते समारोप्यते सौरभवत्त्वादि व्यङ्ग्यम्। वशितो वशीकृतो वक्रिमा येन प्रेक्षणेन तद्वशितवक्रिम। अत्र वशितत्वं चेतनगतम्। तदचेतने वक्रिम्ण्यधीनत्वसादृश्येन समारोप्यते। तेन च न सार्वत्रिको लोचनस्य वक्रिमा, किं त्वभिमतपुरुषविषय एवेत्युचितपुरुषानुरागो व्यङ्ग्यः। समुच्चलनं मूर्तधर्मः। स चातिशयितत्वसादृश्येन विभ्रमेषु समारोप्यते। विभ्रमाणामयत्नसाध्यत्वं व्यङ्ग्यम्। संस्था यथावस्थितविष-

यप्रकाशीकरणम्। तदपासनं चेतनधर्मः। स चोचितविषयत्वसादृश्येन मतौ समारोप्यते। गुरुजनादिसमीपे भावगोपनं व्यङ्ग्यम्। मुकुलनमपि पुष्पधर्मः। स चोज्जृम्भणोन्मुख्यलक्षणसादृश्येन स्तनयोः समारोप्यते। परिरम्भणयोग्यत्वं व्यङ्ग्यम्। असंबन्धेनोद्धुरत्वं देहधर्मः, न तु तदवयवस्य जघनमात्रस्य। स च मांसलत्वसादृश्येन जघने समारोप्यते। तेनोपभोगयोग्यवयस्कत्वं व्यङ्ग्यम्। असंबन्धवदुद्धुरं मांसलमिति तत्रोपमैव न समारोप इत्यपि केचित्। उद्गमो मूर्तधर्मः। स चोद्भूतत्वसादृश्येन तरुणिम्नि समारोप्यते। विभक्तावयवकत्वं व्यङ्ग्यम्। तेन च सौन्दर्यातिशयः। मोदत इति चेतनधर्मः। स च तरुणिमोद्गमे समुल्लसितत्वसादृश्येन समारोप्यते। तरुणिम्नः परा काष्ठा व्यङ्ग्या। तदेतत्सर्वं सहृदयैकवेद्यमिति गूढम्॥ अगूढं यथा वा—"स्त्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम्। उपदिशति कामिनीनां यौवनमद एव ललितानि॥"—इयं च नायिकायाः शिक्षाग्रहणसामर्थ्यं कथमिति राज्ञा पृष्टस्य नायिकामध्यापयतो नाट्याचार्यस्योक्तिः। जडा अपि स्त्रीणामुपदेशं विनापि तत्परिचयादेव विदग्धचरितानामभिज्ञा भवन्ति। अस्त्वेवम्; स्त्रीणां विदग्धचरिताभिज्ञता तु कुत इत्याकाङ्क्षायामुक्तमुपदिशतीति।

स्त्रीणां तु तारुण्यदर्प एव विलासानुपदिशतीति । अत्रोपदेशो नामाज्ञातज्ञापक आचर्योच्चार्यमाणः शब्दविशेषः । स च सामान्यविशेषभावसंबन्धेनाज्ञातज्ञापकमात्रे वर्तते । अनायासेन नायिकायाः शिक्षाग्रहणं व्यङ्ग्यम् । तच्च व्यङ्ग्यमभिधेयवत्स्फुटमित्यगूढम् । इदं च गुणीभूतव्यङ्ग्यमेव । गूढव्यङ्ग्यं तूत्तमं काव्यमिति ध्येयम् ॥ ३६ ॥

पूर्वोक्तरीत्या बहुविधामपि लक्षणां विवक्षाविशेषेण पुनस्त्रेधा संकलयति—

**तदव्यङ्ग्या तथा गूढागूढव्यङ्ग्येति सा त्रिधा ॥**

यतो रूढिलक्षणायां न फलं व्यङ्ग्यं फललक्षणा च गूढव्यङ्ग्यागूढव्यङ्ग्या चेति द्विविधा, तस्मात्सा पूर्वोक्ता लक्षणा सर्वाप्यव्यङ्ग्या गूढव्यङ्ग्यागूढव्यङ्ग्या चेति त्रिधा भवति ॥ ३७ ॥

एवं लक्षणां निरूप्य तद्द्वारा लाक्षणिकं लक्षयति—

**भवेल्लाक्षणिकः शब्दो लक्षणायाः समाश्रयः ॥**

यद्यपि वाचकत्वदशायामपि लक्षणासमाश्रयत्वमस्ति, तथापि यदा लक्षणया प्रतिपादकत्वं तदा लाक्षणिकत्वं विवक्षितमिति ध्येयम् ॥ ३८ ॥

अथ व्यञ्जकं लक्षयितुं व्यञ्जनां संभावयति—

**फले लाक्षणिकस्यास्य व्यापारो व्यञ्जनोच्यते ॥**

अस्य लाक्षणिकस्य शब्दस्य फले प्रतिपाद्ये यो व्यापारः स व्यञ्जनेत्युच्यते। इदं च व्यञ्जनाया न लक्षणपरं वचनम्, फलप्रतीत्यनुकूललाक्षणिकशब्दगतव्यापारत्वस्याभिधामूलव्यञ्जनायामर्थगतव्यञ्जनायां चाव्याप्तेः। किं तु वृत्तिद्वयव्यतिरेकेण व्यञ्जनैव नास्तीति वदन्तं प्रति कचिद्व्यञ्जनाङ्गीकार्येति तत्सद्भावप्रदर्शनपरम्। यदि व्यञ्जनैव नाङ्गीक्रियेत तदा लाक्षणिकस्थले फलप्रतीतिरेव न स्यात्। अतस्तत्र व्यञ्जना समाश्रयणीयेति भावः ॥ २९ ॥

स्यादेवं यदि लक्षणास्थले फलमावश्यिकं स्यात्, तदेव मास्तु; फलावश्यंभावेऽप्यनुमानादेव तत्प्रतीतिरस्तु; किं व्यञ्जनयेत्यत आह—

**यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।**
**फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥**

न हि 'गङ्गातीरे घोषः' इति वक्तुं प्रतिपादको न जानाति न वा तत्प्रयोगे तीराधारकघोषाधेयकप्रतीतिरेव न भवति। येनैवं स्वायत्तेऽपि शब्दप्रयोगे लाक्षणिकमेव प्रयुङ्क्ते तेन प्रयोजनप्रतिपिपादयिषयैव लाक्षणिकं प्रयुङ्क्त इति लक्ष-

णास्थले फलमवश्यमेषितव्यम् । तत्प्रतीतिश्च शब्दादेव नानुमानात्, व्याप्त्याद्यप्रतिसंधानेऽपि जायमानत्वात् । शब्दस्य च व्यञ्जनां विना तत्र नान्यो व्यापारः समस्तीति व्यञ्जनावश्यमङ्गीकार्या ॥ ४० ॥

नन्वेवमपि शब्दादभिधया लक्षणया वा तत्र फलधीरस्त्वित्यत आह—

**नाभिधा समयाभावाद्धेत्वभावान्न लक्षणा ॥**

पावनत्वादौ हि प्रयोजने गङ्गादिशब्दानां साक्षादाप्ताभिप्रायविषयत्वाभावात्साक्षात्संकेतितार्थप्रतीत्यनुकूलव्यापारात्माभिधा तत्र न संभवति । नापि तत्र लक्षणा, मुख्यार्थबाधादिरूपलक्षणाहेत्वभावात् ॥ ४१ ॥

हेत्वभावमेव विशदयति—

**लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन न ।**
**नापि प्रयोजनं तत्र न च शब्दः स्खलद्गतिः ॥**

लक्षणायां हि मुख्यार्थबाधो मुख्येन लक्ष्यस्य संबन्धः प्रयोजनं च हेतुः । तथा चात्र लक्षणया लक्ष्यप्रतीत्यनन्तरं पुनश्च लक्षणया फलप्रतीतिरभिमता, किं वा लक्ष्यफलयोर्युगपदेव लक्षणया प्रतीतिः । नाद्यः । तदा हि लक्ष्यतट-

प्रतीत्यनन्तरं फले प्रवर्तमाना लक्षणा तटे बाधादेव प्रवर्तेत इति वाच्यम्; पूर्वप्रतीतेऽर्थे बाधं विना लक्षणाया अप्रवृत्तेः, अन्यथा गङ्गाशब्दस्य स्रोतसि बाधाभावेऽपि तीरलक्षणापत्तेः। न च तीरे बाधादेव फले लक्षणास्त्विति वाच्यम्। तथापि मुख्यार्थबाधरूपहेत्वभावान्न फले लक्षणा युक्ता। न च तटमेव मुख्यार्थोऽस्त्विति वाच्यम्, तस्य लक्ष्यत्वेन मुख्यत्वाभावात्। — इत्याशयेनोक्तम्— लक्ष्यं न मुख्यमिति। ननु मुख्यार्थबाधो न लक्षणाहेतुः किं तु ज्ञाप्यबाध एवेत्यत उक्तम्— नाप्यत्र बाध इति। ननु न बाधो लक्षणाबीजं किं तु तात्पर्यानुपपत्तिरेवेत्यत उक्तम्— योगः फलेन नेति। पावनत्वादयो हि स्रोतःसंबन्धिन एव न तीरसंबन्धिन इति ज्ञाप्यार्थसंबन्धाभावाच्च न फले लक्षणा। ननु साक्षात्संबन्धाभावेऽपि तीरेण पावनत्वादेः स्रोतोरूपैकार्थसंबन्धित्वात्मकः परस्परासंबन्धोऽस्तीत्यत उक्तम्— नापि प्रयोजनं तत्रेति। तत्र फले लक्ष्ये सति प्रयोजनान्तरं वाच्यम्। न च तदस्ति। किं च गङ्गाशब्दो लक्षणया तटं प्रतिपाद्य पुनश्च लक्षणया फलमपि प्रतिपादयितुं न समर्थो यतः शब्दो हि लोके न स्खलद्गतिर्विरम्य व्यापारवान्न भवतीत्यर्थः। यद्वा, ननु लक्षणास्थले फलप्रतीतिरेव नास्ति येन तदर्थं व्यञ्जना समाश्रयणीया स्यादित्यत उक्तम्— न च

शब्दः स्खलद्गतिरिति ; अत्र तत्रेति पदं काकाक्षिन्यायेन संबध्यते । तथा च तत्र फले शब्दो लाक्षणिकः शब्दः स्खलद्गतिः प्रतिहतबोधनशक्तिश्च न भवति । ततो न फलप्रतीत्यपलापः कर्तुं शक्यत इति भावः ॥ ४२ ॥

ननु यदुक्तं नापि प्रयोजनं तत्रेति तदयुक्तं प्रयोजनान्तरकल्पनसंभवादित्यत आह—

**फलान्तरस्य तत्रापि कल्प्यत्वे त्वनवस्थितिः ॥**

तत्रापि प्रयोजनस्य लक्ष्यत्वपक्षेऽपि यदि प्रयोजनान्तरं कल्प्यते, तर्हि किं तत्फलान्तरं व्यञ्जनागम्यं लक्षणागम्यं वा? आद्येऽस्मदिष्टसिद्धिः । द्वितीये तस्यापि फलस्य लक्ष्यत्वे फलान्तरं कल्प्यम् । एवं तस्य तस्यापीत्यनवस्था ॥ ४३ ॥

ननु— अस्तु तर्हि लक्ष्यसमकालमेव विशिष्टलक्षणया प्रतीतिरिति द्वितीयः पक्षः । न च प्रयोजनविशिष्टतया तटादिलक्षणायामपि प्रयोजनान्तरेण भाव्यमिति वाच्यम्, 'गङ्गायास्तटे घोषः' इति मुख्यात्प्रयोगात् 'गङ्गायां घोषः' इति लाक्षणिकप्रयोगस्य पावनत्वादिविशिष्टतीरप्रतीतिरेव फलमिति न फलान्तरकल्पनादोष इति विशिष्टलक्षणैवास्तु— इत्यत आह—

**प्रयोजनविशिष्टस्य लक्षणा तु न युज्यते।**
**ज्ञानस्य विषयादन्यद्तो वाच्यं प्रयोजनम् ॥**

'अयं घटः' इत्यादिप्रत्यक्षज्ञानस्य हि विषयभूताद्घटादेरन्यदेव ज्ञातताख्यं घटादिविषयगतं प्राकट्यं फलमिति भाट्टैरङ्गीकृतम् । नैयायिकैरपि हानोपादानादिसंवित्तिर्विषयादन्यैव फलमिति स्वीकृतम् । तथा च लाक्षणिकशब्दजन्यज्ञानस्यापि स्वविषयाभिन्नमेव फलं वाच्यम् । तच्च फलविशिष्टलक्षणायां न संभवति, पावनत्वादेरपि शब्दजन्यज्ञानविषयतया तद्भिन्नत्वाभावात् । अतो न फलविशिष्टलक्षणा युक्ता । किं च गङ्गायां घोषान्वयान्यथानुपपत्त्या हि कल्प्यमाना वृत्तिस्तदुपपादकतीरमात्र एव कल्पयितुं युक्ता न फलविशिष्टे । न च तात्पर्यानुपपत्त्या फलविशिष्टे वृत्तिकल्पनमिति वाच्यम् । तथापि लक्षणयाप्यत्र गङ्गापदेन शक्यप्रवाहसंबन्धिपावनत्वादेरेव प्रतीतिः स्यान्न तु तीरगतस्य । स्रोतोगतस्य पावनत्वादेस्तीरगतत्वप्रतीतिश्चात्र फलमिति विशिष्टलक्षणयापि कथं तत्सिद्धिः ? अतिरिक्तव्यञ्जनाङ्गीकारे तु धर्मिग्राहकमानेन तस्यास्तथाविधप्रतीतिजनकत्वेनैव सिद्धिरिति न किंचिद्बाधकमिति ध्येयम् । यद्यपि पावनत्वादिप्रतीतिरेव फलं न पावनत्वादिकम्, तथापि फलीभूतप्रतीतिपरिचायकतया पावनत्वादावप्युपचारात्प्रयोजनविशिष्टस्येत्यत्र प्रयोजनत्वो-

क्तिः। वस्तुतस्तु पावनत्वादिविशिष्टलक्षणायां पावनत्वादि-धीः शाब्दज्ञानान्नातिरिक्तेति न तस्याः फलत्वं युक्तमिति ध्येयम् ॥ ४४ ॥

उपसंहरति—

**तस्माल्लक्ष्ये प्रतीते तु पावनत्वादिधीर्मता ।**
**अभिधालक्षणाभिन्ना व्यञ्जनैवात्र कारणम् ॥**

न च गङ्गाशब्दस्य लक्षणया तीरप्रतिपादनेन व्यापारविरा-मात्कथं व्यञ्जनयापि पुनः पावनत्वादिप्रतीतिजनकतेति वाच्यम्, लक्ष्योपस्थित्यनन्तरं व्यञ्जनया वाक्यैकवाक्यता-वत्प्रयोजनमादायान्वयबोधसंभवेन विरामाभावाद्व्यङ्गयरूपा-भिधेयापर्यवसानेनाकाङ्क्षासत्त्वादित्याहुः ॥ ४५ ॥

अथाभिधामूलामपि व्यञ्जनां संभावयति—

**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।**
**संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥**

अनेकार्थस्य हरिरामादिशब्दस्य संयोगाद्यैर्वक्ष्यमाणैर्वाचक-त्वेऽन्वयप्रतियोगिस्मारकत्वे नियन्त्रिते नियमिते सति, अ-र्थान्तरस्मृतिजननप्रतिबन्धेनैकार्थस्मृतिजनकत्वे कृत इति यावत्। अवाच्यार्थस्यार्थान्तरस्य धीहेतुर्या व्यापृतिर्व्यापारः

सोऽञ्जनमित्यभिधीयते । अत्रापि यदि व्यञ्जनैव नाङ्गीक्रियेत तदानेकार्थशब्दप्रयोगे शक्तेः प्रकृतमात्रस्मृतौ नियमितत्वादप्रकृतार्थस्मृतिरनुभवसिद्धा न स्यात् । अतस्तदन्यथानुपपत्त्या व्यञ्जना समाश्रयणीयेत्यर्थापत्तिरुपदर्शितेति ध्येयम् ॥ ४६ ॥

संयोगादीनां नियन्तृत्वं हरिणोक्तमनुवदति—

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥**
**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥**

शब्दार्थस्य हरिरामादिनानार्थशब्दार्थस्य सर्वस्याप्यनवच्छेदे सत्यविशेषेण स्मरणे प्रसक्ते सति संयोगादयो विशेषस्मृतावेकमात्रस्मृतौ हेतव इति योजना ॥ ४७ ॥

अथ संयोगं लक्षयति—

**संयोगस्तु स्ववाच्यैकनिष्ठार्थान्तरसंगतिः ।**
**पुङ्खयत्वधिकां भूर्ति शङ्खचक्रधरो हरिः ॥**

संयोगो नाम स्ववाच्येष्वर्थेष्वेकार्थनिष्ठार्थान्तरसंबन्धः । तेन च संयोगेन क्वचिदभिधा नियम्यते । यथा—शङ्खचक्र-

धरो हरिरिति । अत्र शङ्खचक्रसंयोगेन हरिशब्दस्य शक्रादिसाधारणस्य श्रीपताविभिधा नियम्यते ॥ ४८ ॥

विप्रयोगमाह—

**विप्रयोगस्तु संयोगाभाव एव निगद्यते ।**
**अशङ्खचक्रः स हरिरपिनाको भवो भवान् ॥**

संयोगाभावरूपेण विप्रयोगेणाभिधा क्वचिन्नियम्यते । यथा— अशङ्खचक्र इति । अत्र शङ्खचक्रसंयोगाभावेन हरिशब्दस्येन्द्रादिसाधारणस्य नारायणेऽभिधा नियम्यते, प्रतिषेधस्य प्रसक्तिपूर्वकत्वेनान्यत्र शङ्खादिप्रसक्तेरभावेन प्रतिषेधासंभवात् । एवम्— अपिनाक इति । अत्र पिनाकसंयोगाभावेन भवशब्दस्य संसारसाधारणस्य शंकरेऽभिधा नियम्यते । विप्रयोगो विभाग इत्यपरे ॥ ४९ ॥

साहचर्यं लक्षयति—

**साहचर्यं स्ववाच्यैकवस्तुना सहचारिता ।**
**वन्दारुजनमन्दारौ वन्देऽहं रामलक्ष्मणौ ॥५०।**

स्ववाच्यभूतेषु वस्तुष्वेकेन वस्तुना पदार्थान्तरस्य प्रायशः सहचरितत्वं साहचर्यम् । तेन रामलक्ष्मणावित्यत्र सौमि-

त्रिसाहचर्याद्बलभद्रादिसाधारणस्य रामपदस्य दाशरथावभिधा नियम्यते ॥ ५० ॥

विरोधितामाह—

**सहानवस्थितिर्वध्यहन्तृत्वं च विरोधिता ।**
**दिनं निशां च संयुध्य रामोऽजैषीद्दशाननम् ॥**

विरोधिता नाम सहानवस्थितिर्वध्यघातकभावश्च । तत्र दिनं निशामित्यत्र निशापदस्य हरिद्रासाधारणस्य दिनेन सहानवस्थानलक्षणविरोधाद्रात्रावभिधा नियम्यते । रामपदस्य भार्गवादिसाधारणस्य दशाननेन सह वध्यघातकभावलक्षणविरोधाद्दाशरथावभिधा नियम्यते । प्राञ्चस्तु— 'बभूव भीमबकयो रामार्जुनगतिस्तयोः' इति विरोधित्वसाधर्म्योपमायां प्रयुक्ते रामार्जुनगतिरित्यत्र रामार्जुनपदयोर्वध्यघातकभावविरोधेन भार्गवकार्तवीर्ययोरभिधा नियम्यते— इत्याहुः । अत्र वृत्तिवार्त्तिककृतः— भार्गवे रामपदस्याभिधानियमने सति तद्विरोधप्रतिसंधानेनार्जुनपदस्य कार्तवीर्येऽभिधानियमनम्, तस्मिंश्च सति तद्विरोधप्रतिसंधानेन रामपदस्येत्यन्योन्याश्रयापत्तिः । तस्मादन्यतरपदस्य व्यवस्थितार्थत्व एव स्मृततद्विरोधप्रतिसंधानान्नानार्थपदस्याभिधानियमनमिति प्रागुक्तमेवात्रोदाहरणम्— इत्याहुः । अत्रापि दार्ष्टान्तिकयोर्भीमसेन-

बकासुरयोर्विरोधात्तद्दृष्टान्तयो रामार्जुनपदवाच्ययोरपि विरोधं सामान्यतो निश्चित्य पश्चाद्रामपदस्य भार्गवेऽर्जुनपदस्य कार्तवीर्ये चाभिधानियमनसंभवान्नान्योन्याश्रय इति नव्याः ॥

अथार्थं लक्षयति—

**अर्थः प्रयोजनं स्थाणुं संसारच्छित्तये नुमः ॥**

अत्र संसारच्छेदनरूपेण प्रयोजनेन स्थाणुशब्दस्य स्कन्धशून्यवृक्षसाधारणस्य शंकरेऽभिधा नियम्यते । चतुर्थ्यां प्रयोजननिर्देश एवार्थो नियामकः । 'स्थाणुं भज भवच्छिदम्' इति द्वितीयानिर्देशे त्वौचित्यं नियामकमिति विवेक इत्याहुः ॥ ५२ ।

अथ प्रकरणं लक्षयति—

**विदुः प्रकरणं वक्तृश्रोतृबुद्धिस्थतां विदः ।**
**जानाति सकलं देवः प्रश्नोऽयं वितथोऽधुना ॥**

जानातीत्यत्र वक्तृश्रोतृबुद्धिस्थतारूपप्रकरणेन देवपदस्य संबोध्येऽभिधा नियम्यते ॥ ५३ ॥

अथ लिङ्गं निरूपयति—

**लिङ्गं स्ववाच्यान्तरेभ्यो व्यावृत्तो धर्म इष्यते ।**
**जय्यो जगति केनैष कुपितो मकरध्वजः ॥**

अत्र सागररूपवाच्यान्तरव्यावृत्तेन कोपरूपलिङ्गेन मकरध्वजशब्दस्य मन्मथेऽभिधा नियम्यत इत्येके। मकरध्वजशब्दस्य मन्मथे प्रसिद्ध्यैव नियमनम्, न तु कोपरूपलिङ्गेन। अत एव मकरध्वजशब्दस्य सागरपरतया प्रयोगे निहतार्थत्वं वक्ष्यति। तस्मात्कुपितशब्देन यावत्कुपितोपस्थितिप्रसक्तौ मकरध्वजरूपचिह्नेन कुपितशब्दः कामदेवे नियम्यते। न च कुपितशब्दो नानेकार्थ इति वाच्यम्, अनेकव्यक्त्युपस्थापनसमर्थस्यैवात्रानेकार्थत्वेनाभिमतत्वात्। अत एव 'जानाति सकलं देवः' इत्यत्रानेकव्यक्त्युपस्थापकतयैवानेकार्थत्वं देवशब्दस्याभिप्रेत्याभिधाया नियमनमुक्तमिति मधुमतीकृतः। वस्तुतस्तु 'कुपितो भूभृत्' इत्यत्र कोपलिङ्गेन भूभृत्पदस्य पर्वतसाधारणस्य राज्यभिधा नियम्यत इति नव्याः। संयोगोदाहरणे द्रव्यसंयोगात्, इह गुणादिसंबन्धादिति भेदः॥

अथ शब्दान्तरसंनिधिमाह—

**सामानाधिकरण्यं यन्नियतार्थपदेन तत्।**
**शब्दान्तरस्य सांनिध्यं देवोऽव्यात्त्रिपुराहितः॥**

अत्र नियतार्थकत्रिपुराहितपदसामानाधिकरण्यरूपेण शब्दान्तरसंनिधिना देवपदस्य विरिञ्च्यादिसाधारणस्य शंकरेऽभिधा नियम्यते। अत्र वृत्तिवार्त्तिककृतः— समभिव्याहृत-

शब्दस्य नियतार्थकत्वे तत्प्रतिपादितलिङ्गादिनैव तन्नियमनम्, अन्यथा लिङ्गाद्युदाहरणेऽपि शब्दान्तरसंनिधेरेव नियामकत्वापत्तेः। अतो न नियतार्थशब्दसामानाधिकरण्यं शब्दान्तरसंनिधिः। किं तु नानार्थपदवाच्यैकार्थसंबन्ध्यर्थान्तरगृहीतसंकेतकनानार्थशब्दसमभिव्याहार एव। तस्य च 'निषधं पश्य भूभृतम्' इत्याद्युदाहरणम्। अत्र च जनपदविशेषसाधारणस्य निषधपदस्य पर्वतवाचिभूभृत्पदसंनिधिना पर्वतविशेषेऽभिधा नियम्यते। भूभृत्पदस्य च राजसाधारणस्य पर्वतविशेषवाचिनिषधपदसंनिधिना पर्वतेऽभिधा नियम्यते। न चान्योन्याश्रय इति वाच्यम्। न ह्यत्र समभिव्याहृतशब्देन तदर्थप्रतिपादनमभिधानियमनायापेक्ष्यते। किं तु स्वार्थेन गृहीतसंसर्गकेऽर्थे व्युत्पन्नो यः शब्दस्तत्समभिव्याहारमात्रम्। तथा च यथा संबन्धिदर्शनात्संबन्ध्यन्तरस्मृतिस्थले गृहीतसंबन्धस्य वस्तुनो दर्शनमात्रं संबन्ध्यन्तरस्मरणायापेक्ष्यते, न तु तद्दर्शनानन्तरं तत्संबन्धस्मरणमपीति नान्योन्याश्रयः; तथेहापि निषधभूभृत्पदयोरभिधानियमनाय गृहीतस्वस्वार्थसंसर्गकपदार्थव्युत्पन्नभूभृन्निषधपदसमभिव्याहारमात्रमपेक्ष्यत इति तत्तदर्थप्रतिपादनस्यानपेक्षितत्वान्नान्योन्याश्रयः। नन्वेवम् 'शङ्खचक्रधरो हरिः' इत्यादावपि शङ्खचक्रादिशब्दान्तरसंनिधिनैवाभिधानियमनं भविष्यतीति

ऽप्यर्थे पृथक्संयोगाद्युदाहरणमिति चेन्नैवम्; तत्र शङ्खचक्रादिशब्दानां नियतार्थतया श्रवणमात्रादर्थप्रतिपादकतया तत्प्रतिपादितार्थसंयोगादिभिरभिधानियमनसंभवात्। न च शब्दान्तरसंनिधिरपि तत्रास्तीति वाच्यम्। अस्तु, तथापि हरिशब्दाद्यभिधानियमनसमर्थे तदर्थसंयोगादिरूपसंनिहितसंबन्धेनान्तरङ्गे शङ्खचक्रादावुपस्थिते तस्यापि वाचकतया व्यवहितसंबन्धेन बहिरङ्गभूतः शब्दान्तरसंनिधिर्नोदाहरणत्वमर्हति। तस्मात् 'निषधं पश्य भूभृतम्' इत्यादौ यत्रोभयनानार्थतया न कस्याप्यर्थस्य प्रथममुपस्थितिस्तत्रैव बहिरङ्गस्यापि तस्य नियामकत्वेनोदाहरणत्वमिति न कश्चित्संकरः। एवं च 'रामार्जुनगतिस्तयोः' इत्यत्रापि शब्दान्तरसंनिधिरेव नियामकः। तथा 'व्यालो दानेन राजते' इत्यत्रापि शब्दान्तरसंनिधिनैव व्यालदानपदयोरहिखण्डनदुष्टगजमदजलसाधारणयोर्दुष्टगजमदजलयोरभिधा नियम्यते —इत्याहुः। तच्चिन्त्यम्। एवं सति निषधपदवाच्यजनपदविशेषसंबन्धिनि राजन्यपि भूभृच्छब्दस्य गृहीतव्युत्पत्तिकत्वाद्भूभृत्पदस्य निषधपदेन जनपदविशेषस्मृतावपि नियामकता तुल्येति न कुत्राप्यभिधानियमनं स्यात्। न च सामानाधिकरण्यनिर्देशानुपपत्तिज्ञानसहायेन शब्दान्तरसंनिधिनात्राभिधानियमनमिति वाच्यम्, तर्ह्यावश्यिकादौचित्यादेवाभिधानियमनसंभवेन

शब्दान्तरसंनिधिवैयर्थ्यापत्तेः। न चात्रौचित्यावश्यंभावेऽपि 'व्यालो दानेन राजते' इत्यत्र व्यालपदवाच्यार्थान्तरसंबन्धिन्यपि दानपदस्य गृहीतसंकेतत्वाभावेनौचित्यानपेक्षणाच्छब्दान्तरसंनिधिनैव विशेषस्मृतिरिति वाच्यम्। तत्रापि व्यालपदस्य स्वार्थप्रतिपादनं विना न दानपदेऽभिधानियमनसंभवः पदान्तराभिधानियमनस्य तदर्थसंबन्ध्यर्थप्रतिपादकत्वज्ञानं विनानुपपत्तेः, एवं दानपदस्यापीत्यन्योन्याश्रयः। न च तदर्थसंबन्धिगृहीतव्युत्पत्तिकपदस्यैव तदर्थस्मृतिहेतुत्वं संभवतीत्युक्तमिति वाच्यम्; तर्हि 'गङ्गायां घोषः' इति लक्षणास्थलेऽपि तीररूपार्थसंबन्धिपूरगृहीतशक्तिकगङ्गापदात्पूरस्मृतिं विनैव तीरस्मृत्यापत्तेः, तथा हस्तिपदाद्गजस्मृतिं विनैव हस्तिपकस्मृत्यापत्तेश्च। न चैवं संबन्धिदर्शनात्संबन्ध्यन्तरस्मृतिस्थलेऽपि तत्संबन्धित्वज्ञानं संबन्ध्यन्तरस्मृतिसमयेऽप्यपेक्ष्यं स्यादिति वाच्यम्, परम्परासंबन्धिस्मृतौ तदपेक्षायामपि साक्षात्संबन्धिस्मृतौ न तदपेक्षेति कार्यानुरोधेन कल्पनात्। अत एव पदेन शक्यस्मृतौ न शक्तिस्मृत्यपेक्षा, लक्ष्यस्मृतौ तु लक्ष्यस्य शक्यसंबन्धज्ञानापेक्षा च दृश्यते। तस्मादुभयनानार्थपदस्थलेष्वौचित्यादिनैवाभिधानियमनम्। 'देवोऽव्यात्त्रिपुराहितः' इत्यादावेव शब्दान्तरसंनिधिना तन्नियमनम्। न च पदान्तरस्य नियतार्थत्वे त-

त्प्रतिपादितलिङ्गेनैव तन्नियमनमित्युक्तमिति वाच्यम्, तद्गत-गुणक्रिययोरेव लिङ्गत्वेन विवक्षितत्वात्। न च तद्गतासाधारणधर्ममात्रस्यैव लिङ्गत्वमपि विवक्ष्यतामिति वाच्यम्; स्वतन्त्रेच्छानां प्राचां नियोगपर्यनुयोगानर्हत्वात्, अन्यथा तदर्थसंबन्धिमात्रस्य लिङ्गत्वं विवक्षित्वा संयोगसाहचर्यादीनामपि लिङ्गान्तर्भावपर्यनुयोगस्य दुष्परिहरत्वादिति दिक्॥

अथ सामर्थ्यं लक्षयति—

**सामर्थ्यं स्यात्कारणत्वं मत्तोऽयं मधुना पिकः॥**

अत्र कोकिलमदकारणत्वरूपसामर्थ्येन मकरन्दादिसाधारणस्य मधुशब्दस्य वसन्तैकदेशे चैत्रमासेऽभिधा नियम्यते। न चात्रार्थाभेदः। तत्र प्रयोजनेनाभिधानियमनम्। अत्र तु कार्येण। कार्यं चानिष्टरूपमपि संभवतीति महान्भेदः। यत्र हेतुत्वमार्थं तत्रार्थः, यत्र तच्छाब्दं तत्र सामर्थ्यमिति वा भेद इत्याहुः॥ ५६॥

अथौचितीमाह—

**औचित्यन्वययोग्यत्वं पातु वो दयितामुखम्॥**

अत्र पात्विति शब्दस्य सुखसमर्पणदुःखनिर्हरणतदुभयानुकूलव्यापारादिसाधारणस्य दयितामुखे स्वरूपेण सुखसमर्प-

कत्वाद्ययोगात्तदनुकूलव्यापारात्मनि सांमुख्ये समभिव्याहृत-पदार्थान्वययोग्यतारूपेणौचित्येनाभिधा नियम्यते ॥ ५७ ॥

अथ देशमाह—

**देशः पुरादिर्भात्यत्र नगरे परमेश्वरः ॥**

अत्र नगररूपदेशेन परमेश्वरशब्दस्य शंकरादिसाधारणस्य राजन्यभिधा नियम्यते । यद्यप्यत्र नगरभानरूपलिङ्गेनापि तन्नियमनं संभवति, तथापि तदस्फुरणदशायां देशस्यापि नियामकतेति ध्येयम् । नगरस्य राजनिष्ठत्वाभावेन तन्निष्ठ-द्रव्यसंबन्धरूपेण संयोगेन नात्र नियमनशङ्केत्याहुः ॥ ५८ ॥

अथ कालमाह—

**कालो निशादिस्तामस्यां चित्रभानुर्विराजते ॥**

अत्र निशारूपकालेन रविसाधारणस्य चित्रभानुशब्दस्य वह्नावभिधा नियम्यते । आदिपदाद्दिवसवसन्तादिपरिग्रहः । ततश्च 'दिवसे चित्रभानुर्विभाति' इत्यत्र रवौ, 'वसन्ते पुंनागो भाति' इत्यत्र पुंगजसाधारणस्य पुंनागपदस्य नमेरौ चाभिधानियमनमित्याद्यूह्यम् ॥ ५९ ॥

अथ व्यक्तिमाह—

**व्यक्तिः पुंलिङ्गमुख्या स्यान्मित्रं मित्रश्च राजतः ॥**

अत्र रविसुहृत्साधारणस्य मित्रशब्दस्य नपुंसकलिङ्गेन सुहृदि पुंलिङ्गेन रवौ चाभिधा नियम्यते ॥ १० ॥

**उदात्तादिः स्वरः स स्यादिन्द्रशत्रुरिति श्रुतौ ॥**

उदात्तानुदात्तादिः स्वरः । स च 'स्वाहेन्द्रशत्रुर्वर्धस्व' इत्यादिश्रुतावेवाभिधानियामको न तु काव्ये । तथा हि— शत्रुशब्दः शातयतेरुपजनितः । ततश्चेन्द्रशत्रुपदे यद्यादेरिकारस्योदात्तत्वं तदा बहुव्रीहिः; बहुव्रीहिपक्षे चेन्द्रः शत्रुः शातयिता यस्येतीन्द्रस्य शातयितृत्वम्; यदि चान्त्यस्य शत्रुशब्दवर्तिन उकारस्योदात्तत्वं तदा षष्ठीतत्पुरुषः; तथात्वे चेन्द्रस्य शत्रुः शातयितेति वृत्रस्य शातयितृत्वं लभ्यत इतीन्द्रशत्रुपदस्य स्वरभेदेनार्थद्वये प्रसक्ते, आद्युदात्तस्वरेणेन्द्रस्य शातयितृत्वेऽभिधा नियम्यते । ननु— 'सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषितां दूरादेव विवर्जिताः सुरभयः स्रग्गन्धधूपादयः । कोपं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना सत्यं त्वद्विरहाद्भवन्ति दयिते सर्वा ममान्धा दिशः ॥' इत्यत्र 'दृष्टे' इति पदस्य प्लुतस्वरेण सप्तम्यन्तत्वभ्रमव्युदासद्वारा मयीत्येतद्विशेषणत्वव्यावर्तनेन दयितायां दृष्टित्वारोपेण तत्संबोधनान्तत्वसूचनद्वारा चक्षूरूपार्थविशेष-

ऽभिधानियमनं दृश्यते—इति चेन्न; तथापि तत्र दृष्टिदृष्टश-ब्दयोर्भिन्नत्वेनानेकार्थप्रतिपादनसमर्थैकशब्दत्वरूपनानार्थश-ब्दत्वाभावेन प्लुतस्वरस्य नाभिधानियामकत्वं किं तु प्रकृ-त्यन्तरसूचकत्वमेव। वस्तुतस्तु, उदात्तादिस्वराणां यद्यपि काव्येषु नाभिधानियामकत्वं तथापि काकुस्वरस्य काव्येष्व-प्यभिधानियामकत्वमस्त्येव। तथा हि— 'तरुणतातरणि-द्युतिसंभृतद्रढिम तत्कुचकुम्भयुगं तथा। अनलसंगतितापमु-पैतु नो कुसुमचापकुलालविलासजम्॥' मन्मथकुम्भकार-चातुर्यजनितं यौवनदिनकरकिरणसंपादितदाढ्यं दमयन्ती-स्तनघटद्वयं नलसंगत्यभाव एवानलस्य वह्नेः संगतिस्तया तापमुपैतु नो— इत्यत्र नञो निषेधसाधारणस्य काका विधा-वभिधा नियम्यते। न च नञो निषेधार्थत्वमेव, न विध्यर्थ-त्वमपीति कथं नञो विधावभिधानियमनमिति वाच्यम्, अव्ययानामनेकार्थत्वेन नञो विध्यर्थत्वस्याप्यविरोधात्, अ-न्यथोक्तस्थले विधिप्रतीतिर्न स्यात्काकोरपदत्वेनार्थत्वाभा-वात्। न चैवं काकुं विनापि नञा विधिप्रतीतिः कदाचि-द्भवेदिति वाच्यम्, केषांचित्पदानां द्योतकाभावेऽर्थविशेषप्र-त्यायकत्वाभावस्य स्वभावसिद्धत्वात्। अत एव धातूनामने-कार्थत्वेऽपि तिष्ठतिधातोः प्रोपसर्गाभावे गमनरूपार्थविशेष-प्रत्यायकत्वाभावः सर्वसिद्ध इति ध्येयम्। वस्तुतस्तु, 'आ-

ह्मण ३ आगच्छ' इति वाक्ये संनिकृष्टविप्रकृष्टब्राह्मणसाधारणस्य ब्राह्मणपदस्य प्लुतस्वरेण दूरस्थे ब्राह्मणेऽभिधा लोके नियम्यत इति द्रष्टव्यम् ॥ ६१ ॥

'स्वरादयः' इत्यत्रादिशब्देनाभिनयापदेशादयो गृह्यन्ते । तत्राभिनयो विवक्षितार्थस्वरूपप्रदर्शको हस्तादिव्यापारः यथा— 'एद्दहमेत्तत्थणिआ एद्दहमेत्तेहि अच्छिपत्तेहिं । एद्दहमेत्तावत्था एद्दहमेत्तेहि दिअसेहिं ॥'– एतावन्मात्रस्तन्येतावन्मात्राभ्यामक्षिपत्राभ्याम् । एतावन्मात्रावस्थैतावन्मात्रैर्दिवसैः ॥ इदं च शैशव एव प्रणयिनीं परित्यज्य देशान्तरं गतस्य कालान्तरे तां स्मृतवतः कस्यचित्कामिनो वचनम् । अत्राक्षिपत्राभ्यां तामरसपत्रसदृशाभ्यामक्षिभ्याम् । उपलक्षणतृतीयेयम् । अत्र स्थौल्यवैशाल्यावस्थाविशेषकालविशेषप्रदर्शकहस्तव्यापारैरेतावन्मात्रपदस्य स्थौल्यादिविशेषेऽभिधा नियम्यते ॥ अपदेशो नाम विवक्षितार्थस्य शृङ्गग्राहिकया निर्देशः । यथा– 'इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् । विषवृक्षोऽपि संवर्ध्य स्वयं च्छेत्तुमसांप्रतम् ॥'– इदं हि सुरजनाभ्यर्थिततारकासुरनिग्रहस्य चतुर्मुखस्य वचनम् । अत्र 'इतः' इति स्वात्मनिर्देशेन तस्य वक्तरि परमेष्ठिन्यभिधा नियम्यते ॥ इदमत्रावधातव्यम्— यत्र तु नानार्थ-

शब्दस्यानेकस्मिन्नर्थेऽभिधानियामकमविशिष्टं तत्र नान्यतरस्मिन्नभिधा नियम्यते, नियामकाभावात् । यथा 'सर्वदोमाधवः पायाद्यो गङ्गां समधीधरत्' इत्यत्र हरिहरयोर्द्वयोरपि स्तुत्यतया प्रकरणमविशिष्टमिति । योऽगं गोवर्धनं कृष्णावतारे, गां भूमिं च वराहावतारे समदीधरत्सर्वदः स माधवः श्रीपतिः पायादित्यर्थे, यो गङ्गां जाह्नवीं समदीधरत्स उमाधवः पार्वतीपतिः सर्वदा पायादित्यर्थे चाभिधैव व्यापारः; अत एव तत्र श्लेषालंकार इत्यधमकाव्यत्वमाहुः । यत्र तु संयोगादिभिरर्थान्तरविषयाभिधानियमनेऽप्यनेकार्थशब्दादर्थान्तरप्रतीतिस्तत्र नाभिधा तस्या अन्यत्र नियमितत्वात्, नापि लक्षणा मुख्यार्थबाधाद्यभावात् । अपि तु व्यञ्जनैव तत्र व्यापारः । न चाभिधाया इव व्यञ्जनाया अपि प्रकरणादिना नियमनेन तयापि न तन्निर्वाह इति वाच्यम्, तस्या धर्मिग्राहकमानेन प्रकरणाद्यनियम्यतयैव सिद्धेः । अत एव काव्यान्तर्निविष्टस्य प्राकरणिकार्किंचिदर्थनियन्त्रिताभिधाव्यापारस्याप्यसभ्यपदार्थान्तरप्रत्ययहेतोः पदस्य हेयत्वम् ! अन्यथा तत्राभिधाया इव व्यञ्जनाया अपि प्रकरणादिना नियन्त्रणे सत्यसभ्यार्थान्तरप्रत्ययासंभवात् 'यस्याननं योनिरुदारवाचाम्——' इत्यादावश्लीलाख्यदोषो न स्यात् । तस्मात्, 'संयोगादिभिरभिधा शृङ्खलिता यत्र

कुण्ठतामेति । अर्थान्तरावगमने व्यञ्जनमेव क्षमं तत्र ॥' इति ॥ अत्र वृत्तिवार्त्तिककृतः-- 'असावुदयमारूढः कान्तिमान्रक्तमण्डलः । राजा हरति लोकानां हृदयं मृदुभिः करैः ॥' इत्यादौ प्राकरणिकेऽर्थे प्रकरणवदप्राकरणिकेऽपि राजकरमण्डलादिशब्दानां परस्परान्वययोग्यनृपतितद्ग्राह्यधनदेशादिवाचिना समभिव्याहाररूपमभिधानियामकमस्तीत्यर्थद्वयस्यापि प्राकरणिकत्व इव प्राकरणिकाप्राकरणिकरूपत्वेऽप्युभयत्राप्यभिधैव व्यापारः, यथोक्तपदसमभिव्याहारस्यापि नानार्थपदवाच्यैकार्थसंबन्ध्यर्थान्तरगृहीतसंकेतकनानार्थशब्द समभिव्याहाररूपशब्दान्तरसंनिधित्वेन प्रकरणवदभिधानियामकत्वसत्त्वात् । यैस्तु नियतार्थपदसंनिधिरेव शब्दान्तरसंनिधिरित्युच्यते तैरप्युक्तस्थलेऽर्थान्तरप्रतीतेरनुभवसिद्धित्वेनार्थद्वयानुकूलानेकपदसंघटनात्मकं नियामकान्तरमवश्यमास्थेयम् । न चाप्राकरणिकेऽर्थं उक्तरूपमेकमेव नियामकं प्राकरणिकेऽर्थे तु तच्च प्रकरणं चेति नियामकाधिक्यात्तत्रैवाभिधा स्यादिति वाच्यम् । प्रकरणादीनां प्रत्येकमभिधानियमनसमर्थतया तेषु कस्यचिदपि समवधाने स्मृतिसामग्री पुष्कलेति किं तद्बाहुल्येन ? यत्राप्येकमेव पदं नानार्थमप्राकरणिकेऽपि तात्पर्यवत्, यथा 'अन्धकाद्विरदध्वंसी देयात्पञ्चाननः श्रियम्' इत्यादौ, तत्रापि समभिव्याहृतद्विरदपदप्रतीतगजविरोधादिक-

मप्राकरणिके सिंहेऽपि पञ्चाननपदस्याभिधानियामकमस्त्येव। यत्र तु 'यस्याननं योनिरुदारवाचाम्' इत्यादावश्लीले नैतादृशं नियामकं तत्रापि बुभुत्सितार्थव्यासक्तस्य मनसस्तमुल्लङ्घ्याsह्ये दुर्गन्धादौ प्रवृत्तिवत्प्रकरणनियन्त्रितस्यापि शब्दस्य तदुल्लङ्घनेन विषयस्वाभाव्यादश्लीलेऽपि प्रवृत्तिरिति न क्वापि शक्तिविषये व्यक्तिरङ्गीकार्या। यदि चैवंविधानि नियामकानि नाद्रियेरंस्तदोदाहृतस्थलेषु व्यञ्जनाव्यापारोऽपि दुर्घटः। तथा हि—प्रकरणादिकमुल्लङ्घ्य व्यञ्जनाव्यापारेणाप्यर्थान्तरप्रत्ययो न सर्वत्र वक्तुं शक्यते, प्रकरणादीनामभिधानियामकत्वकल्पनस्य वैयर्थ्यापत्तेः। तद्धि नादृष्टार्थम्। किं तु 'सैन्धवमानय' इत्यादावेकार्थमात्रपरनानार्थशब्दस्थलेऽर्थविशेषस्मृतिव्यवस्थार्थं तत्। यदि तत्रापि व्यञ्जनाव्यापारेणार्थान्तरप्रत्ययः स्यात्तदा कथमेषा व्यवस्था सिध्येत्? न ह्यभिमतानभिमतक्षेत्रसाधारणस्य जलाशयस्याभिमतक्षेत्रगामिनीमेकां कुल्यां विधायानभिमतक्षेत्रगामिनः कुल्यान्तरस्यापि कल्पने जलस्याभिमतक्षेत्रैकगामित्वव्यवस्था कृता भवति। तथा च यत्र कवयितुश्चमत्कारायाप्राकरणिकेऽप्यर्थे तात्पर्यं यत्र चाश्लीलदोषस्तत्रैव व्यञ्जनाव्यपारोन्मेषो न सर्वत्र। तादृशस्थले च प्रकरणवदस्मदुक्तानामप्यभिधानियामकत्वसंभवाद्व्यर्थस्तत्र व्यक्तिकल्पनापरिश्रमः। किं च, दुर्वारश्च

तत्र व्यक्तिवादिमतेऽप्यभिधाव्यापारः। तथा हि—यदि शक्तिरभिधा तदानीमप्राकरणिकेऽपि सा दुर्निवारा। यदि च काव्यप्रकाशिकाकारोक्तरीत्या शक्यार्थप्रतिपादकत्वरूपः शब्दनिष्ठो व्यापारः सोऽप्यस्त्येव। न हि तत्राप्राकरणिकशक्यप्रतिपत्तेः शब्दादन्यज्जनकम्। न च शब्दस्यैव तत्प्रतिपादकत्वेऽपि न तत्र शक्तिग्रहापेक्षेति वाच्यम्, तर्ह्यगृहीतशक्तिकस्यापि तत्र व्यञ्जनयार्थान्तरप्रतीत्यापत्तेः। ननु—शक्त्या साक्षात्प्रतिपादकत्वमभिधा। साक्षादित्यविशेषणे मुख्यार्थशक्तिग्रहमपेक्ष्य मुख्यार्थप्रतिपादनव्यवधानेन तत्संबन्ध्यर्थान्तरप्रतिपादनरूपाया लक्षणाया अप्यभिधात्वप्रसङ्गात्। तथा च प्रागेवानुवर्तमानेन प्रकरणेन प्राकरणिकार्थोपस्थापनं शीघ्रभावीति तद्व्यवधानेनार्थान्तरप्रतिपादनं नाभिधा—इति चेन्न; 'तद्विषयकशक्तिग्रहमपेक्ष्य तत्प्रतिपादनमभिधा' इति विशेषणे विनैव साक्षात्त्वविशेषणमनतिप्रसङ्गात्तत्पदरूपेण तत्पदभङ्गकृतपदान्तररूपेण वार्थान्तरप्रतिपादनव्यवधानराहित्यरूपसाक्षात्त्वविशेषणस्य गुरुत्वात्। तथा विशेषणे 'सर्वदो-माधवः पायाद्यो-गङ्गां समदीधरत्' इत्यत्र शंकरपक्षे एकपदत्वेन गङ्गामित्यत्र झटित्यर्थप्रतीतिः, वैकुण्ठपक्षे तु अगं गोवर्धनं गां भूमिमिति पदभङ्गक्लेशेन गोपदस्य भूमौ प्रसिद्धिप्राचुर्याभावाच्च विलम्बे-

नार्थप्रतीतिरित्यनुभवसिद्धत्वेन तत्राभिधाविषयेऽपि तदभावापत्तेः। किं च, 'कलापभूषणं सेवे नीलकण्ठं गुहाश्रयम्' इत्यादौ प्रकृताप्रकृतोभयपरे यत्र प्रकृतशंकरपक्षे चन्द्रपरस्यप्रसिद्धतरमप्रकृतबार्हिणपक्षे तु बर्हे प्रसिद्धतरं कलापपदम्, तत्र प्रसिद्धिप्राचुर्येणाप्रकृतार्थप्रतीतिरेव प्राथमिकत्वेनाप्रकृतेऽभिधा प्रकृते व्यक्तिरिति वैपरीत्यापत्तिः, प्रकरणमुल्लङ्घ्यापि प्रसिद्धतरार्थस्यैव प्रथमं स्मृतेः। अत एव 'द्व्यर्थमप्रसिद्धेऽर्थे प्रयुक्तं निहतार्थकम्' इत्युक्तलक्षणस्य निहतार्थस्य काव्यदोषत्वमभ्युपगम्यते, प्रसिद्धतराप्रकृतार्थप्रतीत्या प्रकृतार्थप्रतीतिव्यवधानात्। न च निहतार्थस्य दोषत्वात्तत्प्रयोगोऽर्थद्वयाविवक्षास्थलेऽपि काव्येषु न संभवतीति वाच्यम्; श्लेषयमकादिषु वृद्धैर्निर्दोषत्वस्योपपादितत्वात्, 'देवोऽन्धकक्षयकरो बर्हिपत्रप्रियोऽवतात्।'— अन्धकासुरस्य क्षयं नाशं करोतीत्यन्धकक्षयकरः, बर्ही शिखी पत्रं वाहनं यस्य स बर्हिपत्रो गुहः स प्रियो यस्य स तथा, तादृशो देवः शंकरोऽवतात्। तथान्धकानां वृष्णिप्रभेदानां क्षयं गृहं करोतीति स तथा, बर्हिणः शिखिनः पत्रं पिञ्छं प्रियं यस्य स तथा, तादृशो देवः कृष्णोऽवतात्।— इत्यत्र शंकरपक्षे निहतार्थस्य बर्हिपत्रपदस्य कृष्णपक्षे निहतार्थस्यान्धकक्षयपदस्य च प्रयोगदर्शनाच्च। तस्माच्छब्दस्यार्थप-

तिपादनोपयोगितत्प्रत्यासत्तिरूपधर्मभेद एव वृत्तिभेदप्रयोजको न तु तद्भेदाभावे प्रतिपादनगतसाक्षात्त्वव्यवहितत्वभेदः । शक्तिशक्यसंबन्धरूपप्रतिपाद्यप्रत्यासत्तिभेदेनैवाभिधालक्षणयोर्भेददर्शनात्, तद्भेदाभावे च प्रसिद्धाप्रसिद्धार्थगोचरशब्दश्लेषस्थले व्यङ्ग्याव्यङ्ग्यस्थले चार्थद्वयप्रतीत्योः साक्षात्त्वव्यवहितत्वभेदे सत्यप्यभिधालक्षणावृत्त्यतिरिक्तवृत्त्यदर्शनाच्चेत्यप्रयोजकस्याव्यवस्थापादकस्य च साक्षात्त्वविशेषणस्यायोगात् 'तद्विषयकशक्तिग्रहमपेक्ष्य तत्प्रतिपादकत्वमेवाभिधा' इत्यप्रकृतेऽप्यर्थेऽभिधाव्यापारो दुर्वारः । तस्मात्प्रस्तुताप्रस्तुतोभयपरेऽपि प्रस्तुतोभयपर इवाभिधैव वृत्तिः । तदुपस्थितेषु च पदार्थेष्वाकाङ्क्षादिसहकारिवशादुभयविधवाक्यार्थप्रत्यय इत्यप्रस्तुतविषये न पदार्थप्रतीतये नापि वाक्यार्थप्रतीतये व्यञ्जनोपगन्तव्या । यत्तु प्राचामप्रस्तुते शब्दशक्तिमूलव्यञ्जनावृत्त्यभिधानम्, तदप्रस्तुतार्थप्रतीतिमूलके यथा 'उदयमारूढः' इत्यादिविशेषणविशिष्टः पृथिवीपतिः स्वल्पैर्ग्राह्यधनैर्लोकस्य हृदयं रञ्जयति, एवं तथाविधश्चन्द्रमा मृदुलैः किरणैरित्यादिरूपेण प्रतीयमान उपमाद्यर्थालंकारे व्यञ्जनावश्यंभावदृढीकरणाभिप्रायेण, न तु तत्रापि वस्तुतो व्यञ्जनास्तित्वाभिप्रायेण । 'आच्छादितायतदिगम्बरमुच्चकैर्गामाक्रम्य च स्थितमुदग्रविशालशृङ्गम् । मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेन-

मुद्वीक्ष्य को भुवि न विस्मयते गिरीशम् ॥' इत्यादीनां शब्दशक्तिमूलोपमालंकारध्वनेरेवोदाहरणत्वेन तैरपि लिखितत्वात्। 'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्' इति श्लेषापादितविशेषणसाधारण्यनिमित्तकसमासोक्त्यलंकारोदाहरणे रागादिशब्दानामप्रस्तुतेऽप्यभिधावृत्तेरेव श्लेषव्यवहारेण स्फुटीकरणाच्च। न च तत्र स्वतोऽप्रस्तुतयोरपि कामिनोः प्रस्तुतशशिनिशयोरवच्छेदकत्वेनान्वयान्न तत्र तयोः सर्वथैव प्रकरणासंभव इति वाच्यम्, 'विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः' इति लक्षणानुरोधेनाप्रस्तुतप्रतिपत्तेर्विशेषणसाम्याधीनत्वेनाप्रस्तुतस्य प्रकरणसंबन्धावगमात्प्रागेव तद्विशेषणेष्वभिधाया वाच्यत्वात्, प्रस्तुतोपमानत्वादिना यथाकथंचिद्वाविप्रकरणसंबन्धस्यात्रापि संभवाच्च, सर्वथा प्रस्तुतासंबद्धस्याप्रस्तुतस्य क्वापि कविविवक्षागोचरत्वाभावात्। नन्वेवं शब्दशक्तिमूलालंकारध्वनेः 'आच्छादितायतदिगम्बरम्—' इत्याद्युदाहरणसत्वेऽपि तन्मूलो वस्तुध्वनिर्लुप्येत निरलंकारेऽप्रस्तुतार्थ एव वस्तुध्वनेरुदाहरणीयत्वात्, तत्र च त्वयाभिधाङ्गीकारादिति चेन्न; यत्राप्रस्तुतेऽर्थेऽभिधयैव प्रतिपाद्यमाने तन्मूलमनभिधेयं वस्तु प्रतीयते तत्र तदङ्गीकारादिति। यथा 'शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम्'

इति । अत्र ह्यशनिशब्देन प्रस्तुताद्वज्रादन्यस्मिन्समभिव्या-
हृतशनिविरुद्धाशनिरूपेऽप्यर्थेऽभिधयैव प्रतिपाद्यमाने विरु-
द्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इत्युपश्लोक्यस्य
प्रभावातिशयः प्रतीयते । इत्थमेव च प्राचीनैरपि शब्दश-
क्तिमूलो वस्तुध्वनिरुदाहृतः । नन्वेवं प्रस्तुतार्थपर्यालोचन-
लभ्ययोरेव वस्त्वलंकारयोर्व्यक्त्युपगमे तत्रार्थशक्तिमूलैव
व्यक्तिर्भवेदिति पृथगर्थशक्तिमूलध्वनेः शब्दशक्तिमूलो ध्व-
निर्न स्यादिति चेन्मैवम्; तथात्वेऽपि प्रस्तुताप्रस्तुतोभयसा-
धारणशब्दसापेक्षतया प्रस्तुतमात्रपरपर्यायशब्दान्तरपरिवृ-
त्त्यसहिष्णुत्वेन च ततस्तस्य पृथक्त्वव्यवस्थितेः । एवमन्ये-
ऽप्यप्रस्तुतशक्ये व्यक्त्यनुपगमे संभाविताः क्षुद्रोपद्रवा निर
सनीयाः ।— इत्याहुः । अत्र ब्रूमः— यदुक्तम् 'असावुद-
यमारूढः—' इत्यादौ प्राकरणिकार्थे प्रकरणवदप्राकरणि-
कार्थेऽपि नानार्थपदवाच्यैकार्थसंबन्ध्यर्थान्तरगृहीतसंकेतक-
नानार्थशब्दसमभिव्याहारलक्षणः शब्दान्तरसंनिधिरभिधा-
नियामकोऽस्तीत्यप्राकरणिकार्थस्मृतिरप्यभिधयैव स्यादिति त-
दयुक्तम; नियतार्थपदसमभिव्याहार एव शब्दान्तरसांनिधिः
न तूक्तरूपः इत्युक्ततया शब्दान्तरसंनिधेरेव तत्राभावात् ।
अस्तु वा तादृशनानार्थशब्दसमभिव्याहार एव शब्दान्तर-
संनिधिः । तथाप्युक्तस्य शब्दान्तरसंनिधेः प्राकरणिकाप्रा-

करणिकार्थद्वयसाधारणत्वेनाप्राकरणिकार्थेऽभिधानियमनहेतुत्वासंभवेनासंजातप्रतिपक्षेण प्रकरणेन प्रकृतार्थ एवाभिधाया नियमनान्नाभिधयार्थान्तरस्मृतिसंभवः। न चैवमप्युक्तस्थलेऽर्थान्तरप्रतीतेरनुभवसिद्धत्वेनार्थद्वयानुकूलानेकपदसंघटनात्मकस्य शब्दान्तरसंनिधेरेव तत्र प्रयोजकत्वमास्थेयमित्युक्तमिति वाच्यम्, सत्यम्; तस्य व्यञ्जनासहकारितयैव तत्प्रयोजकत्वं युक्तं न त्वभिधासहकारितया, तस्याः प्रकृतार्थ एव प्रकरणेन शृङ्खलितत्वात्। नन्वेवमपि 'अन्धकद्विरदध्वंसी देयात्पञ्चाननः श्रियम्' इत्यादौ यत्र द्विरदादिपदप्रतीतगजविरोधादिरूपमप्रकृतार्थेऽप्यभिधानियामकमस्ति तत्र का गतिरिति चेत्; तत्रापि प्रकरणस्य नियामकान्तरापेक्षया बलवत्त्वेन तद्विरोधे सत्युक्तनियामकान्तरस्याप्यभिधानियमनहेतुत्वासंभवात्। अत एव यमलार्जुनवृक्षभङ्गप्रकरणे 'कृष्णार्जुनालोकनजातविस्मयाः' इत्यत्र प्रसिद्धिप्राचुर्यसाहचार्ययोः पदार्थस्मृतिप्रयोजकयोः सत्त्वेऽपि प्रकरणाद्वृक्षविशेषस्मृतिरेव जायते। न च प्रकरणस्य विशेषस्मृतिनियामकत्वे व्यञ्जनया वा कथं पदार्थान्तरस्मृतिः स्यादिति वाच्यम्, प्रकरणस्याभिधामात्रनियमहेतुत्वेन प्रकारान्तरेण तत्स्मृतौ बाधकाभावात्। न च प्रकरणस्याभिधानियामकत्वकल्पनं नादृष्टार्थं किं तु नानार्थकशब्दस्थलेऽर्थविशेषस्मृ-

तिव्यवस्थार्थम्, तद्यदि तत्रापि व्यञ्जनयार्थान्तरस्मरणं तदा कृतं तस्य नियामकत्वकल्पनयेति वाच्यम्, एकार्थपर-नानार्थस्थले 'सैन्धवमानय' इत्यादावेवार्थान्तरस्मृतिप्रतिब-न्धार्थत्वेन तत्कल्पनस्यार्थवत्त्वात्। तत्र च नानार्थस्थलत्वा-वच्छेदेन सामान्यतोऽभिधानियामकत्वेन क्लृप्तस्य प्रकरण-स्यानेकार्थपरनानार्थस्थलेऽप्यभिधानियामकत्वे सिद्धेऽनुभूय-मानस्यार्थान्तरप्रत्ययस्य व्यञ्जनामन्तरेणानिर्वाहात्तत्कल्पना-वश्यंभावात्। एतेन, यदप्युक्तम्—शब्दान्तरसंनिध्यादेरपि विशेषस्मृतिनियामकत्वानङ्गीकारे 'सैन्धवमानय' इत्येकार्थ-परनानार्थस्थले व्यञ्जनयापि नार्थान्तरप्रतीतिः, 'असावुदय-मारूढः—' इत्याद्यनेकपरनानार्थस्थले तु व्यञ्जनयार्थान्तर-प्रतीतिरिति व्यवस्था न स्यादविशेषात्। ततश्च शब्दान्तर-संनिध्यादेरभावादेकार्थपरस्थले नार्थान्तरप्रतीतिरनेकार्थपर-स्थले तु तत्सद्भावादर्थान्तरप्रतीतिरिति तेषां व्यञ्जनानियामकत्वं भवताप्यास्थेयम्। तद्वरं तत्रापि तेषामभिधानियाम-कत्वकल्पनमेवेति,— तदपि परास्तम्; एकार्थपरनानार्थस्थले नानार्थस्थलत्वावच्छेदेन प्रकरणस्याभिधानियामकत्वेन क्लृ-प्ततयानेकार्थपरनानार्थस्थलेऽपि प्रकरणेनाभिधानियमनाव-श्यंभावाच्छब्दान्तरसंनिध्यादेर्व्यञ्जनासहकारित्वकल्पनस्या-प्रामाणिकत्वात्। एवं चाश्लीलस्थलेऽपि व्यञ्जनयैवाश्ली-

क्षार्थप्रतीतिसंभवे प्रकरणस्याभिधानियामकत्वसंकोचकल्पनमयुक्तम्। यदप्युक्तं तद्विषयकशक्तिग्रहमपेक्ष्य तत्प्रतिपादनमभिधा, सा चाप्रकृतार्थप्रतिपादनेऽप्यस्त्येवेति; तदपि न। तद्विषयकशक्तिग्रहस्य तत्प्रतिपादने किं साक्षादपेक्षात्र विवक्षिता, किं वा परम्परया, आहोस्वित्साक्षात्परम्परौदासीन्येनापेक्षामात्रं वा? नाद्यः, तद्विषयकशक्तिग्रहस्याप्रकृतार्थप्रतिपादने साक्षादपेक्षाऽभावात्। न च तत्र तद्विषयकशक्तेरनपेक्षायामगृहीतशक्तिकस्यापि व्यञ्जनयार्थान्तरस्मृतिप्रसङ्ग इति वाच्यम्; यत्र हि प्रकरणेनाभिधा नियम्यते तत्रैव शक्त्यन्तरस्मृतौ व्यञ्जनोन्मेषात्, अर्थान्तरगृहीतशक्तिकस्य चार्थान्तरस्मृतिप्रसक्त्यभावेन प्रकरणस्य तत्र नियामकत्वाप्रसक्त्या व्यञ्जनानुन्मेषात्। तस्मात्तत्र तद्विषयकशक्तिग्रहस्य प्रकरणनियामकत्वप्रयोजकत्वेऽपि तत्प्रतिपादने साक्षादपेक्षा नास्त्येव। नापि द्वितीयः, घटादिपदस्य घटाद्यर्थप्रतिपादने तद्विषयकशक्तिग्रहस्य साक्षादेवापेक्षितत्वेनाभिधा न स्यात्। नापि तृतीयः, 'छत्रिणो गच्छन्ति' इत्यत्र लक्षणया च्छत्रच्छत्रिसाधारण्येन च्छत्रिप्रतिपादनेऽप्यभिधैव स्यात्। न च तद्विषयकशक्तिग्रहमपेक्ष्य शक्यतावच्छेदकप्रकारेण तत्प्रतिपादनमभिधा, 'छत्रिणो गच्छन्ति' इत्यत्र चोभयसाधारणेनैकसार्थगन्तृत्वेनैव लक्षणया च्छत्रिप्रतीतिर्न तु

च्छत्रित्वेनेति लक्षणया च्छत्रिप्रतिपादनेऽपि नाभिधाप्रसङ्ग इति वाच्यम्; प्राचां मते गङ्गादिपदेन गङ्गात्वादिनैव तीरप्रतीतिरित्यभ्युपगमाच्छत्रित्वेनैवात्रापि च्छत्रिप्रतीतेः। यदि चैकसार्थगन्तृत्वेनैव तत्प्रतीतिरित्याश्रीयते तथाप्यवच्छेदकत्वप्रकारत्वयोर्बहुपदार्थघटितत्वेन शक्यतावच्छेदकप्रकारेणेति विशेषणापेक्षया साक्षात्त्वविशेषणस्यैव लघुत्वात्। यदि च 'छत्रिणो गच्छन्ति' इत्यत्राभिधया च्छत्रिप्रतीतिर्लक्षणया त्वच्छत्रिमात्रप्रतीतिः, अजहल्लक्षणा तु नास्त्येवेति मतम्; तदानीमपि 'सैन्धवमानय' इत्याद्येकार्थपरनानार्थस्थले लाघवेन नानार्थपदत्वावच्छेदेनैव प्रकरणादेः प्रकृतार्थेऽभिधामात्रनियमनप्रयोजकत्वकल्पनात्, अप्रकृतार्थे व्यञ्जनाया एवावश्यं वाच्यत्वेन व्यञ्जनाव्युदासार्थमेव तद्विषयकशक्तिग्रहं साक्षादपेक्ष्य तत्प्रतिपादनमभिधेत्यवश्यवाच्यत्वात्। तद्विषयकशक्तिग्रहस्य साक्षादपेक्ष्यत्वं च तदर्थस्मृत्यनुकूलसिद्ध्यर्थमनपेक्ष्यत्वे सति तदर्थस्मृत्यर्थमपेक्ष्यत्वम्। ततश्च 'छत्रिणो गच्छन्ति' इत्यत्र लक्षणया च्छत्त्रयच्छत्रिस्मृत्यनुकूलच्छत्रिमात्रस्मृतिसिद्ध्यर्थमेव तद्विषयकशक्तिग्रहस्यापेक्षितत्वान्नाभिधा। अनेकार्थपरनानार्थस्थलेऽप्यप्रकृतार्थविषयकशक्तिग्रहस्याप्रकृतार्थस्मृतिप्रसञ्जनद्वारा प्रकृतार्थे प्रकरणेनाभिधानियमन एवोपयोगित्वेन तदर्थस्मृतिहे-

तुव्यञ्जनोन्मेषानुकूलाभिधानियमनसिद्ध्यर्थमेवापेक्ष्यतया न साक्षादपेक्ष्यत्वमिति न तत्राप्यभिधावकाशः । एवं च सा-क्षात्त्वविशेषणेऽपि 'यो गङ्गां समदीधरत्' इत्यत्र वैकुण्ठपक्षे-ऽगं गोवर्धनं गां भूमिमिति पदभङ्गक्लेशेन गोपदस्य भूमौ प्रसिद्धिप्राचुर्याभावेन च विलम्बेनार्थप्रतीतावपि नाभिधाऽ-भावापत्तिः, तत्र तद्विषयकशक्तिग्रहस्य तदर्थस्मृत्यर्थमेवापेक्षि-तत्वात् । तथा च प्रकृताप्रकृतोभयपरेऽप्यप्रकृते प्रसिद्धिप्राचु-र्याज्झटित्यर्थप्रतीतावपि प्रकृतार्थे न व्यञ्जनापत्तिः, तत्रापि तद्विषयकशक्तिग्रहस्य तदर्थस्मृत्यर्थमेवापेक्षितत्वात् । वस्तुतस्तु, प्रकृतार्थे प्रसिद्धिप्राचुर्यविधुरस्य पदस्य प्रयोगो निहतार्थत्व-दोषापत्त्या काव्येषु न युक्त एव ; श्लेषयमकादिषु निहता-र्थत्वस्य वृद्धैर्निर्दोषत्वोपपादनं चाप्रकृतार्थे प्रसिद्धिविधुरप्रयो-ग एव । अत एव प्रकृतार्थे प्रसिद्धिविधुरप्रयोगे यमकादि-ष्वपि क्लिष्टत्वव्यवहारो लोकसिद्धः । यदप्युक्तं प्राचामप्रस्तुते शब्दशक्तिमूलव्यञ्जनाख्यव्यापाराभिधानमप्रस्तुतार्थप्रतीति-मूलकोपमाद्यलंकारे व्यञ्जनाव्यापारावश्यंभावपरं न त्वप्र-स्तुतार्थेऽपि व्यञ्जनास्तित्वपरमिति, तदपि न युक्तम् ; 'भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् । मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥' इत्यत्र विषशब्दव्यङ्ग्यं गरलं जलदस्य भुजगत्वरूपणरूपस्य

वाच्यस्य सिद्धिकृदिति काव्यप्रकाशिकायां कण्ठत एव गरलस्य विषशब्दव्यङ्ग्यत्वाभिधानेन प्राचामप्रस्तुतार्थे व्यञ्जनास्तित्वाभिप्रायनिरासासंभवात्। समासोक्त्यादिस्थले श्लेषव्यवहारोऽपि रागादिशब्दानां नानार्थत्वाभिप्रायेण, न त्वप्रस्तुतेऽप्यभिधास्तित्वाभिप्रायेण। नन्वेवमपि 'शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम्' इत्यत्राशनिशब्देन प्रस्तुताद्वज्रादन्यस्य समभिव्याहृतशनिविरुद्धार्थस्य व्यञ्जनया प्रतीतेः शब्दशक्तिमूलवस्तुध्वनिरिति वक्तुं शक्यतया विरुद्धावपि शनितद्विरुद्धौ द्वावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इत्युपश्लोकयस्य प्रभावातिशयप्रतीतेरत्र शब्दशक्तिमूलवस्तुध्वनिरिति प्राचां तावत्पर्यन्तधावनमयुक्तं स्यादिति चेन्न। विरुद्धावपि द्वौ त्वदनुवर्तनार्थमेकं कार्यं कुरुत इत्यस्यापि वस्तुनोऽर्थपर्यालोचनालभ्यत्वेऽपि नार्थशक्तिमूलध्वनिविषयता, किं तु प्रकृताप्रकृतोभयसाधारणशब्दसापेक्षतया शब्दशक्तिमूलध्वनिविषयतैवेत्यभिप्रायेण प्राचां तथोक्तिरिति संक्षेपः॥ न्यायमतानुसारिणस्तु— शक्तिग्रहजनितसंस्कारोद्बोधवशेनाप्राकरणिकार्थस्मृतेरपि प्रथममनुभूयमानत्वेन प्रकरणादीनां नाभिधानियामकत्वम्, किं तु लिङ्गविधया तेषां तात्पर्यग्राहकत्वमात्रम्। ततश्चाप्रकराणिकाद्यर्थानां तात्पर्यग्राहकप्रकरणाद्यभावेऽन्वयबोधाविषयत्वेऽपि स्मृतिर-

निवार्या । —इत्याहुः ॥

एवं व्यञ्जनाया अङ्गीकार्यतां प्रसाध्य तां लक्षयति—

**वाच्यलक्ष्यविभिन्नार्थधीकृद्व्यापृतिरञ्जनम् ॥**

इदं च शब्दार्थोभयनिष्ठव्यञ्जनासाधारणं लक्षणम् । तादृशी शब्दव्यापृतिः शब्दव्यञ्जना । अर्थान्तरधीहेतुरर्थव्यापृतिरर्थव्यञ्जना । अर्थस्य शब्दवद्वाच्यलक्ष्यधीहेतुत्वाभावेनार्थान्तरे वाच्यलक्ष्यविभिन्नत्वविशेषणाभावेऽप्यदोषादिति ध्येयम् ॥ ६२ ॥

एवमभिधालक्षणाविलक्षणां व्यञ्जनां निरूप्य यल्लक्षणार्थमियं निरूपिता तं व्यञ्जकं शब्दं लक्षयति—

**व्यञ्जनेनार्थधीहेतुः शब्दो व्यञ्जक इष्यते ।**
**सामोदसुमनोजातजुष्टो जयति माधवः ॥**

अत्र शब्दपदं काकाक्षिन्यायेन लक्षणे लक्ष्ये च संबध्यते । तेन लक्ष्यमात्रान्वये व्यञ्जकेऽर्थेऽतिव्याप्तिः, लक्षणमात्रान्वये व्यञ्जकमात्रस्य लक्ष्यत्वापत्त्या व्यञ्जकेऽर्थेऽव्याप्तिरिति निरस्तम् । अत्र व्यञ्जनयार्थधीहेतुत्वं फलोपधानं विवक्षितम्, अतो न वाचकेऽतिव्याप्तिः । यथा सामोदैरानन्दसहितैः सुमनोजातैर्देवसमूहैर्जुष्टः सेव्यो माधवो मु-

कुन्दो जयतीत्यत्र 'ससौरभपुष्पकदम्बभव्यो वसन्तः' इत्यर्थान्तराणां व्यञ्जनया प्रतीतिहेतवः सामोदादिशब्दा व्यञ्जकाः ॥ यथा वा— 'भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत् ॥'— अत्र भद्रात्मनः शोभनाकृतेर्दुरधिरोहतनोर्दुर्धर्षवपुषो विशालवंशोन्नतेर्बहुलसंतानमहत्ताशालिनः कृतशिलीमुखसंग्रहस्य संगृहीतशरस्यानुपप्लुतगतेरनुपद्रुतज्ञानस्य परवारणस्य शत्रुनिवारकस्य यस्य राज्ञः करो हस्तः सततं दानाम्बुसेकेन प्रतिपादनार्थमुपात्तजलसेचनेन सुभगोऽभूदित्यभिधया प्रतिपाद्यमाने, मन्दमृगजातिद्वयातिरिक्तात्युत्कृष्टभद्रजातिप्रभवाकृतेरत्युन्नततया दुरारोहतनोर्विशालपृष्ठास्थिसमुच्छ्रायस्य कृतभ्रमरसंग्रहस्य निष्प्रत्यूहगमनस्य यस्य परस्योत्कृष्टस्य गजस्य शुण्डादण्डो मदजलसेकसुभगोऽभूदित्यप्रस्तुतार्थः शब्दशक्तिमूलव्यञ्जनया भद्रादिपदैः प्रतिपाद्यते ॥ ६१ ॥

नन्वत्राप्रकृतार्थेषु शब्दशक्तिमूलया व्यञ्जनया प्रतिपादितेषु, प्रकृतार्थस्याप्रकृतार्थेन प्रतीयमानमौपम्यं किं शब्दशक्तिमूलध्वनेरेव विषयः किं वार्थशक्तिमूलध्वनेरित्याकाङ्क्षायामाह—

**अत्रार्थप्रत्ययद्वारेणोपमादेस्तु या मतिः ।**
**तस्यां च शब्दशक्त्युत्था व्यञ्जनैषैव कारणम् ॥**

अत्र शब्दशक्तिमूलव्यञ्जनास्थले प्रकृताप्रकृतार्थप्रतीतिद्वारा प्रकृताप्रकृतयोरुपमालंकारस्य, 'शनिरशनिश्च तमुच्चैः—' इत्यत्र 'विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुतः, अहो ते प्रभावातिशयः' इत्येवंभूतस्य वस्तुनश्च या प्रतीतिस्तस्यामपि प्रतीतौ शब्दशक्तिमूला व्यञ्जनैव हेतुः । ननु तत्रोपमादेः प्रस्तुताप्रस्तुतार्थपर्यालोचनालभ्यत्वादर्थशक्तिमूलध्वनिविषयतैव युक्तेति चेन्न; तथात्वेऽपि प्रकृताप्रकृतोभयसाधारणशब्दसापेक्षतया प्रकृतमात्रपरपर्यायशब्दासहिष्णुत्वेन च शब्दशक्तिमूलध्वनिविषयताया एव तत्रौचित्यादिति ध्येयम् ॥

नन्वेवमुक्तरीत्योपमादौ व्यज्यमाने प्रकृताप्रकृतार्थयोः किमजागलस्तनायमानतैव? नेत्याह—

**यतोऽर्थधियमुत्पाद्य शब्दोऽर्थान्तरबुद्धिकृत् ।**
**ततोऽर्थो व्यञ्जकः शब्दसहकारितया मतः ॥**

अत्र यतोऽर्थप्रतीतिमाधायैव शब्द उपमादिप्रतीतिं जनयति, ततोऽर्थोऽपि शब्दसहकारितया व्यञ्जको मतः । न चैवमर्थस्यापि व्यञ्जकत्वे तत्र शब्दशक्तिमूलव्यञ्जनैव हेतुरिति कथमुक्तमिति वाच्यम्, शब्दस्यैव तत्र प्राधान्यात्

'प्रधानेन व्यपदेशा भवन्ति' इति न्यायेन तथोक्तमिति ध्येयम् ॥ ६५ ॥

इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कसाग्निचिद्विश्वजिदतिरात्रयाजि-
सत्यमङ्गलरत्नखेटश्रीनिवासदीक्षिततनयस्य कामाक्षीगर्भ-
संभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरणसहजता-
लब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षितस्य
कृतौ काव्यदर्पणे शब्दार्थस्वरूपनिर्णयः
द्वितीय उल्लासः ॥



# तृतीय उल्लासः ॥



अवसरलक्षणां संगतिं दर्शयन्नुल्लासप्रतिपाद्यमाह—

**वाच्यलक्ष्यव्यङ्ग्यभेदादर्था ये प्रतिपादिताः ।**
**तेषामिह व्यञ्जकत्वमधुना प्रतिपाद्यते ॥**

पूर्वत्रोल्लासे वाचकलक्षकव्यञ्जकभेदेन त्रिविधानामपि शब्दानां प्राधान्याद्व्यञ्जकत्वं प्रतिपादितम् । प्रसङ्गात्तु तेषां वाचकादिशब्दानां वाच्यलक्ष्यव्यङ्ग्यभेदेन त्रिविधा अर्थाश्च निरूपिताः । संप्रत्यवसरप्राप्तत्वादिह तृतीयोल्लासे त्रिविधानामपि तेषामर्थानां व्यञ्जकत्वं प्रतिपाद्यते । यद्यपि पूर्वत्रैव त्रिविधानामर्थानामपि व्यञ्जकत्वमुक्तम्, तथापि तत्रासंभावनानिरासायाप्राधान्येन दिङ्मात्रं प्रदर्शितम् । इह तु प्राधान्येन सप्रपञ्चमुच्यते । यद्वा सहकारिविशेषप्रदर्शनार्थमयं पुनरारम्भ इति ध्येयम् ॥ ६६ ॥

नन्वर्थानामपि व्यञ्जकत्वे सर्वेषामपि सर्वत्र तत्तद्व्यङ्ग्यार्थप्रतीतिः स्यान्न तु केषांचित्क्वचिदेव; अतो नार्थानां व्यञ्जकतेत्यत आह—

**वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः ।**
**प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ।**
**योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥**

अत्र बोद्धव्यपदमन्तर्भावितणिजर्थतया बोधयितव्यपरम्, न तु वाच्यपरम् । अतो न पौनरुक्त्यम् । काकुर्ध्वनिविकारः । प्रस्तावः प्रकरणम् । अर्थस्य वाच्यलक्ष्यव्यङ्ग्यभेदेन त्रिविधस्य । अत्र वाक्यार्थज्ञानानन्तरं वक्त्रादिवैशिष्ट्यज्ञानवतां सहृदयानां यार्थान्तरधीस्तदनुकूलोऽर्थस्य व्यापारो व्यक्तिरेव व्यञ्जनैव । अत्रैवकारेण व्याप्त्यादिनिरासः । तत्प्रकारश्चाग्रे वक्ष्यते । न त्वभिधालक्षणयोर्निरासः, तयोरर्थे प्रसक्त्यभावात् । एवं च— यद्यर्थानां व्यञ्जकता नेष्यते तदा वाक्यार्थप्रतीत्यनन्तरमर्थान्तरधीर्न स्यात् । न चैवं सर्वेषां सर्वत्र व्यङ्ग्यप्रतीतिः स्यादित्युक्तमिति वाच्यम्, वक्त्रादिवैशिष्ट्यज्ञानं नवनवोन्मेषशालिप्रज्ञात्मकप्रतिभोत्थापकतयार्थानां व्यञ्जकत्वे सहकारीत्यभ्युपगमात्— इति ध्येयम् ॥ ६७ ॥

अथ वक्तृवैशिष्ट्यज्ञानस्य व्यञ्जनासहकारितामुदाहरति—

**अस्तं गतोऽद्य सविता पथिक क्व प्रयास्यसि ।**
**इत्यत्र वक्तृवैशिष्ट्यज्ञानाद्रत्यभिलाषधीः ॥**

अत्र विदितस्वैरचारवक्तृवैशिष्ट्यज्ञानवतां प्रतीयमानेनार्थेन नायिकाया रत्यभिलाषो व्यज्यते ॥ यथा वा— 'अइपिहुलं जलकुम्भं घेत्तूण समागअम्हि सहि तुरिअं। समसेअसलिलणीसासणीसहा वीसमामि खणं ॥' — अतिपृथुलं जलकुम्भं गृहीत्वा समागतास्मि सखि त्वरितम्। श्रमस्वेदसलिलनिःश्वासनिःसहा विश्राम्यामि क्षणम् ॥ इत्यत्रातिपृथुलमिति दुर्वहत्वम्, जलकुम्भमिति जलपूर्णत्वेन दुर्वहतरत्वम्, गृहीत्वेत्यनेन मयैव गृहीतो नान्यया साहाय्यकमाचरितमित्यायासाधिक्यं च व्यज्यते। त्वरितमिति श्रमाविर्भावे निदानोपन्यासः। इयमुपपतिना नदीतीरे सद्योभुक्तमुक्तायाः कस्याश्चिदुक्तिः। अत्र तादृशवक्तृवैशिष्ट्यज्ञानवतां प्रतीयमानेनार्थेन चौर्यरतगोपनं व्यज्यते ॥ ६८ ॥

बोधयितव्यवैशिष्ट्यज्ञानस्य सहकारितामाह—

**प्रातश्चेन्नाथ को दोषः श्रान्तोऽसि स्वपिहि क्षणम्**
**अत्र बोद्धव्यवैशिष्ट्याद्वक्तृकोपः प्रतीयते ॥**

इदं हि रात्रावन्यामुपभुज्य प्रातरागतं नायकं प्रति प्रच्छन्नकोपाया नायिकाया वचनम्। अत्र तादृशसंबोध्यवैशिष्ट्यज्ञानवतां प्रतीयमानार्थेन नायिकायाः कोपो व्यज्यते ॥ यथा वा—" ओणिद्दं दोब्बल्लं चिन्ताअलसत्तणं सणीससिअं।

मइ मन्दभाइणीए केरं सहि तुह वि अहह परिभवइ ॥"
उन्निद्रं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम्। मम मन्द-भागिन्याः कृते सखि त्वामप्यहह परिभवति ॥ उन्निद्रमुद्भूतं दौर्बल्यं निःश्वाससहितं चिन्ताजनितमलसत्वं च मन्दभाग्याया मम कृते मन्निमित्तं हे सखि, त्वामपि परिभवति बाधते। अहहेति खेदे। इयं स्वनायकाभिलाषिणीं दूतीं प्रति नायिकाया उक्तिः अत्र प्रसिद्धनायकाभिलाषदूतीरूपबोध-यितव्यवैशिष्ट्यज्ञानवतां प्रतीयमानार्थेन दूत्या नायकोपभोगो व्यज्यते ॥ ६९ ॥

अथ काकुवैशिष्ट्याद्व्यञ्जनामाह—

**सखि श्रुत्वापि मामेवं नानुतापमुपैति सः।**
**इत्यादौ काकुवैशिष्ट्यज्ञानाद्व्यङ्ग्यार्थधर्मिता ॥**

इदं नायकसमीपं गत्वागतवतीं दूतीं प्रति नायिकाया वचनम्। अत्र नन्वि काकुवैशिष्ट्यज्ञानवतां मामेवमीदृशदशापन्नत्वेनेत्यादिपदार्थेनानुतापाभावो न युक्त इति व्यज्यते ॥
यथा वा— 'तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः। विराटस्यावासे स्थितमनुचितारम्भनिभृतं गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥'— इदं संरब्धस्य भीमसेनस्य वचनम्।

नृपसदसि, न तु यत्र कुत्रापि विविक्तस्थले। पाञ्चालराजतनयाम्, न त्वज्ञातकुलगोत्राम्। तथाभूतां केशग्रहणादिपरिभववर्तीं दृष्ट्वा। अपीत्यध्याहारः। वल्कलधरैः। अस्माभिरिति शेषः। व्याधैः किरातैः सह। सुचिरम्, न तु कियन्तंचित्कालम्। वन उषितं स्थितम्। न केवलमेतावन्मात्रम्। अपि तु, विराटस्य गृहे पाकाद्यनुचितारम्भेण निभृतमज्ञातं यथा भवति तथा स्थितम् एवमपि, गुरुर्युधिष्ठिरः। उक्तविधया खिन्ने। अपीत्यध्याहारः। मयि खेदं खिद्यतेऽनेनेति खेदो मन्युः। तं भजति। कुरुषु दुर्योधनादिष्वद्यापि न भजति।— इत्यत्र मयीति कुरुष्विति च सप्तम्यन्तं पदद्वयं काकुस्थानम्। ततश्चोभयत्रापि प्रश्नमभिव्यज्य काकौ विश्रान्तायां तद्वैशिष्ट्यज्ञानवतः सहृदयस्य खिन्ने कोपस्यायोग्यत्वात्खिन्न इति पदार्थेन मयि न कोपो युक्त इत्ययमर्थः, तथापकारिषु कोपस्योचितत्वादनेकापराधकर्तृत्वाभिप्रायककुरुष्विति पदार्थेन कुरुषु कोपो युक्त इत्ययमर्थश्च व्यज्यते। ननु—अस्य कुपितोद्धतनायकवक्तृकत्वाद्विपर्ययपर्यवसायित्वमवश्यवाच्यम्। तच्च काकुव्यङ्ग्येन प्रश्नरूपार्थेन विना न संभवतीति काकुव्यङ्ग्यस्य वाच्यसिद्ध्यङ्गत्वाद्गुणीभूतव्यङ्ग्यतैवात्रेति न प्रधानध्वनिप्रस्तावेऽस्योदाहरणत्वं युक्तम्। —इति चेन्न; अल-

ङ्घनीयशासनस्य गुरोः कोपाविषयत्वेनात्र विपर्ययपर्यवसानाभावात् । अत एवात्र न्यूनपदताख्यं दोषं वक्ष्यति । अन्यथा कोपाविष्टवक्तृकत्वेन न्यूनपदताया दोषता न स्यात् । अतोऽत्र काकोः प्रश्नमात्र एव विश्रान्तिरित्याहुः । अत्र काकोरेव साक्षाद्व्यञ्जकत्वाभावान्न काक्वाक्षिप्तत्वरूपं गुणीभूतव्यङ्ग्यत्वमपीति ध्येयम् ॥ ७० ॥

वाक्यवैशिष्ट्यादाह—

**स्वप्नेऽपि नास्मरः प्राज्ञां भाग्येनाद्यागतोऽसि मे ।**
**इत्यादौ वाक्यवैशिष्ट्यज्ञानाद्व्यङ्ग्यार्थधीर्मता ॥**

इदं प्रणयकोपेन सपत्न्यावधूतं स्वसमीपमागतं नायकं प्रति नायिकाया वचनम् । प्राक्तत्प्रसाददशायाम् । अद्य तत्कोपदशायाम् । अत्र प्रागद्येति वाक्यवैशिष्ट्यज्ञानात्सततानुकूलामपि मां परित्यजता भवता सद्यः फलमनुभूतमित्युपहासः प्रकृतवाक्यार्थेन व्यज्यते ॥ यथा वा—'तइआ मह गण्डत्थलणिहिअं दिट्ठिं ण णेसि अण्णत्तो । एण्हि सा च्चेअ अहं ते अ कवोला ण सा दिट्ठी ॥'— तदा मम गण्डस्थलनिहितां दृष्टिं नानैषीरन्यतः । इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः ॥ इयं प्रत्यक्षदृष्टस्वकपोलप्रतिबिम्बितसखीदर्शनौत्सुक्यं नायकं प्रति नायिकोक्तिः । तदा

सख्या मम गण्डस्थले प्रतिबिम्बितत्वदशायां मदीयकपोल-तलासक्तां दृशमन्यत्र न नीतवानसि । इदानीं सखीप्रतिबि-म्बाभावदशायामहं सैव कपोलौ च तावेव । तव दृष्टिस्तु न सा पूर्ववत्कपोलतलासक्ता न भवति।—इत्यत्र तदेदानी-मिति च पदद्वयात्मकवाक्यवैशिष्ट्यज्ञानात्प्रकृतवाक्यार्थेन मत्सखीं कपोलतलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यादृश्यनु-रागशालिनी जाता, चलितायां च तस्यामन्यादृशी ताटस्थ्य-शालिनी जातेत्यहो ते प्रच्छन्नकामुकतेति व्यज्यते ॥ ७१ ॥

अथ वाच्यवैशिष्ट्याद्व्यङ्ग्यप्रतीतिं दर्शयति—

**शून्या प्रपेयमेकाकिन्यस्मि पान्थास्यतां क्षणम्।**
**इत्यत्र वाच्यवैशिष्ट्यात्संभोगेच्छावगम्यते ॥**

यथा वा– 'उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी कुञ्जो-त्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः । किं चैतस्मिन्सुरतसु-हृदो वान्ति ते तन्वि वाता येषामग्रे सरति कलिताकाण्ड-कोपो मनोभूः ।'– इयं रिरंसोर्नायकस्य नायिकां प्रत्युक्तिः। नर्मदाया अयमुद्देशः । उद्दिश्यत इत्युद्देशः । तेन दूरादेवायं प्रदेशो जनैर्निर्दिश्यते न तु निकटादिति जनराहित्यं व्यज्यते । सरसरम्भापङ्क्तीनां शोभाभिरतिशायी देशान्तरातिशयन-शीलः । तेनोद्दीपकता व्यज्यते । कुञ्जानामुत्कर्षेणाधिक्येना-

ङ्कुरिता उद्भूता रमणीनां विभ्रमाः संभोगसंभ्रमा यस्मिंस्तथा। तेन कुञ्जान्तरेषु रमण्यो रमन्त इत्यतिशयेनोद्दीपकता व्यज्यते। किं चात्र हे तन्वि, ते सुरतसुहृदः सुरतजनितश्रमापनयनेन सुहृत्कार्यकारिणः। तेन चिरकालसंभोगसौख्यं व्यज्यते। वाता वान्तीत्यत्र वर्तमानापदेशेन प्रारब्धासमाप्तिः प्रतीयते। येषां वातानामग्रे कलितास्थानकोपः। तेनात्मनो रिरंसातिशयो व्यज्यते। मनोभूः सरति गच्छति।— इत्यत्रैवंविधवाच्यवैशिष्ट्यज्ञानादत्र रतार्थं प्रविशेति व्यज्यते॥

अथान्यसंनिधिवैशिष्ट्याद्व्यङ्ग्यं दर्शयति—

**एकाकिन्येव यास्यामि जलार्थं कथमापगाम्।**
**इत्यादिषु व्यङ्ग्यबुद्धिर्वैशिष्ट्यादन्यसंनिधेः॥**

अत्रोपपतिसंनिधिवैशिष्ट्यज्ञानवतां प्रकृतवाक्यार्थेन नदीतीरं संकेतस्थानमिति व्यज्यते। यथा वा— 'णोल्लेइ अणुल्लमणा अत्ता मं घरभरम्मि सअलम्मि। खणमेत्तं जइ सञ्झाइ णवर होइ ण व होइ वीसामो॥'— नोदयत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले। क्षणमात्रं यदि संध्यायां केवलं भवति न वा भवति विश्रामः॥ इयं तटस्थं कामुकमुद्दिश्य कस्याश्चित्स्वैरिण्यास्ताटस्थ्येनोक्तिः। अत्र तटस्थोपपत्तिसंनिधिवैशिष्ट्यज्ञानवतां निर्घृणा श्वश्रूः सर्वस्मि-

न्गृहकृत्ये मां नोदयति प्रेरयति । तद्विश्रान्तिरेव न भवति । यदि भवति तदा संध्यायामेव केवलं कदाचिद्भवति । तत्रापि क्षणमात्रम् । कदाचित्तु न वा भवति । —इति वाक्यार्थेन संध्या संकेतकाल इति व्यज्यते ॥ ७३ ॥

प्रस्ताववैशिष्ट्यादाह—

**वयस्य प्रतिवेशिन्याः पतिरद्य समागतः ।**
**अत्र प्रस्ताववैशिष्ट्यज्ञानाद्व्यङ्ग्यार्थनिश्चयः ॥**

अत्र प्रतिवेशिन्यभिसरणप्रवृत्तिप्रकरणज्ञानवतां प्रकृतवाक्यार्थेन तदभिसरणनिषेधो व्यज्यते ॥ यथा वा— 'सुव्वइ समागमिस्सइ तुज्झ पिओ अज्ज पहरमेत्तेण । एमेअ किं त्ति चिट्ठसि ता सहि सज्जेहि करणिज्जं ।' — श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण । एवमेव किमिति तिष्ठसि तस्मात्सखि सज्जय करणीयम् ॥ —— अत्राप्यभिसरणप्रवृत्तिप्रकरणज्ञानवतां प्रकृतवाक्यार्थेनाभिसरणप्रवृत्ताया निवारणं व्यज्यते ॥ ७४ ॥

देशवैशिष्ट्यादाह—

**सख्यो दूरं गता गन्तुमक्षमाहमिह स्थिता ।**
**इत्यत्र देशवैशिष्ट्यज्ञानेन व्यङ्ग्यधीर्मता ॥**

अत्रेहेति देशवैशिष्ट्यज्ञानवतां विजनोऽयं देशस्ततः संकेतयोग्य इति व्यज्यते ॥ यथा वा— 'अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः। नाहं विदूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः ॥'— अत्रास्मीत्यहमर्थेऽव्ययम्। सख्यो निवारिता अहमेकैवात्र स्थितेति समाश्वस्तां सखीं प्रति कस्याश्चिदुक्तिरियम्। अत्र वाच्यार्थः साधारणसहचरीमात्रविषयः। व्यङ्ग्यस्त्वसाधारणसहचरीविषयः। तथा च देशविशेषवैशिष्ट्यावगमात्प्राधान्येन प्रच्छन्नकामुको निःशङ्कं भुज्यतामिति वा प्रच्छन्नकामुकोऽत्र प्रेषणीय इति वा व्यज्यते ॥ ७५ ॥

कालवैशिष्ट्यादाह——

**गृहकृत्यव्यापृताया विश्रमोऽद्यैव मे सखि।**
**इत्यादौ कालवैशिष्ट्यज्ञानाद्व्यङ्ग्यार्थनिर्णयः॥**

अत्राद्येति कालवैशिष्ट्यावगमादयं सायंसमय एव संकेतयोग्यस्तत्प्रच्छन्नकामुको झटिति प्रेषणीय इति व्यज्यते। यथा वा— 'गुरुअणपरवस पिअ किं भणामि तुह मन्दभाइणी अ अहं। अज्ज पवासं वच्चसि वच्च सअं चेअ मुणसि करणिज्जं ॥'— गुरुजनपरवश प्रिय किं भणामि तव मन्दभागिनी चाहम्। अद्य प्रवासं व्रजसि व्रज स्वयमेव

जानासि करणीयम् ॥ अत्र गुरुजनपरवशेति विपरीतल-क्षणा । ततश्च गुरुजनपारवश्याभावेऽप्यद्य गच्छसि, अहो ते निःस्नेहतेति व्यज्यते । प्रियेत्यनेन ममैव त्वं प्रियो न तु तवाप्यहं प्रियेति, किं भणामीत्युपालम्भाप्रयोजकत्वम्, मन्दभागिनीत्येवमुदासीनेऽपि त्वय्यनुरक्ताहमसमीक्ष्यकारि-णीति, व्रजसि व्रजेति कोपातिशयः, स्वयमेवेति स्वस्य मरणोत्साहश्च व्यज्यते । अत्राद्यपदप्रतिपाद्यमधुसमयवैशि-ष्ट्यावगमाद्यदि मधुसमये व्रजसि तदाहं क्षणमपि न जीवामीति व्यज्यते ॥ ७६ ॥

प्रस्तावदेशकालादेरित्यादिपदाच्चेष्टादेर्ग्रहणम् । तत्र चेष्टा यथा—'द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया प्रोल्लास्योरुयुगं परस्परसमासक्तं समापादितम् । आनीतं पुरतः शिरोंशुकमधः क्षिप्ते चले लोचने वाचस्तच्च निवारितं प्रसरणं संकोचिते दोर्लते ॥' — द्वारसमीपे मयि निर-न्तरे व्यवधानरहिते सति । संनिहित इति यावत् । लाव-ण्यसारलक्ष्म्या तयोरुद्वयं विसार्य पश्चान्मिथः श्लिष्टं कृतम् । अनेनोरुभ्यां गाढनिपीडनं करिष्यमाणं व्यज्यते । यद्वा कदलीसदृशोरुसमाश्लेषेण कदलीनिविड्यवान्प्रदेशः संकेत-स्थानमिति व्यज्यते । शिरःप्रावरणीकृतं वासः पुरत आनी-

तम् । शिरोंशुकेन मुखं किंचिदावृतमिति यावत् । अत्र चन्द्रसदृशस्य मुखस्यावरणेन चन्द्रास्तमयः संकेतकाल इति व्यज्यते । चले लोचने अधः क्षिप्तौ क्षिप्ते । भूमिमवलोकितवतीति यावत् । अत्र चकोरसदृशयोर्नयनयोरधःक्षेपरूपया चेष्टया चन्द्रास्तमयानन्तरमेव नागन्तव्यम्, किं तु वियति चटुलाश्चकोरा यदा निराशा भूमौ प्रतिष्ठिता भवन्ति तदानीमेवागन्तव्यमिति व्यज्यते । वाचस्तच्च पूर्वं निरङ्कुशमपि प्रसरणं निवारितम् । अत्र तदापि जनकलकलोपशमे सत्यागन्तव्यमिति व्यज्यते । दोर्लते संकोचिते इत्यनेनागतस्य तवालिङ्गनमेव पारितोषिकं ददामीति व्यज्यते । तथानुभावरूपाभिराभिश्चेष्टाभिः प्रच्छन्नकामुकविषयोऽनुरागोऽपि व्यज्यत इति ध्येयम् ॥ ननु द्वितीयोल्लास एवार्थानां व्यञ्जकत्वमुदाहृतमिति पुनरिहोदाहरणं पौनरुक्त्यग्रस्तमिति चेन्न; तत्र सामान्यत उदाहरणेऽपि वक्त्रादिवैशिष्ट्येन विशिष्यानुदाहरणादाकाङ्क्षाशान्त्यभावेन नैराकाङ्क्ष्यप्रतिपत्तये पुनरिहोदाहरणम् । न च तत्रैव विशिष्याप्युदाह्रियतामिति वाच्यम्, तत्र शब्दव्यञ्जकत्वस्यैव प्रकृतत्वेनावैव प्राप्तावसरतयार्थव्यञ्जकत्वस्य सप्रपञ्चमुदाहरणौचित्यादित्युक्तं प्राक् । तन्न विस्मर्तव्यम् ॥

ननु वक्त्रादिवैशिष्ट्यस्य प्रत्येकं व्यञ्जकत्वेऽपि क्वचिद्द्वयो

स्त्रयाणां वार्थसमाजे द्वित्रादीनामपि संहत्य किं व्यञ्जकत्वमस्ति न वेत्याकाङ्क्षायां शिष्याणां निराकाङ्क्षप्रतिपत्तये प्राप्तावसरतया तेषां मिथो योगेऽपि संहत्य व्यञ्जकत्वमस्तीत्याह—

**वक्त्रादीनां मिथो योगेऽप्यर्थव्यञ्जकतेष्यते ।**
**शेते श्वश्रूरिहात्राहं रात्र्यन्धापैव लोकय ॥**

**शय्यायामावयोर्मोहात्त्वं वैदेशिक मा पत ।**
**वक्तृबोद्धव्यदेशानां वैशिष्ट्याद्व्यङ्ग्यधीरिह ॥**

अत्र श्वश्रूशय्यासाधारण्येन स्वशय्यामुपदर्शयन्त्या परस्योद्वेदो निवार्यते । अत्र प्रसिद्धातिचारयोर्वक्तृबोद्धव्ययोरन्वेति देशस्य च वैशिष्ट्यावगमात्प्रकृतवाक्यार्थेन मदीयशय्यायामागन्तव्यमिति व्यज्यते ॥ यथा वा— 'दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति । एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाकुलं नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः ॥'— हे प्रतिवेशिनि समीपगृहमेधिनि, अस्मद्गृहेऽपि क्षणमात्रं दृष्टिं कुरु । अस्य शिशोः पिता । मम पतिरिति यावत् । विरसानि कूपजलानि प्रायेण नियमेन न

पास्यति । अत एवैकाकिन्यप्यहं स्रोतोभिः प्रवाहैस्तमालैश्चाकुलं तद्वनं गच्छामि । तत्र च नीरन्ध्रा निबिडा जरठच्छेदाश्चिरकालच्छिन्ना नलानां तृणविशेषाणां ग्रन्थयस्तनुमालिखन्तु नाम । नदीजलाहरणस्यावश्यिकत्वादेवंविधबहूपप्लवे सत्यपि यामीति यावत् । अत्र प्रसिद्धातिचाराया वक्त्र्याः, क्षणमिति कालस्य, एकाकिनीति वाच्यस्य, तद्वनमिति देशस्य, नीरन्ध्रास्तनुमित्यादिनानापदात्मकवाक्यस्य च वैशिष्ट्यावगमात्संकेतकालदेशजिज्ञासुं कामुकं प्रतीदानीमेव तस्मिन्वने समागन्तव्यम्, तत्र नलग्रन्थिलिखनेनान्यथासिद्धिसंभवान्नखक्षतादिकरणपूर्वकं स्वैरमुपभोगः कर्तुं शक्यत इति व्यज्यते ॥ ७७ ॥

एवं लक्ष्यव्यङ्ग्ययोरप्यर्थयोर्व्यञ्जकत्वमुदाहार्यम् । तत्र लक्ष्यस्य यथा—

**वत्स मा गच्छ सहसा हालिकस्य निवेशनम् ।**
**तत्र दृष्टिविषा कापि फणिन्यास्त इति श्रुतम् ॥**

अत्र हालिकबालिकायां फणिनीति साध्यवसानलक्षणा । ततश्च तस्याः सर्वथा परिहरणीयत्वं व्यङ्ग्यम् तादृशव्यङ्ग्यप्रतीतौ च मातुर्वक्त्र्याः पुत्रस्य बोधयितव्यस्य तदभि-

स्मरणप्रवृत्तिप्रस्तावस्य च वैशिष्ट्यावगमः सहकारीति ध्येयम् ॥ ७८ ॥

व्यङ्ग्यस्य व्यञ्जकता यथा—

**फलानि दिश भव्यानि निवेश्य मणिबन्धने ।**
**बिम्बोष्ठि चुम्बनेनैवमालि लालय मा शुकम् ॥**

अत्र बिम्बफलभ्रान्त्या शुकस्तवाधरं खण्डयिष्यतीति व्यज्यते । ततश्च 'कस्स व ण होइ रोसो' इत्यत्र वक्ष्यमाणरीत्या पत्युरन्यथाप्रतीतिर्भविष्यतीत्यादिकमनेकधा व्यङ्ग्यमुज्जृम्भते । अत्रापि सख्या वक्त्र्या नायिकाया बोद्धव्याया बिम्बोष्ठीति वाच्यस्य च वैशिष्ट्यावगमो हेतुरिति ध्येयम् ॥

नन्वत्र शब्दार्थयोर्व्यञ्जकत्वमविशिष्टम्; तत्कथमत्रार्थमात्रस्य व्यञ्जकतेत्युच्यत इत्यत आह—

**शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।**
**अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥**

यद्यपि शब्दबोध्य एवार्थो व्यञ्जकः, तथाप्यस्य शब्दस्य पर्यायसहत्वेनार्थस्य प्राधान्यात्तथा व्यपदेशः । शब्दस्य

त्ववच्छेदकत्वेनाप्राधान्यान्न तेन व्यपदेशः, 'प्रधानेन व्यपदेशा भवन्ति' इति न्यायादिति ध्येयम् ॥ ८० ॥

इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कसाग्निचिद्विश्वजिदतिरात्रयाजि-
सत्यमङ्गलरत्नखेटश्रीनिवासदीक्षिततनयस्य कामाक्षीगर्भ-
संभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरणसहजता-
लब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षितस्य
कृतौ काव्यदर्पणे अर्थव्यञ्जकतानिर्णयः
तृतीय उल्लासः ॥



# चतुर्थ उल्लासः ॥

---

यद्यपि निर्दोषसगुणालंकारशब्दार्थयुगलं काव्यमित्युक्त-लक्षणे काव्ये विशेष्यभूतयोः शब्दार्थयोर्निरूपणे कृते तद्वि-शेषणज्ञानार्थं गुणालंकारयोः, निर्दोषत्वस्य प्रतियोगिज्ञाना-धीनत्वेन तत्प्रतियोगितया दोषाणां च निरूपणमुचितम्; तथापि तत्तदवान्तरभेदविशिष्टतया धर्मिणि काव्ये साकल्येन निरूपित एव धर्मस्वरूपजिज्ञासोदयात्तद्धर्मभूतनिर्दोषत्वप्रति-योगिनो दोषास्तद्धर्मभूता गुणा अलंकाराश्च निरूपणीया इति प्रथमं काव्यभेदनिरूपणमेवोचितम् । तत्रापि प्राधान्या-दुत्तमकाव्यस्य तद्भेद एव प्रथमं निरूपणार्हः । किं च-रस-हानिकरत्वं दोषत्वम्, साक्षाद्रसधर्मत्वं गुणत्वम्, अङ्गद्वारेण रसोपकारकत्वमलंकारत्वम्- इति दोषादीनां रसनिरूपणा-धीननिरूपणत्वेन प्रथमं रसस्यैव स्वरूपं निरूपणीयमित्यभि-प्रेत्य प्रथमं ध्वनिकाव्यं विभजते—

ध्वनिर्हि लक्षणामूलाभिधामूलविभेदतः ।
सामान्यतो द्विधा प्रोक्तो ध्वन्यध्वन्यैर्मनीषिभिः

**तत्राद्ये लक्षणामूले वाच्यं स्यादविवक्षितम् ।**
**विवक्षितं चान्यपरमभिधामूलकध्वनौ ॥**

ध्वनिकाव्यं लक्षणामूलमभिधामूलं चेति सामान्यतो द्विविधम् । तत्र लक्षणामूलध्वनौ वाच्यमविवक्षितं भवति । तं चाविवक्षितवाच्यमित्याचक्षते । अभिधमूलध्वनौ तु वाच्यं विवक्षितमपि व्यङ्ग्यनिष्ठं भवति । तं च विवक्षितान्यपरवाच्यमित्याहुः । यद्यप्यत्राभिधामूलध्वनिरेव प्रथममुद्देशार्हस्तथापि सूचीकटाहन्यायेन लक्षणामूलमेव प्रथमं निरूपयितुं तदुद्देशस्य प्राथम्यमिति ध्येयम् ॥ ८१ ॥

तत्र प्रथमोद्दिष्टं लक्षणामूलध्वनिं लक्षयति—

**तत्राद्यो लक्षणामूलो गूढव्यङ्ग्यप्रधानकः ॥**

लक्षणामूलत्वे सति गूढं यद्व्यङ्ग्यं तत्प्रधानो यः सोऽविवक्षितवाच्यध्वनिः । अत्राभिधामूलेऽतिव्याप्तिनिरासाय लक्षणामूल इति । 'अगूढमपराङ्गं च—' इति वक्ष्यमाणयोरगूढापराङ्गयोर्गुणीभूतव्यङ्ग्ययोस्तन्निरासाय गूढव्यङ्ग्यप्रधानक इत्युक्तम् ॥ ८२ ॥

अथ तमेवाविवक्षितवाच्यं विभजते—

**अर्थान्तरे संक्रमितवाच्योऽत्यन्ततिरस्कृतः ।**
**द्विविधो लक्षणामूलः सामान्येन समीरितः ॥**

लक्षणामूलो ध्वनिरर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्यभेदेन सामान्यतो द्विविधः ॥ ८१ ॥

**वाच्यस्यार्थान्तरत्वेन परिणामो यदा भवेत् ।**
**अर्थान्तरे संक्रमितवाच्यमाहुस्तदा ध्वनिम् ॥**
**शृणु मे वचनं वत्स कुरु भक्तिं वृषध्वजे ।**

यदा वाच्योऽर्थोऽनुपयुज्यमानोऽर्थान्तरत्वेन परिणतस्तदार्थान्तरसंक्रमितवाच्यनामा ध्वनिः । यथा शृणु मे वचनमित्यत्र तथानुक्त्वापि वृषध्वजे भक्तिं कुर्विति कथनसंभवेन शृण्वित्यनुपयुक्तमाकाङ्क्षाविरहात् । अतो योग्यताविरहवदाकाङ्क्षाविरहेऽप्यन्वयानुपपत्तेः श्रद्धापूर्वकश्रवणविशेषरूपतया परिणमति । तथा शृण्वित्यनेनैव वचनस्यानुक्तसिद्धत्वाद्वचनमित्येतदप्यनुपयुज्यमानं वचनविशेषात्मकोपदेशरूपतया परिणमति । ततश्च मदुपदेशं श्रद्धापूर्वकं शृण्विति लभ्यते । तेन मद्वचनमवश्यमनुष्ठेयमिति लभ्यते ॥ यथा वा—
'त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति । आत्मीयां मतिमादाय स्थितिमत्र विधेहि तत् ॥'— अत्रास्मीत्यहमर्थे-

ऽव्ययम्। अहं त्वां वदामि। विद्वत्समाजः सभायामास्ते। तदात्मीयां मतिमादाय त्वयात्र स्थातव्यम्।— इति नटीं प्रति सूत्रधारवाक्ये त्वामहं वदामीत्यनुक्त्वापि कथनसंभवाद्वदामीत्यनुपयुक्तं वचनविशेषात्मकोपदेशरूपतया परिणमति। तथा त्वामित्यस्याप्यर्थादेव सिद्धेस्त्वामित्यप्यनुपयुज्यमानं तस्या नित्यं सावधानतां लक्षयति। तथाहमित्यपि वच्मीत्यनेनैव सिद्धत्वादनुपयुज्यमानं तस्याल्पकार्येष्वनियोक्तृत्वं लक्षयति। तथात्मीयामिति गुरूपदेशं विनाप्यतिगहनेष्वप्यर्थेष्वकुण्ठितप्रसरता लक्ष्यते। मतिमिति नाट्यशास्त्रपरिशीलनशालिनी मतिर्लक्ष्यते। ततश्च त्वामस्मि वच्मीत्येतदल्पकार्येष्वनियोजकोऽहं स्वतः सावधानामपि त्वामुपदिशामीति परिणमति। तेन मद्वचनमवश्यमनुष्ठेयमिति व्यज्यते। आत्मीयां मतिमित्येतच्चातिगहनेष्वप्यर्थेष्वकुण्ठितप्रसरां नाट्यशास्त्रपरिशीलनशालिनीं मतिमिति परिणमति। तेन तादृशमत्यादानेनैव विद्वज्जनानुरञ्जनं भवेन्नान्यथेति व्यज्यते। अत्र मूर्तद्रव्यस्यैवादानयोग्यत्वान्मतौ तदसंभवेनादानपदमत्रात्यन्ततिरस्कृतवाच्यं सत्प्राप्तिं लक्षयति। तेन च प्राप्तस्य त्यागायोगात्सर्वथा सावधानतयैवावस्थातव्यमिति व्यज्यत इत्याहुः। इयं चाजहत्स्वार्था। न च 'छत्रिणो गच्छन्ति' इत्यत्र न परिणामः, तत्कथमियमजहत्स्वार्थेत्यु-

च्यत इति वाच्यम् । वाच्यस्यार्थान्तरत्वेन परिणामो नाम वाच्यतावच्छेदकादन्येन प्रकारेण पदजन्योपस्थितिविषयत्वम् । तच्च छत्रिणामपि छत्रच्छत्रिसाधारणैकसार्थगन्तृत्वेनैवोपस्थितेरस्तीति ध्येयम् । इदमुभयं च वाक्यस्यार्थान्तरसंक्रमितत्व उदाहरणम् । पदस्य तथात्वे त्वग्र उदाहरिष्यते । एवमुत्तरत्रापीति ध्येयम् ॥ ८४ ॥

अथात्यन्तातिरस्कृतवाच्यं लक्षयति--

**वाच्यार्थे त्वन्वयायोग्ये स्यादत्यन्ततिरस्कृतम् ।**
**प्रिय त्वय्येव दाक्षिण्यं पुण्यैर्लब्धोऽसि किं परम् ॥**

यत्र वाच्यार्थस्यार्थान्तरपरिणत्याप्यन्वयायोग्यत्वं तत्रात्यन्ततिरस्कृतवाच्यो नाम ध्वनिः । यथा प्रिय त्वय्येवेत्यत्र शठे दक्षिणनायकत्वस्यायोगाद्विपरीतलक्षणया तदभावः प्रतिपाद्यते । तथा पुण्यपदेनापि तद्विरोधी लक्ष्यते । तेन चैवं शाठ्यकारिण्यपि त्वयि मया सान्त्वमेवोच्यते । तदितः परमपि वा नैवं शाठ्यमनुष्ठेयमिति व्यज्यते ॥ यथा वा—
"उपकृतं बहु यत्र किमुच्यते सुजनता प्रथिता भवता परम् । विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ॥"— इदमत्यन्तापकारिणं प्रति कस्यचिद्धीरोदात्तनायकस्य वचनम् । बहूपकृतमुपकारः कृतः । यत्रोप-

कारे । बहु वक्ष्यामीति विस्तरसंरम्भेण यत्रेति भणितिः । किमुच्यत इति वक्तुर्धीरोदात्ततयाक्षेपालंकाररीत्योपक्रान्तस्य वचनस्य निषेधः । भवता सुजनता परं सौजन्यमेव प्रथिता पृथूकृता । हे सखे, तत ईदृशमुपकारमेव सदा वितन्वन्संवत्सराणां शतं सुखितं यथा भवति तथाऽऽस्स्व ।— इत्यत्र विरोधिलक्षणयोपकारेणानुपकारः, सौजन्येन दौर्जन्यम्, विधानेनाविधानम्, सख्येन शात्रवम्, सौख्येन दुःखिता, संवत्सरशतावस्थानेन तद्वैपरीत्यं च लक्ष्यते । तेन चैवमपकारिण्यपि त्वयि मया सान्त्वमेवोच्यत इति स्वस्य महाशयत्वम्, एवमपकारे कृतेऽपि मया सोढमतोऽपकर्तुस्तव सपदि विपदुत्पत्स्यत इति वा व्यज्यते । अत्र विरोधिन्युपकारबाधान्मुख्यार्थगन्धोऽपि नेति जहल्लक्षणा । यद्यपि सारोपसाध्यवसानमूलाश्च केचिदविवक्षितवाच्यभेदाः संभवन्ति, तथापि तेषामप्यर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्ययोरेव यथायथमन्तर्भावसंभवान्न पृथगुक्ता इति ध्येयम ॥ ८५ ॥

एवं लक्षणामूलध्वनिमभिधायाभिधामूलध्वनिं निरूपयति—

**यस्तु वाच्याविवक्षायां गूढव्यङ्ग्यप्रधानकः ।**

**स विज्ञेयोऽभिधामूलो द्विविधश्चैष कथ्यते ।**
**असंलक्ष्यक्रमव्यङ्ग्यलक्ष्यव्यङ्ग्यक्रमात्मना ॥**

यत्र वाच्यस्य विवक्षितत्वे सति गूढव्यङ्ग्यप्राधान्यं तत्राभिधामूलो ध्वनिः । अत्र वाच्यसिद्ध्यङ्गादिगुणीभूतव्यङ्ग्येऽतिव्याप्तिवारणाय व्यङ्ग्यप्रधानक इति । अगूढरूपगुणीभूतव्यङ्ग्ये तद्वारणाय गूढेति । लक्षणामूलध्वनौ तद्वारणाय वाच्यविवक्षायामित्युक्तम् । ननु— अत्र वाच्यस्य विवक्षितत्वं न वक्तुमिष्टत्वम्; अविवक्षितवाच्येऽपि गतत्वात्, तत्रापि पदाद्वाच्यं वाच्याल्लक्ष्यमुपातिष्ठत इति वाच्येऽपि विवक्षासत्त्वात् । नापि स्वमात्रविश्रान्ततात्पर्यकत्वम्, व्यङ्ग्यप्रधानत्वेनासंभवात्— इति चेन्न । आकाङ्क्षायोग्यतावत्त्वमेव वाच्यस्य विवक्षितत्वम् । 'त्वामस्मि वच्मि—' इत्यादावनुपयोगाद्वाच्यस्य नाकाङ्क्षा 'उपकृतं बहु—' इत्यत्र न योग्यतेति भवति वाच्यविवक्षायामित्यनेन लक्षणामूलध्वनिव्युदास इति ध्येयम्। अयं चाभिधामूलो ध्वनिरसंलक्ष्यक्रमव्यङ्ग्यलक्ष्यव्यङ्ग्यक्रमभेदेन द्विविधः। लक्ष्यव्यङ्ग्यक्रम एव संलक्ष्यक्रमव्यङ्ग्य इत्यप्युच्यते । अत्र रसस्य प्राधान्यमाविष्कर्तुं प्रथममसंलक्ष्यक्रमव्यङ्ग्यस्य निर्देश इति केचित् । अन्ये तु—सूचीकटाहन्यायादस्य प्राङ्निर्देशः । न चैकस्यैव शृङ्गा-

रस्यानेके भेदा इति वक्ष्यमाणत्वेन तदभिव्यञ्जकानामसंलक्ष्यक्रमव्यङ्ग्यानामप्यनेकविधत्वमविशिष्टमिति वाच्यम्, तथाप्यसंलक्ष्यक्रमव्यङ्ग्यत्वेन रूपेणैक्यस्य वक्ष्यमाणत्वात्। न चैवमप्यसंलक्ष्यक्रमस्य लक्ष्यक्रमाभावरूपतया तन्निरूपणाधीननिरूपणत्वेन प्राङ्निर्देशो न युक्त इति वाच्यम्; असंलक्ष्यक्रमत्वं हि न लक्ष्यक्रमाभावः, किं तु नीलपीतयोरिव तयोः परस्परविरहव्याप्यत्वमेव न तु प्रतियोग्यनुयोगिभावः—इत्याहुः। ननु प्रथमं शब्दस्य श्रवणं ततो विभावादिप्रतीतिरिति क्रमस्य लक्ष्यत्वादलक्ष्यक्रमत्वमत्र कथमिति चेत्; सत्यम्। तथापि विभावादिप्रतीते रसाभिव्यक्तेश्च क्रमो न लक्ष्यत इत्यलक्ष्यक्रमत्वम्। न च शब्दश्रवणानन्तरं विभावादय एव प्रतीयन्ते न तु तदतिरिक्तो रसोऽभिव्यज्यत इति वाच्यम्, तत्र विभावादिप्रतीतिवद्रसाभिव्यक्तेरप्यपह्नोतुमशक्यत्वात्। तथा हि—'शिथिलशिथिलं न्यस्य स्वैरं धनुः शिखरे शिरो नयनसलिलैः कुर्वन्मौर्वीलतामपरामिव। अहह विकलः श्रावं श्रावं घनस्तनितध्वनिं किमपि किमपि ध्यायन्नार्यो न याति न तिष्ठति॥'—अत्र ये घनस्तनितादय उद्दीपनविभावा ये च शिथिलशिरोन्यासनयनसलिलवैकल्यनिरुद्देशध्यानगतिस्थित्यादयोऽनुभावा ये च तदभिव्यक्ताश्चिन्तावेगदैन्यादयो व्यभिचारिणस्त एवात्र

नानुभूयन्ते, किं तु विप्रलम्भशृङ्गाररसोऽप्यभिव्यज्यत एवेति सहृदयहृदयमेव प्रमाणम्। न च तथापि विभावादिप्रतीते रसाभिव्यक्तेश्च यौगपद्यात्क्रमो न विद्यत इत्यविद्यमानक्रम इत्येव वक्तुमुचितं न त्वलक्ष्यक्रमव्यङ्ग्य इति, क्रमस्यैवाभावादिति वाच्यम्। निर्हेतुकरसाभिव्यक्तौ सर्वदा तदभिव्यक्तिप्रसङ्गः। शब्दश्रवणमात्रस्य हेतुत्वेऽपि शब्दश्रवणानन्तरं सर्वत्र तदभिव्यक्त्यापत्तिः। विभावादिव्यञ्जकशब्दस्य हेतुत्वे च विभावादीनामेव लाघवात्तत्र हेतुत्वमित्यस्ति क्रमः। स तु व्युत्पन्नतमायाः प्रतिपत्तृप्रतीतेस्तीव्रप्रवृत्तितया शतपत्रपत्रशतभेदनक्रमवद्गर्जितश्रवणघनानुमितिक्रमवच्च न संलक्ष्यत इत्यसंलक्ष्यक्रमव्यङ्ग्य इत्येव वक्तुमुचितम्—इत्याहुः॥ ८६॥

तत्र प्रथमोद्दिष्टमसंलक्ष्यक्रमव्यङ्ग्यं लक्षयति—

**रसभावतदाभासभावशान्त्यादयो यदा।**
**प्राधान्येन स्फुरन्त्येषोऽलक्ष्यव्यङ्ग्यक्रमस्तदा॥**

रसाः शृङ्गारादयः, भावा देवादिविषया रतिर्निर्वेदादयो व्यभिचारिणश्च, तदाभासो रसाभासो भावाभासश्च, भावानां निर्वेदादीनां शान्तिः, आदिपदग्राह्या भावोदयभावसंधि-

भावशबलता वा यदा प्राधान्येन व्यज्यन्ते तदानीमसंल-क्ष्यक्रमव्यङ्ग्यध्वनिः । अत्र तदाभासशान्त्यादय इति वक्तुं शक्यत्वेऽपि भावशान्त्यादय इति मध्ये भावपदनिवेशो रसशान्त्यादिप्रतिषेधार्थः । तथा हि- रसस्य हि न शान्त्यु-दयौ संभवतः, तस्य नित्यत्वेन वक्ष्यमाणत्वात् । नापि संधिशबलते संभवतः, स्थायिभावस्य विभावाद्यसंवलने रसतयानभिव्यक्तेस्तत्संवलने तु रसतापर्यवसानेन विगलि-तवेद्यान्तरत्वादित्याहुः । केचित्तु भावशब्दस्य मध्ये ग्रहणं व्यभिचारिभावानामेवात्र भावशब्दप्रतिपाद्यत्वमिति द्योत-यितुमित्याहुः ॥ ८७ ॥

ननु रसादीनां व्यङ्ग्यत्वे रसवत्प्रेयऊर्जस्विसमाहि-तादयोऽलंकारा एव, ते च गुणीभूतव्यङ्ग्यप्रस्ताव एव वक्तुमुचिता न तु ध्वनिप्रस्ताव इत्यत आह--

**भिन्ना रसाद्यलंकारादलंकार्या इमे स्थिताः ॥**

इमे प्राधान्येनाभिव्यज्यमाना रसादयः । तथा च रसादी-नां यत्राप्राधान्यं तत्र रसवदादयोऽलंकाराः । ते च गुणी-भूतव्यङ्ग्यप्रस्ताव एव वक्ष्यन्ते । यत्र तु तेषां प्राधान्यं तत्रालंकार्या एव त इतीह तदभिधानं युक्तम् । रसभावा-

दिध्वनीनामुदाहरणं तु रसनिरूपणप्रस्तावे स्फुटतरं लक्ष्यत इति नेह प्रपञ्चितमिति ध्येयम् ॥ ८८ ॥

यदा रसादयो व्यज्यन्ते तदानीमसंलक्ष्यक्रमव्यङ्ग्यच इत्युक्तम् । तत्र प्रसङ्गाद्रसादिस्वरूपं लिलक्षयिषुरादौ रसस्वरूपमाह—

**कारणान्यथ कार्याणि सहकारीणि यानि च ।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥**

**विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः**
**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः**

लोके हि यौवनोद्भिन्नचित्तवृत्तेर्यूनः सुदृशश्च मिथो दर्शनेन श्रवणेन वा प्रीतिरुत्पद्यते । ततश्च तदीयलावण्यालंकारादिभिस्तटस्थैरुद्यानमन्दसमीरणचन्द्रादिभिश्चोद्दीपिता सा प्रीतिरुत्कण्ठापरनामधेयाभिलाषाकारेण परिणमते । तथाभूतां च प्रीतिं रतिमाचक्षते । ततश्च मिथः संगत्युपायं जिज्ञासमानयोर्यूनोश्चिन्ताग्लानिशङ्काविषादादयः प्रादुर्भवन्ति । तदनु च प्रीत्या चिन्तादिभिश्च तदुभयव्यञ्जिकाश्चेष्टा जायन्ते । तदनन्तरं स्वयं वा दूतीप्रेषणेन वा संगमे जाते सा प्रीतिरुत्तरोत्तरमुज्जृम्भते । चिन्तादयः पुनरपगच्छन्तीति स्थितिः ।

एवं रसान्तरेष्वप्युन्नेयम्। तथा च लोके काव्यनाट्यव्यतिरिक्तनायिकानायकव्यवहारस्थले स्थायी यो रत्यादिस्तस्य यानि कारणानि नायिकानायकरूपाणि तदीयलावण्यालंकरणोद्यानमन्दसमीरणादीनि च यानि च रत्यादेश्चिन्तादेश्च कार्याणि कटाक्षभुजाक्षेपस्तम्भप्रलयरोमाञ्चादीनि यानि च रत्यादेः सहकारीणि परिपोषहेतुभूतानि निर्वेदचिन्तादीनि, तानीमानि कारणादीनि नाट्येऽभिनयप्रधाने नटव्यापारे साक्षात्कारयोग्ये काव्ये गुणालंकारादिविशिष्टे श्राव्ये संदर्भविशेषे च यदि स्युस्तत्तदा कारणानि विभावा इति कथ्यन्ते, विशेषेण रत्यादयोऽमीभिर्भाव्यन्त इति व्युत्पत्तेः। यानि तु कार्याणि तान्यनुभावा इत्युच्यन्ते रत्यादिकं चिन्तादिकं चानुभावयन्त्यनुमापयन्तीति व्युत्पत्तेः। यानि तु सहकारिकारणानि तानि व्यभिचारिण इति कथ्यन्ते, विविधमाभिमुख्येन चरन्तीति व्युत्पत्तेः। एतैरुक्तरूपैर्विभावाद्यैर्व्यक्तो विशेषेणाक्तः पानकरसन्यायेन मिश्रणेनैवास्वादनीयतां प्राप्तः स्थायी चिन्तादिवदनपायितया स्थायी भावो रत्यादिको रस इति रसतत्त्वविद्भिः स्मृतः। उक्तं हि भरतेन—"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति॥

अत्र च सूत्रे संयोगपदं निष्पत्तिपदं चान्यथान्यथा तद्व्याख्यातारो व्याचक्षते। तत्र भट्टलोल्लटप्रभृतयः—द्विविधो विभाव

आलम्बनविभाव उद्दीपनविभावश्चेति । तत्र यानालम्ब्य विषयीकृत्य रत्यादयो जायन्ते ते नायिकानायकादय आलम्बनविभावाः । तदीयलावण्यादयश्चन्द्रमन्दसमीरणादयश्च जातं रत्यादिकमुद्दीपयन्त्यभिलाषाद्याकारेण परिणमयन्तीति व्युत्पत्तेरुद्दीपनविभावाः । ताभ्यामुभाभ्यां रत्यादिको भावो जायते । यद्यप्युद्दीपनानां न रत्यादिजनकत्वं तथापि विशेषाकारपरिणामजनकत्वात्तेषामपि कारणत्वमिति ध्येयम् । अनुभावाः कटाक्षभुजाक्षेपादयः स्तम्भप्रलयरोमाञ्चस्वेदवेपथुवैवर्ण्याश्रुवैस्वर्यादयश्च । तैरनुभावैः कार्यभूतैरप्रत्यक्षोऽपि रत्यादिभावः प्रतीतियोग्यतां नीयते, व्यभिचारिभिर्वक्ष्यमाणनिर्वेदादित्रयस्त्रिंशद्भावैरुपचीयते । एवं च स्थायिविभावयोः कार्यकारणभावः, स्थाय्यनुभावयोर्ज्ञाप्यज्ञापकभावः, स्थायिव्यभिचारिणोः पोष्यपोषकभावश्च संबन्धः संयोगशब्दार्थः । उत्पत्तिर्ज्ञप्तिः पुष्टिश्च निष्पत्तिशब्दार्थः । ततश्च विभावैर्जनितोऽनुभावैः प्रतीतो व्यभिचारिभिः पुष्टो रत्यादिभावो मुख्यो रसः । स च वस्तुतः सीतादिगोचरो रामादावेव वर्तते । स एव रसः काव्येषु विभावादिप्रतिपादकैः पदैरभिधाख्यया मुख्ययैव वृत्त्या सहृदयैः प्रतीयमानो रस इत्युच्यते । यथा च रसप्रतीतिः काव्येष्वभिधयैव तथा पञ्चमोल्लासे भट्ट-

लोल्लटमतोपन्यासप्रस्तावे वक्ष्यते। नाट्ये तु रामादावनु कार्य एव स्थितो रत्यादिको भावो रामाद्यनुकर्तरि नटे रामताद्रूप्यारोपात्तत्रासन्नपि सामाजिकैः प्रतीयमानो रस इत्युच्यते। तथा च विभावादिजन्यो रसो रामादावनुकार्ये एव। अधुना तु न कुत्रापि रसो जन्यते। किं तु नटे केवलं सामाजिकैरारोप्यते।—इत्याहुः॥ श्रीशङ्कुकादयस्तु—भवतु तावत्काव्येष्वभिधयैव रसप्रतीतिः। नाट्ये तु किंचिच्छेदसहिष्णोरभेदस्यैव ताद्रूप्यत्वेन भेदावगाहिन्यास्ताद्रूप्यप्रतीते रसप्रतीतिविरोधितया तत्प्रतीत्यङ्गत्वकथनमतिसाहसम्। किं च संयोगनिष्पत्तिपदयोरर्थत्रयपरताकल्पनं चायुक्तम्। तस्मादेवं व्याख्येयम्— लोके हि चतुर्विधा प्रतीतिः सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभेदात्। तत्र या 'राम एवायम्' इति रामत्वायोगव्यवच्छेदिका प्रतीतिः, या च 'अयमेव रामः' इत्यन्ययोगव्यवच्छेदिका, या च 'रामो भवत्येव' इत्यत्यन्तायोगव्यवच्छेदिका, या च 'न रामोऽयम्' इति रामभेदावगाहिनी प्रतीतिः, ताः सर्वाः सम्यक्प्रतीतयः। 'न रामोऽयम्' इति बाधाशिरस्का तु 'रामोऽयम' इति धीर्मिथ्याप्रतीतिः। 'अयं रामो न वा' इति धीस्तु संशयः। 'रामसदृशोऽयम्' इति प्रतीतिः सादृश्यधीः। एताभ्यश्चतुर्विधाभ्यः प्रतीतिभ्यो विलक्षणा 'रामोऽयम्' इति निर्गलिता-

वधारणरूपा प्रतीतिरनुकर्तरि नटे जायते यथा चित्रतुरगे 'तुरग एवायम्' इत्यादिप्रतीतिविलक्षणा 'तुरगोऽयम्' इति प्रतीतिस्तद्वत्। न च, प्रतीतेः सम्यक्त्वं मिथ्यात्वं चेति द्वैविध्यमेव, तत्कथं तदुभयविलक्षणा प्रतीतिरुच्यते कथं च नटे रामत्वप्रतीतिर्मिथ्याप्रतीतेर्विलक्षणा चेति वाच्यम्। सत्यम्; व्यवच्छेदादिविषयकत्वमिह सम्यक्त्वं बाधशिरस्कत्वं च मिथ्यात्वमभिमतमित्युक्तरूपनटविषयकप्रतीतेर्व्यवच्छेदादिविषयकत्वाभावाद्बाधशिरस्कत्वाभावाच्च तदुभयवैलक्षण्यमविरुद्धम्। न च रामभेदावगाहिप्रतीते रसप्रतीत्यनङ्गतया तद्वैलक्षण्यावश्यंभावेऽपि सावधारणप्रतीतिवैलक्षण्यकथनमसंगतमिति वाच्यम्, अतिरिक्तस्य व्यवच्छेदभानेन तादृशप्रतीतीनामपि विगलितवेद्यान्तररसप्रतीत्यनङ्गतया तद्वैलक्षण्यस्यापि रसप्रतीत्यनुकूलप्रतीताववश्यवाच्यत्वात्। एवं च तादृशप्रतीत्या नटे विषयीकृते सति, तेनैव नटेन यदा कारणकार्यसहकारिणोऽभिनयेन प्रकाश्यन्ते तदा कारणादयो विभावानुभावव्यभिचारिपदव्यपदेश्या भवन्ति। ननु कथं नटेन विभावप्रकाशनं कथं वा तेन तत्कार्यस्वेदादिप्रकटनम्, तस्मिंस्तत्कारणविभावाद्यभावादिति चेन्न। 'सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः। मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी

लोचनगोचरं गता ॥'— अत्र सेयमिति यद्विरहात्तादृशानि दुःखानि मयानुभूतानीति प्रत्याय्यते । ममाङ्गेष्विति बहुवचनेन दर्शनमात्रेण सर्वावयवसंतापनिर्वापणक्षमनिरतिशयनिर्वृतिजनकत्वम् । सुपूरा सुखेन दृशि पूरयितुं शक्या । तेन कर्पूरशलाकिकायाः पृथुलस्निग्धशीतलत्वादयः प्रत्याय्यन्ते । तादृशकर्पूरशलाकिकाऽभेदारोपणेन नायिकाया लोचनानन्दकन्दलनक्षमत्वं प्रत्याय्यते । मनसो ये मनोरथाश्चुम्बनालिङ्गनादिविषया इच्छाविशेषास्तेषां शरीरिणी श्रीरक्षय्या संपत् । अत्र मनोरथानां मनोमात्रधर्मत्वेऽपि मनस इति ग्रहणं तद्विषयकमनोरथैर्मनसः सर्वदाप्ययोगव्यवच्छेदार्थम् । अनेन निरन्तरमनोरथविषयता प्रत्याय्यते । प्राणेश्वरीत्यनेन प्राणानां प्रत्यापत्तिकरत्वं व्यज्यत इति ध्येयम् । एतादृशानां संभोगशृङ्गारविषयाणामालम्बनविभावविषयाणां काव्यानामनुसंधानबलात्, तथा 'दैवादहमत्र तया चपलायतनेत्रया वियुक्तश्च । अविरलविलोलजलदः कालः समुपागतश्चायम् ॥'— अत्र चटुलदीर्घलोचनया तयाहमत्र दैवाद्दुरदृष्टवशाद्वियुक्तश्च निबिडचलमानवलाहकोऽयं कालश्च समुपागत इति चकाराभ्यां वियोगजलदकालसमागमक्रिययोर्यौगपद्याद्दुरुत्तरोऽनर्थः प्रत्याय्यते । एतादृशानां विप्रलम्भशृङ्गारविषयाणामुद्दीपनविभावविषयाणां वा का-

व्यानामनुसंधानान्निपुणतमसूत्रधारशिक्षागृहीतार्थगुणनिका-सध्रीचीनाद्विभावानां तादृश्या गुणनिकयैव स्वस्मिन्स्थाय्य-भावेऽपि तत्कार्याणां रोमाञ्चादीनां च नटेन प्रकाशनमुपप-न्नम् । एवं च काव्यानुसंधानाद्विभावस्य प्रत्यक्षाद्रोमाञ्चादीनां रोमाञ्चादिलिङ्गाद्व्यभिचारिणां चोपस्थितौ, तत्प्रभवसंस्कार-जन्यतावद्गोचरस्मृतिः, तत्तत्सहकृतेन व्याप्तिस्मृतिमता मनसा पक्षीभूतनटवृत्तितया सामाजिकैर्वस्तुतस्तत्रासन्नेव रत्यादिको भावोऽनुमीयते । न च विभावादीनां नटे कृत्रिमत्वात्कथं तै रत्याद्यनुमितिरिति वाच्यम् । न हि स्वरूपसन्तस्ते स्था-यिनमनुमापयितुमीशते, किं तु ज्ञाताः । तज्ज्ञानं च भ्रम-रूपं विशेषादर्शनदशायामिहापि न विरुद्धम्, नटे रामत्वा-रोपेण भ्रमस्य सुश्लिष्टत्वात् । न चैवं स्थायिनोऽनुमेयत्वे वह्न्यादिवच्चमत्कारकारिता न स्यादिति वाच्यम् । चमत्कार-कारित्वं तदभावो वा नानुमेयत्वनिबन्धनम्, किं तु वस्तु-स्वभावायत्तम् । अत एवानुमीयमानापि कामिनी हृदयाह्ला-दाय प्रभवति । ततश्चानुमीयमानस्यापि रत्यादेरानन्दजनने प्रकर्षकाष्ठागतत्वाच्चमत्कारकारित्वमविरुद्धम् । अनुमानं तु— 'रामोऽयं सीतालम्बनप्रीतिप्रकर्षविशेषाश्रयस्तद्विभावादिम-त्त्वाद्व्यतिरेकेणाहमिव' इति । यदा तु 'स्वकान्ताविषय-कप्रीतिप्रकर्षाश्रयः' इति साध्यं तदा 'अहमिव' इत्य-

न्वयीति द्रष्टव्यम् । अयमत्र निष्कर्षः—चतुर्विधप्रतीतिविलक्षणया 'रामोऽयम्' इति प्रतीत्या विषयीक्रियमाणेन नटेन काव्यानुसंधानाच्छिक्षाबलाच्चाभिनीतैर्विभावादिभिस्तस्मिन्नविद्यमानोऽपि रत्यादिरनुमीयमानः सामाजिकैश्चर्व्यमाणो रस इति । ततश्च सूत्रगतं संयोगपदं व्याप्तिरूपसंबन्धपरम्, निष्पत्तिपदं चानुमितिरूपसामाजिकचर्वणापरम् ।—इत्याहुः ॥

भट्टनायकादयस्तु तटस्थीभूतनटगतत्वेन रत्याद्यनुमितौ चमत्कारो न स्यात् । यदि च वस्तुसौन्दर्यबलाद्यथातथाप्युपस्थितौ चमत्कारस्तदा शृङ्गारादिपदादपि तदुपस्थितौ चमत्कारः स्यात् । किं च रसस्य पूर्वमनुपस्थितेर्व्यतिरेकव्याप्तिग्रहस्याप्यसंभवान्नानुमितिसंभवः । न च 'रामोऽयं सीतालम्बनरत्याश्रयस्तद्विषयकविभावादिमत्वात्' इति रत्याश्रयत्वमेव साध्यम्, रतिश्चोपस्थितैवेति न व्याप्तिग्रहानुपपत्तिः, लिङ्गोपहितलैङ्गिकभानाभ्युपगमेन विभावादिरित्याद्युभयविषयत्वेनानुमिते रसविषयत्वपर्यवसानमिति वाच्यम्; एवमपि रसास्वादनस्य धारावाहनरूपता न स्यात्सिद्धसाधनेन पक्षतावच्छेदकावच्छेदेनानुमित्यन्तरानुदयावश्यंभावात् । न चान्तरानुमित्सया पुनः पक्षतासंभव इति वाच्यम्, रसस्य विगलितवेद्यान्तरतया तदास्वादे मध्ये तदनुदयात् । न च तर्हि नटे तादृशरत्याद्यनुमित्यनन्तरं सामाजिकात्मनि रस

उत्पद्यत इति वाच्यम्, सामाजिके तज्जनकविभावादिसामग्रीविरहात्। अत एव सामाजिकात्मनि रसोऽभिव्यज्यत इत्यप्यपास्तम्, तत्र तदभिव्यञ्जकविभावादिसामग्रीविरहात्। किं तु विभावानुभावादीनां रामाद्यपेक्षया पूर्वमसाधारणानां सहृदयेषु यत्साधारणीकरणं तदनुकूलोऽभिधालक्षणाभ्यां भिन्नः काव्ये नाट्ये च भावकत्वाख्यो व्यापारोऽवश्यमङ्गीकर्तव्यः। इतरथा रामाद्यसाधारणानां विभावादीनां साधारण्येन प्रतीतिर्न स्यात्। तेन च व्यापारेण साधारणीक्रियमाणः स्थायी रत्यादिको रजस्तमोनभिभूतसत्त्वाख्यगुणोत्कर्षात्प्रकाशमानो य आनन्दस्तदात्मिकायाः संविदो या विगलितवेद्यान्तरता तत्तुल्येन भोगाख्येन व्यापारेण भुज्यमानो रस इत्युच्यते। तदयं निष्कर्षः—काव्ये नाट्ये चाभिधालक्षणाद्वयाभिन्नेन भावकत्वाख्यव्यापारेण साधारणीकृतो भोगाख्येन व्यापारान्तरेण सहृदयैर्भुज्यमानो रत्यादिकः स्थायी रस इति। ततश्च सूत्रे संयोगपदं साधारणीकरणपरं निष्पत्तिपदं भोगपरम्। —इत्याहुः॥ श्रीमदभिनवगुप्ताचार्यपादास्तु— वक्ष्यमाणरीत्या विभावादिसाधारणीकरणरसभोगयोरुपपत्तावतिरिक्तव्यापारद्वयकल्पनमयुक्तम्। किं चास्मिन्पक्षे रसो विभावादिभिर्जन्यते ज्ञाप्यतेऽभिव्यज्यते वा। नाद्यो, दूष्यत्वात्। नान्त्यः, अभिव्यक्ते-

स्त्वयैव दूषितत्वात्। तस्मादेवं व्याख्येयम्—सर्वेषां हि श्रोतृणां प्रेक्षकाणां वा नित्यसुखात्मको रत्यादिकः स्थायी वासनारूपेणात्मनि तिष्ठति । ततश्च ये काव्यनाट्यव्यतिरिक्तस्थले नायिकानायकादिभिः कारणैस्तच्चेष्टादिभिः कार्यैस्तदनुमितैश्चिन्तौत्सुक्यादिभिः सहकारिभिश्च स्थायीभूतरत्याद्यनुमाने पुनः पुनः शीलनेन प्रज्ञातिशयवन्तस्तादृशानां सामाजिकानां काव्येषु संदृब्धैर्नाट्येष्वभिनीतैर्वा कारणैर्वासनात्मना स्थितस्य रत्यादेः स्थायिनो विभावनमङ्कुरदशार्पणं क्रियते, तादृशैः कार्यैरनुभावनमनुभवविषययोग्यता क्रियते, सहकारिभिर्व्यभिचरणं विशेषेणाभिमुख्येन च चरणं ज्ञानं सुप्रकटत्वं क्रियते । अत एव काव्ये नाट्ये च कारणाद्यो विभावादिशब्दैर्व्यपदिश्यन्ते । ते च विभावादयः काव्येषु नाट्येषु च साधारण्येनैव प्रतीयन्ते, न तु 'ममैवैते' 'शत्रोरेवैते' 'तटस्थस्यैवैते' इति संबन्धिविशेषस्वीकारेण नापि 'न ममैवैते' 'न शत्रोरेवैते' 'न तटस्थस्यैवैते' इति संबन्धिविशेषपरिहारेण वा प्रतीयन्ते । तथा हि—'पुष्पोद्भेदमवाप्य केलिशयनादुत्थाय दूरस्थया कान्तेन स्फुरिताधरेण निभृतं भ्रूसंज्ञया याचिते । आच्छाद्य स्मितपूर्णगण्डफलकं चेलाञ्चलेनाननं मन्दान्दोलितकुण्डलस्तबकया तन्व्या विधूतं शिरः ॥' इत्यादिकाव्येषु य एते

नायिकादय आलम्बनविभावा ये च पुष्पोद्भेदादय उद्दीपनविभावा ये चाधरस्फुरणादयोऽनुभावा ये च तदभिव्यञ्जिता औत्सुक्यादयो व्यभिचारिणश्च, न हि ते 'ममैवैते' इत्यादिसंबन्धिविशेषस्वीकारानियमम् 'न ममैवैते' इत्यादिसंबन्धिविशेषपरिहारनियमं वा पुरस्कृत्य प्रतीयन्ते, किंतु साधारण्येनैव। ततश्च काव्ये शब्देन नाट्येऽभिनयेन विभावादीनां साधारण्येनोपस्थितौ तद्बलात्तत्काले सामाजिकानाम् 'अहम्' इति परिमिता प्रमातृता विगलितवेद्यान्तरसंपर्कशून्यः साधारणरूपः प्रमातृभावश्चोन्मिषति। तथोन्मिषितप्रमातृभावैश्च सामाजिकैः स्वस्वात्मनि सूक्ष्मरूपेणावस्थितो ज्ञानानन्दस्वरूपो रत्यादिकः स्थायी विभावादिप्रतीतिसंवलनेन समाविर्भूतः साधारण्येन गोचरीक्रियते। न चान्यस्य विभावादेः साधारण्यात्कथमन्यस्य स्थायिनः साधारण्यमिति वाच्यम्, व्याप्यसाधारण्याद्व्यापकसाधारण्यवदुपपत्तेः। न च साधारण्येन तत्प्रतीतौ न मानमिति वाच्यम्, सकलसहृदयहृदयसंवादस्यैव मानत्वात्। न च ज्ञानाभिन्नस्य स्थायिनः कथं ज्ञानगोचरता विषयविषयिभावस्य भेदगर्भत्वादिति वाच्यम्, ज्ञानाभिन्नस्याप्यात्मन इव स्थायिनोऽपि प्रकाशमानत्वाविरोधेन विषयत्वोपचारात्। न चैतादृशस्थायिनि किं मान-

मिति वाच्यम्, चर्वणैव मानम्। न चैवमभिव्यक्तः स्थायी सर्वदा चर्व्येतेति वाच्यम्, विभावादिज्ञानसं-वलनदशायामेव तस्याभिव्यक्त्यभ्युपगमेन तज्ज्ञानविर-हदशायां तस्य तिरोभावाभ्युपगमात्। न चैवं वि-भावादीनां तदभिव्यक्तिहेतुत्वे स्थायिनस्ते पृथगनुभूयेरन्, ततश्च रसस्यासंलक्ष्यक्रमव्यङ्ग्यत्वविरोधो विभावसंवलिततयैव स्थाय्यनुभवस्वीकारे च विभावादीनां व्यञ्जकत्वानुपपत्तिरिति वाच्यम्। यद्यपि विभावादयः प्रथमं शब्देनाभिनयेन वा प्रत्येकं ज्ञायन्ते पश्चाच्च यथा पानकरसे शर्करामाधुर्यं लिकुचफलरसाम्लता कर्पूरादिगतसौरभादिकं चानपह्नुतमिथश्चमत्कारातिशयमनुभूयन्ते तथा ते विभावादयः स्थायिना संवलिता अनपह्नुतमिथश्चमत्कारमनुभूयन्त इत्यस्ति क्रमः, तथापि यथा स्तनितश्रवणव्याप्तिस्मरणपरामर्शघनानुमितीनां क्रमसत्त्वेऽपि व्युत्पन्नमतीनां झटित्यनुमित्युदयात्क्रमो न लक्ष्यते तथात्रापि विभावादिप्रतीतीनां विभावादिसंवलितस्थाय्यनुभवस्य च झाटित्यात्क्रमो न लक्ष्यत इत्यसंलक्ष्यक्रमत्वं रसस्य न विरुद्धम्। एवं पानकरसन्यायेन विभावादिसंवलिततया चर्व्यमाणः स्थायी नटे रामादिप्रतीतिदार्ढ्यात्स्फुर इव परिस्फुरन्यथा यथा चर्वणाधारावाहिकतया प्रकृष्यते तथा तथा हृदयं प्रविशन्निव सर्वाङ्गमभिव्याप्यालिङ्ग-

न्निव स्वव्यतिरिक्तं वस्त्वन्तरं तिरोदधदिवाखण्डाद्वयब्रह्मान-न्दमनुभावयन्निवालौकिकचमत्काराविष्कारकारी शृङ्गारादि-को रस इत्युच्यते। न चैवं करुणादिरसस्थायिनां नित्यदुः-खात्मकत्वमप्यभ्युपगन्तव्यं स्यादिति वाच्यम्, तत्रापि नि-त्यसुखस्यैव स्थायित्वात्। अत एव तत्र प्रवृत्तिः। तत्रापि विभावाद्युक्तसामग्र्या सुखाभिव्यक्तेरनुभवसिद्धत्वाच्च। न चैवमेक एव रसः स्यात्सुखात्मकस्य स्थायिन एकत्वादिति वाच्यम्, विभावादिभेदेन भेदव्यवस्थितेः। न चैवं करुणादावश्रुप्रभृत्यनुपपत्तिरिति वाच्यम्; लोके हि स्वरूपतो यस्माद्यदुत्पत्तिस्तस्मादेव ज्ञायमानात्तदुत्पत्ति-र्वस्तुस्वाभाव्यादित्यविरोधः। तदयं निष्कर्षः— सामाजि-केषु नित्यसुखात्मकः सूक्ष्मरूपेण स्थितः स्थायी शब्देना-भिनयेन वा विभावादिषु प्रत्येकं प्रत्येकं प्रतीयमानेष्वङ्करा-द्यवस्थां प्राप्तः शब्दादिना साधारणतयैव प्रतीतैस्तैर्विभावा-दिभिरभिव्यक्ततया स्वयमपि साधारणतयैव पानकरस-न्यायेन विभावादिसंवलिततया चर्व्यमाणश्चमत्कारैकघनः शृङ्गारादिको रस इति। ननु विभावाद्यन्वयव्यतिरेकानुवि-धायिनो रसस्य तत्कार्यतैव युक्तेति चेन्न; तथा सति विभावादिनाशेऽपि तस्य सद्भावप्रसङ्गात्। न चास्य द्वित्वा-दिवन्निमित्तनाशनाश्यतेति वाच्यम्, तत्रापि संख्याया

नित्यतयापेक्षाबुद्धेर्व्यञ्जकत्वमात्रत्वाभ्युपगमान्नित्यसुखातिरि-क्तस्य रसस्यानङ्गीकारेण तस्य कार्यत्वायोगाच्च । न च तर्हि ज्ञाप्योऽस्त्विति वाच्यम्, सूक्ष्मरूपेण स्थितस्य स्थायिनो रसात्मकतयाभिव्यक्तौ विभावादेरुपयोगे न पूर्वं सिद्धस्य तस्य वह्न्यादिवदभावेन ज्ञाप्यत्वानुपपत्तेः । न चैवं सिद्धस्यैव घटादेर्दीपादिव्यङ्ग्यतेति प्रागसिद्धस्य तस्य कथं विभावादिव्यङ्ग्यतेति वाच्यम्, विभावादिसंवलित-तया चर्वणैव तस्य व्यक्तिरित्यलौकिकस्यैव व्यङ्ग्यत्वस्येह स्वीकाराच्चर्वणीयतया रसस्य दुरपह्नवत्वात् । न च कारकत्वज्ञापकत्वाभ्यामन्यदिदं व्यञ्जकत्वं न क्वापि दृष्टचरमिति वाच्यम्; अन्यत्रादर्शनेऽपि रसस्वरूपस्य कार्यत्वज्ञाप्यत्वानु-पपत्ते रसप्रतीतिश्च सर्वानुभवसिद्धतया दुरपह्नवत्वेनात्रैव तथाविधव्यञ्जकत्वकल्पनेऽप्यदोषात्, प्रत्युतान्यत्रादर्शनस्या-लौकिकत्वसिद्धेर्भूषणत्वात् न च तर्हि रसस्य कार्यत्वव्यव-हारानुपपत्तिरिति वाच्यम्, चर्व्यमाणतया रसस्याभिव्यक्ति-निष्पत्त्या कार्यत्वव्यवहारोपपत्तेः । इयं च रसप्रतीतिः प्रत्यक्षादिप्रमितेर्विलक्षणैव, तस्या घटपटादिबाह्यपदार्थवि-षयतया लौकिकत्वादस्याश्चान्तरनित्यसुखप्रकाशरूपत्वात् । तथा ये परिमिततया स्वात्माभिन्नतया जगत्प्रत्यक्षयन्ति योगिनस्तज्ज्ञानादपीयं विलक्षणा, तादृशयोगिज्ञानस्य ताट-

स्थ्येनैव जगदवभासकत्वादस्याश्च स्थायिभिन्नतयैव विभा-
वादिविषयत्वात्। एवमपरिमिताद्वितीयात्ममात्रपर्यवसितयो-
गिज्ञानादपि विलक्षणेयम्, तादृशयोगिज्ञानस्य वेद्यसंस्पर्श-
रहितत्वादस्याश्च विभावादिपरामर्शप्रधानत्वात्। अतो
लोकविलक्षणेयं रसप्रतीतिः। एवं चैतादृश्यामलौकिकप्र-
तीतौ प्रकाशमानत्वेन रसस्य ज्ञाप्यत्वव्यवहारोऽप्यौपचारिक
एव। न च तस्य मुख्यमेव ज्ञाप्यत्वमास्तामिति वाच्यम्।
किं तज्ज्ञापकं निर्विकल्पकं सविकल्पकं वा। नाद्यः, रस-
प्रतीतेर्विभावादिसंवलनावगाहितया निर्विकल्पकत्वानुपपत्तेः।
नान्त्यः, सविकल्पकविषयत्वे रसस्य सविकल्पकान्तरवि-
षयघटादिवच्चर्वणैकसारता लोकोत्तरानन्दरूपता स्वसंवेदन-
मात्रसिद्धता च न स्यात्। न चैवमितरनिषेधस्येतरविधिना-
न्तरीयकतया रसप्रतीतेर्निर्विकल्पकभिन्नतया सविकल्पकत्वं
सविकल्पकभिन्नतया निर्विकल्पकत्वं चेत्युभयात्मकत्वं विरु-
द्धमापद्येतेति वाच्यम्, उभयात्मकत्वमपि पूर्ववल्लोकोत्तरता-
मेव तस्या अभिव्यनक्ति न विरोधम्। वस्तुतः स्वप्रकाशात्म-
स्वरूपसंविदस्तृतीयकोटेरपि सत्त्वादुभयभेदेऽपि नोभयात्म-
कत्वमित्यनवद्यम्। ततश्च सूत्रगतं संयोगपदं संवलनपरं निष्प-
त्तिपदं चाभिव्यक्तिपरम्। यद्यपि काव्ये नाट्येऽपि विभावाद्य-
नुसंधानवशात्सामाजिकानां यः सुखविशेषो जन्यते स एव

रस इत्यपि वक्तुं शक्यम्, तथापि परमप्रेमास्पदत्वेनात्मनः सुखात्मकत्वमवश्यं वाच्यम्। ततश्च तदतिरिक्तजन्यसुख-कल्पनायां गौरवाद्विभावादिसंवलिततयाभिव्यक्तमात्मस्वरूपं सुखमेव रस इत्युक्तम्।– इत्याहुः॥ ननु सूत्रे विभावादीनां मिलितानां निर्देशो न युक्तः प्रत्येकमेव तेषां रसाभिव्यक्ति-समर्थत्वात्, अतो विभावैर्वानुभावैर्वा व्यभिचारिभिर्वा संयोगाद्रसनिष्पत्तिरित्येव वक्तव्यमिति चेन्न; तेषामेकैक-स्यानेकरससाधारणतयानैकान्तिकत्वेन मिलितानामेव रसा-भिव्यञ्जकत्वात्। तथा हि– व्याघ्रादयो हि भयानकस्येव वीराद्भुतरौद्राणामपि विभावाः। कश्चित्किल व्याघ्रादिकं हिंस्रमालोक्य कातर्याद्बिभेति, कश्चित्पुनर्विक्रमादुत्सहते, अन्यः कुतूहलेन विस्मयते; इतरः क्रुध्यतीति विभावानामनैकान्त्यम्। तथाश्रुपातादयः शृङ्गारस्येव करुणभयानकयोरप्यनुभावाः। तथा हि– यथा कश्चिद्रतिमनुभवन्नानन्देनाश्रु मुञ्चति तथा परः परदुःखेन शोचन्नश्रु मुञ्चति, तथान्यः सर्पादिदंशाद्भीतोऽश्रु मुञ्चतीत्यनुभावानामनैकान्त्यम्। तथा चिन्तादयः शृङ्गारस्येव वीरकरुणभयानकानाम्। तथा हि– यथा विप्रलम्भेन चिन्ता तथोत्साहेन शोकेन भयेनापीति व्यभिचारिणामनैकान्त्यम्। ततश्च विभावा-दीनां प्रत्येकमनेकरससाधारण्यान्नैकैकमात्रादेकस्यापि रस-

स्याभिव्यक्तिरिति मिलिता निर्दिष्टाः। ननु—मिलितानामपि यत्र साधारण्यं यथा शान्तिशृङ्गारयोः, तत्र ह्येकस्या एव कामिन्याः कुणपत्वेन च कान्तात्वेन च परिव्राट्कामुकयोः प्रतीतिविषयत्वादुभयरसविभावत्वम्, अश्रुपातस्योभयानुभावत्वम्, चिन्ताया उभयव्यभिचारित्वं च, तत्र किं विनिगमकम्— इति चेत्; उच्यते— तत्र केषांचित्साधारण्येऽप्यसाधारणमन्यं व्यभिचारिणमनुभावं चादाय रसविशेषाभिव्यक्तिरित्याहुः। ननु— विभावादीनां प्रत्येकमपि रसाभिव्यञ्जकता दृश्यते। तथा हि— 'वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः। धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे॥'— इयं धारारूढमानतया प्रसादकालानभिज्ञां कामपि मुग्धां प्रति प्रसादं नेतुकामायाः सख्या उक्तिः। मुग्धेऽवसरानभिज्ञे, प्रसीद। अयमेव प्रसादावसरः। कुतः? नभो मधुपश्यामलजलगर्भमेघदन्तुरितम्। मेघस्य विशेषणद्वयेनोद्दीपकताधिक्यं द्योत्यते। तथा भ्रमराणां कोकिलानां च कूजितैर्दिशां श्रीः शोभातिशयेन जृम्भते। वसन्त इव वर्षास्वपि कोकिलरुतं कविसंमतमेवेति न कालविरोध इति ध्येयम्। भूमिरप्यभिनवाङ्कुरव्याजपाषाणदारणवती। ततश्च वियति दिक्षु भुवि वा चक्षुषी अपि निधातुं न शक्यते, दूरेतरां

प्राणधारणकथेति व्यज्यते। यदि च 'प्राणा गच्छन्तु नाम, मानोन्नतं प्रियं न द्रष्टुमप्युत्सहे' इति मन्यसे तदपि नास्ति, यतोऽयं प्रणतिपरः— इति। अत्र केवलं दयित इत्यालम्बनविभावो वियदित्यादिनोद्दीपनविभावश्च निबद्धो न त्वनुभावव्यभिचारिणौ। पुष्कला चात्र रसाभिव्यक्तिः। अतोऽत्र विभावमात्रस्य रसाभिव्यञ्जकता दृश्यते। तथा 'परिमृदितमृणालम्लानमङ्गं प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः क्रियासु; कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्तच्छेदपाण्डुः कपोलः॥'— शरीरमविरतसंतापवशेन परितोमृदितबिसवन्म्लानम्। अनेन वैवर्ण्यरूपोऽनुभावो व्यज्यते। आहाराद्युचितक्रियास्वपि परिवारप्रार्थनाभिरेव प्रवृत्तिर्न तु स्वत इति प्रवृत्त्यभावेन स्तम्भरूपः प्रलयरूपो वानुभावो द्योत्यते; व्यभिचारिणामान्तरत्वेनाप्रत्यक्षत्वात्। क्रियामान्द्यस्य च प्रत्यक्षतया व्यभिचार्यन्तर्भावासंभवेनानुभावान्तरत्वं वेत्याहुः। सद्यःकृत्तदन्तिदन्तखण्डधवलो गण्डो निष्कलङ्कहिमकरशोभां कलयतीत्यनेनापि वैवर्ण्यं निबद्धम्। एवमत्रानुभावमात्रनिबन्धनेऽपि रसाभिव्यक्तिरविकला। तथा 'दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं संश्लिष्यत्यरुणं गृहीतवसने संकुञ्चितभ्रूलतम्। मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बु-

पूर्णं क्षणाच्चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥'—दूरे प्रिये दृष्टे सत्युत्सुकम्। यद्यप्यौत्सुक्यं चेतनधर्मस्तथापि तदभिव्यञ्जकव्यापारवज्जातमिति यावत्। अत्रौत्सुक्यं स्फुटम्। आगते विवलितमिति लज्जा, संभाषिणि स्फारितमुत्फुल्लमिति हर्षः, आश्लिष्यत्यरुणमिति कोपः, भ्रूसंकोचनेनासूया, वाष्पाम्बुपूर्णतया प्रसाद इति व्यभिचारिणामेवात्र निबन्धनम्। यद्यपि प्रसादो न व्यभिचारिषु परिगणितस्तथापि तेन स्वहेतुभूता मतिरुपलक्ष्यते। शास्त्रार्थानुसंधानेनार्थनिर्धारणा हि मतिः, अत्रापि 'प्रणामान्तो मानः' इति मदनशास्त्रानुसंधानेन प्रियश्चरणानतो यतस्ततः प्रसाद एवोचित इत्यर्थनिर्धारणावश्यंभावादित्याहुः। एवं चात्र व्यभिचारिणामेव व्यञ्जकत्वं दृश्यते। ततः कथं मिलितानामेव व्यञ्जकतेति सूत्रकारोक्तं संगच्छते?— इति चेत्; सत्यम्। तथाप्येतेषां विभावादीनां रसान्तरसाधारण्याभावेनासाधारणत्वात्स्वानुकूलेतरद्वयाक्षेपेणैव रसव्यञ्जकता, न तु प्रत्येकं रसप्रतीतेर्विभावादित्रितयसंवलितस्थायिविषयत्वस्वाभाव्यात्। नन्वेवं कार्यैकगम्यधर्माणां यथाकार्यमुन्नयनाद्रसप्रतीत्यनुरोधेनानुपात्ता अपि विभावादयोऽनुमित्याऽऽक्षेपेण वोपनीता रसचर्वणाविषया इत्युक्तं स्यात्, ततश्च 'कष्टकल्पनया व्यक्तिः—' इत्यग्रे

वक्ष्यमाणो दोषः प्रसज्यतेति चेन्न; यत्र ह्यनुभावविभावयोरुपात्तयोरपि प्रणिधानगम्यत्वं तत्र प्रतीतिविलम्बेन दोषस्य वक्ष्यमाणत्वात्, अत्र चानुमितेराक्षेपस्य वा संभृतसामग्रीत्वेन प्रतीत्यविलम्बादित्याहुः। अन्ये तु — विभावादीनामसाधारण्ये प्रत्येकमेव व्यञ्जकत्वसंभवादितराक्षेपकल्पना न युक्ता, व्यञ्जकाननुगमस्य व्यङ्ग्यभेदानापादकत्वेनादोषत्वात्। अत एव सूर्यालोकदीपप्रकाशादिव्यञ्जकभेदेऽपि न व्यङ्ग्यघटादिभेदः। रसाभिव्यक्तिषु तु तृणारणिमण्यादिजन्यवह्निष्विव वैजात्यकल्पनं न दोषावहम्। — इत्याहुः। रससामान्यलक्षणं तु रसत्वमेव। न च तत्र मानाभावः, रसपदशक्यतावच्छेदकत्वेन तत्सिद्धेः। तच्च बाधकाभावाज्जातिरखण्डोपाधिर्वेत्याहुः॥ ८९॥

अथ प्राप्तावसरतया रसं विभजते—

**शृङ्गारहास्यकरुणारौद्रवीरभयानकाः।**
**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः॥**

अत्राष्टौ रसा इति वाच्ये यन्नाट्यग्रहणं तत्काव्येष्वपरोऽपि रसोऽस्तीति द्योतयितुम्। तथा च नाट्येऽभिनयेन चमत्कारिणोऽष्टावेव रसाः। शान्ताभिनयस्य तु न चमत्का-

रित्वम् । अतः स काव्य एवोपनिबद्धः स्वदत इति तात्पर्यम् । शान्तो रसो नास्त्येऽपीत्यन्ये ॥ ९० ॥

तत्र शृङ्गारं लक्षयति—

**स्थायी रतिर्यत्र मतः स शृङ्गाररसः स्मृतः ॥**

रतिर्नाम यूनोरन्योन्यविषया प्रीतिः । एक एव नित्यः सुखविशेषः सर्वेषु रसेषु स्थायीति पक्षे तु तत्तद्विभावादिभिरङ्कुरादिदशां नीयमानं नित्यं सुखमेकमेव रतिहासादिसंज्ञां लभते । तत्तद्विभावादिसंवलिततया चर्व्यमाणं तु तदेव शृङ्गारहास्यादिरससंज्ञां लभत इति ध्येयम् ॥ ९१ ॥

तमेव शृङ्गारं विभजते—

**संभोगविप्रलम्भात्मा शृङ्गारो द्विविधो भवेत् ।**

तत्र संभोगं विभजते—

**संभोगोऽत्रालोकनादिभेदाद्यद्यप्यनेकधा ।**
**तथापि कामिनीकान्तारब्धभेदाद्द्विधा मतः ॥**

**यथा यथा किरत्येषा कटाक्षविशिखान्प्रिये ।**
**तथा तथा वहत्येष सान्द्ररोमाञ्चकञ्चुकम् ॥**

तत्र संभोगो यद्यपि नायिकानायकयोः परस्परालोकनसंभाषणालिङ्गनचुम्बनादिभेदादनेकविधः संभवति, तथापि तदवान्तरभेदानामानन्त्यात्परिगणयितुमशक्यतया सामान्यतो नायिकारब्धो नायकारब्धश्चेति द्विविधः। तत्र यथा यथेत्यर्धे नायिकारब्धः, तथा तथेत्यर्धे नायकारब्धश्च संभोगो द्रष्टव्यः। तत्र नायिकारब्धे नायक आलम्बनविभावः, कटाक्षवीक्षणमनुभावः, तदनुमितमौत्सुक्यं व्यभिचारि। नायकारब्धे तु नायिकालम्बनविभावः, रोमाञ्चोऽनुभावः, तदनुमितमौत्सुक्यं व्यभिचारीति द्रष्टव्यम्॥ यथा वा— 'शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनैर्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्। विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता॥'— अत्र वासगृहं शून्यं विलोक्य शयनाच्छनैः किंचिदुत्थाय प्रेयस्यनुरागशोधनाय कपटनिद्रामुपागतस्य पत्युर्मुखं सुचिरं निरीक्ष्य विस्रब्धं परिचुम्ब्य जातपुलकां पत्युर्गण्डस्थलीमालोक्य नम्रमुखी बाला हसता प्रियेण चिरं चुम्बितेति वाच्यार्थकक्ष्या शब्दार्थानुशासनमात्रविदां गोचरः। शून्यवासगृहविलोकनमुत्थानस्य, उत्थानं मुखनिर्वर्णनस्य, तच्च परिचुम्बनस्य, तच्च पुलकोद्गमस्य, तदवलोकनं च लज्जायाः, सा च मुखावनतेः, सा च प्रिय-

चुम्बनस्य कारणभावमालम्बत इत्यर्थवैचित्र्यकक्ष्या त्वालं-कारिकाणां गोचरः। ध्वन्यध्वनीनानां तु संभोगशृङ्गारश्चर्वणै-कपथमध्यास्ते। तथा हि— शून्यमिति विजनतया चुम्ब-नयोग्यता, वासगृहमिति स्रक्चन्दनादिसामग्रीसमग्रतयो-द्दीपकता, विलोक्येति विलोकनस्य पौनःपुन्यलक्षणो विशे-षस्तेन च मौग्ध्यातिशयः, किंचिदुत्थायेति पूर्वकायमात्रेण शय्यापरित्यागस्तेन च नायकोरुसंदानितोरुकाण्डता, शनै-रिति मिथःसंदानितोरुसंक्षोभेण पत्युरुत्थानभीरुता, उपा-गतस्येति व्याजनिद्रायास्तदानीमेव प्राप्तिस्तया च व्याज-निद्रोपक्रमसमय एव तया चुम्बितुमुपक्रान्तमिति तस्या अनुरागातिशयः, सुचिरमिति सुचिरनिर्वर्णनेऽपि व्याजनि-द्रानिश्चयाभावात्तस्या मौग्ध्यातिशयस्तस्य व्याजनिद्रागोपन-नैपुण्यं च, पत्युरिति विवोढृत्वमात्रं न तु पूर्वमुपभोक्तृत्वम्, विस्रब्धमित्यविमृश्यकारितायाः परा काष्ठा, परिचुम्ब्येति चुम्बनस्य परितः स्वाच्छन्द्येन प्रवृत्तिः, जातपुलकामिति पुलकानामवशादाविर्भावः, आलोक्येतीषदवलोकनमात्रेणेत्य-यमर्थः, नम्रमुखीति न तु नमितमुखीत्ययमर्थस्तेन च लज्जातिशयादस्या मुखानमनेऽपि न स्वातन्त्र्यं तत्तु लज्जयैव स्वयं नतमित्यर्थः, पत्युरिति प्राङ्निर्दिश्य प्रियेणेति प्रति-निर्देशात्तदानीं तस्याधिकप्रेमविषयत्वम्, हसतेति तदनुराग-

परिज्ञानेन तस्य हर्षातिशयः, बालेति चुम्बनचर्याचातुर्यम्, चिरमिति यावता समयेन लज्जामवधूय संभोगप्रस्तावाङ्गीकारस्तावत्कालं चुम्बितेति च व्यज्यते। अत्र विस्रब्धपरिचुम्बनान्तं शृङ्गारस्य नायिकारब्धत्वम्, प्रियेण हसतेत्यादौ नायकारब्धत्वं च, तेन संभोगशृङ्गारद्वयमपीह व्यज्यते। अत्र नायकविषयकरतेर्नायक एवालम्बनविभावः, शून्यवासगृहादिकमुद्दीपनविभावः किंचिदुत्थानादिकमनुभावः, तदनुमितौत्सुक्यादयो व्यभिचारिणः। नायिकाविषयकरतेर्नायिकैवालम्बनविभावः, हासोऽनुभावः, तदनुमितहर्षादयो व्यभिचारिण इति ध्येयम्। अत्र संभोगस्य द्वयारब्धत्वेऽपि प्राधान्येन नायिकारब्धत्वान्नायिकारब्धस्यैवेदमुदाहरणमिति केचित्। तन्मते नायकारब्धो यथा—

'त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि। शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो निर्यातः शनकैरलीकवचनोपन्यासमालीजनः॥'—हे मुग्धाक्षि, त्वं कञ्चुलिकया निचोलेन विनैव, न तु विनापि, मनोहारिणीं लक्ष्मीं धत्स इत्यभिधायिनि प्रियतमे तद्वीटिकां निचोलबन्धनग्रन्थिं संस्पृशति सति, रिरंसाविर्भावेन शय्योपान्ते निविष्टा सस्मिता च या सखी नायिका, तस्या नेत्रोत्सवेन

नेत्रोल्लासेनानन्दित आलीजनोऽलीकवचनोपन्यासम् 'दशत्यसौ परभृतः सहकारस्य मञ्जरीम् । तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम् ॥' इत्यादिरलीको मिथ्याभूतो वचनोपन्यासो यत्र क्रियायां सा यथा भवति तथा शनकैरेकैकशो युगपदपगमस्य शङ्कावहत्वात्, निर्यातः ।– इत्यत्र नायिकाविषयकरतेर्नायिकालम्बनम्, तद्वीटिकास्पर्शनादिकमनुभावः, अभिधायिनि संस्पृशीत्यभिधानसंस्पर्शनयोरेककालत्वप्रतीतेस्तदनुमितं कालाक्षमत्वलक्षणमौत्सुक्यं व्यभिचारीति संभोगो व्यज्यते ॥ ९३ ॥

विप्रलम्भं विभजते—

**अभिलाषवियोगेर्ष्याविप्रवासैश्च शापतः ।**
**समुत्पन्नो विप्रलम्भः पञ्चधा परिकीर्तितः ॥**

स्पष्टोऽर्थः ॥ ९४ ॥

तत्राभिलाषहेतुकं लक्षयति—

**प्रागसंगतयोर्यूनोरनुरागेऽपि जाग्रति ।**
**अयोगः पारतन्त्र्याद्यैर्विप्रलम्भोऽभिलाषजः ॥**

**भूयोऽपि किं नु पश्यामि प्रियं मन्मथमन्मथम् ॥**

पूर्वसंगतिविधुरयोर्नायिकानायकयोरनुरागे समप्रेऽपि पार-तन्त्र्याद्दैवाद्वा कुतोऽपि हेतोरसमागमोऽभिलाषहेतुको विप्र-लम्भः। अयं च पूर्ववद्द्विधा नायिकारब्धो नायकारब्धश्चेति। तत्राद्यस्य भूयोऽपीत्युदाहरणम्। द्वितीयो यथा—'प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदयास्तास्ता मुग्धदृशो निसर्ग-मधुराश्चेष्टा भवेयुर्मयि। यास्वन्तःकरणस्य बाह्यकरणव्यापार-रोधी क्षणादाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः॥' अभिलाषहेतुके विप्रलम्भे चक्षुःप्रीतिमनःसङ्गसंकल्पाद्या दशावस्था भवन्तीति वक्ष्यते। तत्र संकल्पदशामापन्नस्य माधवस्येयमाशंसा। मुग्धदृशोऽनतिप्रौढयौवनतया मुग्धा विलासचेष्टानभिज्ञा दृग्यस्यास्तस्या मालत्या निसर्गमधुराः स्वभावसुन्दरास्तास्ता वाङ्मनसागोचराश्चेष्टा विलासविशेषा मयि प्रेम्णार्द्रा आनुकूल्यशालिनः किं भवेयुः। प्रेम च दर्शनाद्वा श्रवणाद्वाविर्भूता प्रीतिः। तदुक्तम्—'संदर्शनादिजनिता प्रीतिः प्रेम निगद्यते' इति। तथा प्रणयस्पृशश्च किं भवेयुः। प्रणयश्च प्रकृष्टं प्रेमैव। तदाह—'प्रेम नीतं प्रकर्षं चेत्तदा प्रणय उच्यते' इति। तथा परिचयादुद्गाढरागोदयाश्च किं भवेयुः। प्रणय एव नित्यानुरञ्जनक्षमो राग इत्युच्यते। तदुक्तम्—'रागोऽभिधीयते गाढः प्रणयो रञ्जनक्षमः' इति। यासु चेष्टास्वाशंसापरिकल्पितास्वपि मनोरथमात्र-

विषयास्वपि मनसो बाह्येन्द्रियप्रवृत्तिविरोधी लयो निर्व्यापारता क्षणाद्भवति । नन्वियमवस्था मूर्च्छासाधारणीत्यत उक्तमानन्दसान्द्र इति । अयमभिलाषविप्रलम्भशृङ्गारः ॥

**चक्षुःप्रीतिर्मनःसङ्गः संकल्पोऽथ प्रजागरः ।**
**अरतिः संज्वरः कार्श्यं लज्जात्यागो भ्रमो मृतिः ।**
**दशावस्था भवन्त्येता विप्रलम्भेऽभिलाषजे ॥**

स्पष्टोऽर्थः ॥ ९६ ॥

तत्र चक्षुःप्रीतिं लक्षयति—

**चक्षुःप्रीतिस्तु कथिता तदेकालोकने रतिः ।**
**पश्यन्त्यनिमिषं कान्तमासीच्चित्रार्पितेव सा ॥**

यथा वा— 'चित्रे भवन्तं लिखितं चिराय निध्याय निध्याय नितम्बवत्याः । प्राप्ता दृगाकार इवानिमेषभावेऽपि मीनप्रतिमानमुद्राम् ॥' इति । इयं चक्षुःप्रीतिः श्रवणप्रीतेरप्युपलक्षणम् । यथा— 'सखीजनानां सरसोक्तिगुम्भेष्वनुत्तराया हरिणेक्षणायाः । त्वद्वर्णनाकर्णनसौमनस्यमकुण्ठतायां श्रवसः प्रमाणम् ॥' इति ॥ ९७ ॥

अथ मनःसङ्गः—

मनःसङ्गस्तु मनसस्तदेकायत्तता सदा ॥
नपुंसकमिति ज्ञात्वा तां प्रति प्रेषितं मनः ।
तत्तु तत्रैव रमते हताः पाणिनिना वयम् ॥

यथा वा— 'चिराय चिन्तोपधिदूतिकामुखात्समेत्य संकेतगृहं मनो विभोः । असौ परावेक्षणशङ्कयाबला बहिर्न गन्तुं चकमे बलादपि ॥' इति ॥ ९८ ॥

अथ संकल्पः—

सततं तद्गतां चिन्तां संकल्पं संप्रचक्षते ॥
दुर्लभा वल्लभा नूनं रागोऽपि मम कोऽप्यसौ ।
नेक्षे च दूतीं निपुणां न जाने भवितव्यताम् ॥

यथा वा— 'चिन्तामृषादूतिकयैव चेतश्चोरेण योगं सुलभं लभेय । आभिः किमित्याहितबुद्धिरद्धा सखीरशेषाः समुपेक्षते सा ॥' इति ॥ ९९ ॥

अथ प्रजागरः—

प्रजागरस्तु चिन्ताभिर्निद्राक्षतिरहर्निशम् ॥
निमेषसंकथाशून्यं निशि नीलोत्पलश्रियम् ।
अपनिद्रं दिवाम्भोजशोभामेति तदीक्षणम् ॥

यथा वा— 'तन्तन्यमाने तनुमध्यमायाः संकल्पतस्तावकसंप्रयोगे। कृतस्य किं कल्पनयेति मन्ये स्वप्नोऽपि नाप्नोति कदापि चैनाम् ॥' इति ॥ १०० ॥

अथारतिः—

**अरतिस्तु भवेद्द्वेषो हृद्येष्वपि च वस्तुषु ।**
**चन्द्रं कलयते तन्वी चक्रवाकीव पावकम् ॥**

यथा वा— 'निमीलयत्यक्षि निशाधिनाथं तमीचरं वीक्ष्य तलोदरी सा। समीरणात्त्रस्यति जीवितेशसमीपतो हन्त समागतात्किम् ॥' इति ॥ १०१ ॥

अथ संज्वरः—

**संज्वरस्तनुसंतापभरः स्मरशरोद्भवः ।**
**तापस्तस्या यदि रविश्चन्दनादपि शीतलः ॥**

यथा वा— 'चन्द्रातपालेपचमत्कृतोऽपि चन्द्रोपलश्चन्दनपङ्कलिप्तः। तदङ्गसङ्गाद्द्रुत तत्क्षणेन तप्तायसो रीतिमुरीकरोति ॥' इति ॥ १०२ ॥

अथ कार्श्यम्—

**कार्श्यं तु स्मरसंतापविहिता तनुता तनोः ।**
**ऊर्मिकां कङ्कणं तच्च तनुतेऽङ्गदमद्य सा ॥**

यथा वा— 'आक्रम्य तारुण्यबलेन कार्श्यमादौ सुदत्याः किल मध्यदेशम्। आसाद्य संप्रत्यतनुप्रतापमखण्डमाक्रामति चाङ्गदेशम्॥' इति॥ १०३॥

अथ लज्जात्यागः—

**लज्जात्यागस्तु कंदर्पसंतापेन त्रपाक्षतिः॥**
**स्वप्नेऽद्य तेन पृष्टापि भूयो नावोचमुत्तरम्।**
**किं नु कुप्येत मय्येष इति पृच्छति सा सखीम्॥**

यथा वा— 'भवत्प्रसङ्गे रहसि प्रसक्ते साक्षेपमैक्षिष्ट सखीः पुरा या। सैव स्वयं गायति सांप्रतं तु यशोऽनिशं ते यदुवंशकेतो॥' इति॥ १०४॥

अथ भ्रमः—

**भ्रमः स्यादथाज्ञानं त्वन्मयं वेत्ति सा जगत्॥**

यथा वा— 'हरिः समेतीत्यभिगम्य कीरं विधुर्विभातीत्यवलोकय चन्द्रम्। पद्मानुरागी स्फुरतीति भानुं प्रेक्ष्य भ्रमं गोपयते निजं सा॥' इति॥ १०५॥

अथ मृतिः—

**मृतिस्तु मरणोद्योगः पश्यतीन्दुंससाहसा॥**

साक्षान्मरणस्याशोभनत्वात्तदुद्योग एव मृतिः। प्रत्युज्जीवनसंभावनायां मरणमपि केचिन्निबध्नन्ति। तदयुक्तम्; अन्यतरमरणेऽप्यन्यतरजीवने का तत्र स्नेहगणना? तदुभयमृतौ न समागम इत्याहुः। यथा वा— 'दत्ते चक्षुर्मुकुलितरणत्कोकिले बालचूते मार्गे गात्रं क्षिपति वकुलामोदगर्भस्य वायोः। दाहप्रेम्णा सरसबिसिनीपत्रमात्रान्तरीया ताम्यन्मूर्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान्॥' इति। एता दशावस्था वक्ष्यमाणविप्रलम्भशृङ्गारान्तरेष्वप्येवमुदाहार्याः॥ १०६॥

अथ विरहं लक्षयति—

**यूनोः कुतोऽपि विश्लेषो युक्तयोर्विरहो मतः।**
**नास्ति किं तत्र चन्द्रोऽयं येनाद्यापि स नागतः॥**

प्रथमं परस्परानुरागेण संयुक्तयोर्मानप्रवासशापातिरिक्तात्कुतोऽपि हेतोर्विश्लेषो विरहः। यथा वा— 'अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक्सुहृद्यो मां नेच्छति नागतश्च ह ह हा कोऽयं विधेः प्रक्रमः। इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि॥'— अन्यत्र विपक्षरमणीगृहे गच्छतीति का कथा? तच्छङ्कैव नास्ति। तर्हि सुहृदो गृहे विलम्बत

इत्यपि न शङ्का युक्ता। यो मां नेच्छति तादृगस्य सुहृदपि नास्ति। इयमेव सुहृदो मय्यनिच्छा यत्प्रियं स्वगृहेऽवस्थाप्य क्षणमपि मां विरहयतीति। तथापि नागतः। तस्माद्विधेरेवायमपराध इत्यनल्पविकल्पनानिरन्तरहृदया गृहान्तरेव प्रवृत्तविलुठनातिशया बाला निशि निद्रां नाप्नोति।— इत्यत्र 'चिरयत्याधिकं कान्ते विरहोत्कण्ठिता मता' इत्युक्तलक्षणविरहोत्कण्ठिताविषयतयात्र विप्रलम्भस्य विरहहेतुकत्वं ज्ञेयम्। अत्र नायिकारतेर्नायक आलम्बनम्, विवर्तनादिरनुभावः, चिन्तादिर्व्यभिचारीति ध्येयम्। अत्र केचित्— रतिप्रलापादिः करुणोऽपि विरह एवान्तर्भवति। न च करुणो न शृङ्गारस्तस्य शोकस्थायिकत्वादिति वाच्यम्; पत्युः पुनर्जीवनेन तत्रान्यतरस्यापि रतेरनपायात्, तत्प्रकृतिकस्य शृङ्गारस्यैवौचित्यात्, अतथाभूतस्थले त्वजप्रलापादौ करुणरसस्य सौलभ्यात्। कादम्बरीप्रलापादिस्तु तस्याः पूर्वमसंयोगादभिलाषजविप्रलम्भ एवान्तर्भवति।—इत्याहुः॥ १०७॥

ईर्ष्याहेतुमाह—

**ईर्ष्याहेतुर्विप्रलम्भो विश्लेषः सागसि प्रिये।**
**धन्याहं त्वत्प्रियानाम प्रापितास्मि शठाद्य यत्॥**

प्रिये गोत्रस्खलनान्यासंभोगादिना कृतापराधे सति यो विश्लेषः स ईर्ष्याहेतुको विप्रलम्भः। यथा धन्याहमिति। इयं गोत्रस्खलनात्कृतापराधं शठं प्रति नायिकोक्तिः॥ यथा वा— 'सा पत्युः प्रथमापराधसमये सख्योपदेशं विना नो जानाति सविभ्रमाङ्गवलनं वक्रोक्तिसंसूचनम्। स्वच्छै-रच्छकपोलमूलगलितैः पर्यस्तनेत्राम्बुजा बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः॥'— सख्या कृतमुपदेशं विना सविभ्रमं सव्याजमङ्गानां वलनं पराङ्मुखीकरणं वक्रो-क्तीनां सोल्लुण्ठोक्तीनां सूचनं च न जानाति। किं तु स्वच्छैर-ञ्जनकालुष्यरहितैः। तेन मानात्प्रसाधनवैमुख्यं व्यज्यते। अच्छेति मानकृतेन क्षणविप्रलम्भेनापि वैवर्ण्यं जातमिति व्यज्यते। कपोलमूलं कर्णजाहप्रान्तदेशः, तत्र गलितैरित्य-नेन विप्रलम्भकृततापासहतया स्थातुमशक्ता शय्यायामेव लुठतीति व्यज्यते, अन्यथा बाष्पाणां कपोलमूलगलनासंभ-वात्। अत एव लुठल्लोलालकैरश्रुभिः पर्यस्ते परितोऽस्ते निरुद्धे, न तु प्रान्तमात्रे, नेत्राम्बुजे यस्याः सा बाला मानोपायानभिज्ञा केवलं रोदिति।— अत्र नायिकागतविप्र-लम्भस्य नायक आलम्बनम्, अश्रुपातादयोऽनुभावाः, मानो व्यभिचारीति ध्येयम्। अत्र यद्यपि 'स्त्रीणामीर्ष्या-कृतो मानः कार्योऽन्यासाङ्गिनि प्रिये' इत्युक्त्या मानस्य

नायिकाकर्तृकतैव, तथापि 'तत्र प्रणयमानः स्यात्कोपोपहत-योर्द्वयोः' इत्युक्त्या प्रणयान्नायककर्तृकतापि मानस्य क्वचि-द्भवति । यथा— 'अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्ते-क्षणा सा हंसैः कृतकौतुका चिरमभूद्गोदावरीसैकते । आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया कातर्या-दरविन्दकुट्मलनिभो मुग्धः प्रणामाञ्जलिः ॥'—इदं हि संकेतलतागृहे चिरादागतां श्वश्रूप्रतिबन्धादिना विलम्ब्य समायान्तीं नायिकां प्रति कृतप्रणयकोपं नायकं प्रति दूती-वचनम् । अत्र नायककृतो मानः । एवमुभयकृतो मानो यथा— 'हृदि मम रमणीया काचिदित्यर्धवाक्ये त्वमिव न जगतीति स्नातुकामस्य पत्युः । सुतनुरधितं केऽपि सोऽपि चास्थानमानादिति समजनि यूनोरेकशय्याविद्योगः ॥' इति ॥ १०८ ॥

अथ प्रवासहेतुकं लक्षयति—

**प्रवासजो विप्रलम्भः प्रिये देशान्तरोन्मुखे ॥**
**यामीति दयितेनोक्ते कामिन्याः कनकाङ्गदम् ।**
**जिज्ञासितुं जीवनाडीं करमूलं किमाश्रितम् ॥**

प्रिये देशान्तरोन्मुखेऽपि प्रवासजो विप्रलम्भः, किमुत देशान्तरस्थित इति कैमुत्यद्योतनायात्रोन्मुख इत्युक्तम् ॥

यथा वा— 'प्रस्थानं वलयैः कृतं प्रियसखैरस्त्रैरजस्रं गतं धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः। यातुं निश्चितचेतसि प्रियतमे सर्वैः समं प्रस्थितं गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमुत्सृज्यते॥' –नायके प्रयाणोन्मुखे सति तत्क्षणसंजातकार्श्यादिकायाः कस्याश्चिज्जीवितं प्रति सोपालम्भोक्तिरियम्। हे जीवित, प्रियतमे न तु प्रियमात्रे, गन्तुं निश्चितचेतसि चेतस्येव निश्चयं कृतवति न पुनर्मां प्रति यामीत्युक्तवति, वलयैः प्रस्थानं कृतम्, न तु क्रियते। तेन शरीरसादो व्यज्यते। प्रियसखैः। सर्वो हि रुदित्वैव जीवितं जहाति। ततश्च जीविते निर्गच्छति नियमेन सहनिर्गमादस्राणामश्रूणां जीवितं प्रति प्रियसखत्वम्। यमेन निर्गम्यते तेष्वस्रेषु गतेष्वपि त्वं न गच्छसि, धिक्के ततश्च त्वयि गच्छति यैर्निर्लज्जतामिति व्यज्यते। गतम्, न तु गम्यते। तेन प्रियतमस्य गमननिश्चयक्षण एव यथा क्षणान्तरे लेशोऽपि न निर्गच्छति तथा निःशेषमस्रैर्युगपद्गतमिति व्यज्यते। तथा च बाह्येन्द्रियसादः। तथा धृत्या क्षणमपि न स्थितमित्यन्तःकरणधर्माणाम्, चित्तेन प्रियतमस्य पुरो गन्तुमुद्योगः कृत इत्यन्तःकरणस्य च सादो व्यज्यते। एवं सर्वैर्वलयादिभिः समं युगपत्प्रस्थितम्। तद्वलयादिरूपः प्रिय-

सुहृत्सार्थः । तेषामेकशरीरसहृत्वात्प्रियसुहृत्त्वम् । किमु-त्सृज्यते? तान्विहायैकाकितया गमने को हेतुः? अगमनं च नास्त्येवेत्याह—गन्तव्ये सतीति । धिक्त्वां निर्लज्जं यः प्रियतमे गन्तुमुद्यते न गच्छसीति भावः । अत्र प्रवासहेतुको विप्रलम्भः ॥ १०९ ॥

अथ शापहेतुकं लक्षयति—

**मुन्यादिकोपतोऽश्लेषो विप्रलम्भस्तु शापजः ।**
**माद्रीं दृष्ट्वा रहः शापमपि स्मृत्वा स विव्यथे ॥**

मुनिदेवस्वाम्यादिकोपजोऽसंभोगः शापहेतुको विप्रलम्भः । यथा पाण्डोर्माद्रीसंनिधानेऽपि शापवशादसंप्रयोगेण विप्रलम्भः शापहेतुकः ॥ यथा वा—'त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायामात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् । अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥'—गैरिकैः शिलायां त्वां प्रणयकुपितामालिख्य ममात्मानं त्वच्चरणानतं लिखितुं यावदिच्छामि तावन्मुहुरभिवृद्धैरश्रुभिर्मे दृष्टिराच्छाद्यते । तस्मिन्नालेख्येऽपि क्रूरः सर्वप्रकारेण दुःखकारी कृतान्तो मन्मथो दैवं वावयोः संगमं न सहते ।—इत्यत्र 'शापेनास्तं गमितमहिमा वर्षभोग्येण भर्तुः' इत्युपक्रमवशेन शापहेतु-

कता। यद्यप्ययं प्रवासस्यैव भेदः संभवति, तथापि किंचि-द्भेदमवलम्ब्य पृथगुक्तिः, अन्यथा विश्लेषत्वेन संभोग-भिन्नानामैक्यापत्तेः। पाण्डोः शापहेतुको विप्रलम्भस्तु प्रवासासंकीर्ण इत्याहुः ॥ ११० ॥

अथ हास्यं लक्षयति—

**हासः स्थायी भवेद्यस्य स हास्यरस इष्यते ॥**

**विकटास्थिमयी माला वस्त्रं चर्माङ्गदं फणी।**
**उचितोऽहं वरो गौर्या इतीशः स्मितोऽभवत् ॥**

यथा वा— 'आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे। तारस्वनं प्रहितशूत्क-मदात्प्रहारं हा हा हतोऽहमिति रोदिति विष्णुशर्मा ॥'— विष्णुशर्माभिधानः कश्चन श्रोत्रियो हा हा हतोऽस्मीति रोदिति। कुतः? अशुचिं प्राणिमाकुञ्च्याकुञ्चिताङ्गुलिच-तुष्टयीघटिताङ्गुष्ठं कृत्वा वेश्या प्रतिपदं प्रोक्षितैर्मन्त्रपूताना-मम्भसां शीकरैः पवित्रे मम शिरसि तारस्वनमुच्चस्वनं यथा भवति तथा प्रहितशूत्कं कुञ्चितेनाधरोष्ठसंपुटेनासभ्यः शूत्कारोऽपि यथा भवति तथा प्रहारमदात्, पञ्चाङ्गुलीप्र-योगं कृतवतीति यावत्।—इत्यत्र विष्णुशर्मालम्बनम्,

रोदनादिकमुद्दीपनम्; अवलोककानां हासादिकमनुभावः, लज्जादिर्व्यभिचारी। काव्यनिबद्धैरेतैः संवलिततया हासाख्यः स्थायी सहृदयैश्चर्व्यमाणो हास्यो रस इति ध्येयम् । पूर्वोदाहरणे हास्यो न ग्राम्य आत्मस्थश्च । अत्र ग्राम्यः परस्थश्चेति भेदः ॥ १११ ॥

अथ करुणं लक्षयति—

**शोकः स्थायी भवेद्यस्य तमाहुः करुणं रसम् ।**
**म्रियेत प्रियेण चेदेष किं करोतु स्तनंधयः ।**
**न चेदसह्यं वैधव्यमिति मोहमियाय सा ॥**

अत्र प्रियमरणं विभावः, प्रलापोऽनुभावः, दैन्यविषादादयो व्यभिचारिणः, शोकः स्थायी एभिः काव्यनिबद्धैरभिनीतैर्वा संवलिततया सहृदयैः करुणरसश्चर्व्यते ॥ यथा वा—'हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्काशिषो धिक्प्राणान्पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ । इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिरश्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि ॥'— प्रमीतां मातरं प्रत्यनुशोचन्तीः पौराङ्गनाः प्रेक्ष्य शोचतः कस्यचिदुक्तिरियम् । हा मातः, कुत्र त्वरितासि? हा देवताः, किमिदं कृतम्? ब्राह्मणानामाशिषः क्व गताः? प्राणान्धिग्ये मातरि

गतेऽपि तिष्ठन्ति । अकाण्ड एवाशनिः पतितः । दुःखमेवा-शनित्वेनाध्यवसीयते । हे मातः, यतस्तेऽङ्गेषु हुतवहः प्रज्व-लति । दृशौ च दग्धे । इत्थं बर्बरं गद्गदं यथा भवति तथा । अत एवार्घे एव रुद्धा अत एव करुणाः शोकावहाः पौर-स्त्रीणां प्रलापाश्चित्रगतानपि जनान्रोदयन्ति, चित्रभित्तीरपि शतधा कुर्वन्ति । —इत्यत्र मृता मातालम्बनविभावः, हुत-वहप्रज्वलनादिकमुद्दीपनम्, प्रलापादिकमनुभावः, तद्व्य-ञ्जिता दैन्यचिन्तादयो व्यभिचारिणः, शोकः स्थायी । एभिः काव्ये निबद्धैरभिनीतैर्वा संवलिततया सहृदयैः करुणरसश्चर्व्यते ॥ ११२ ॥

अथ रौद्रं लक्षयति—

**क्रोधः स्थायी भवेद्यस्य स तु रौद्ररसः स्मृतः ॥**
**कुठारोऽयं कठोरास्थिखण्डनोद्यत्खणात्कृतिः ।**
**भिन्द्यादङ्गानि भूपानां यैर्वृथा मे पिता हतः ॥**

अत्र परशुरामगतः क्रोधः स्थायी, क्षत्रिया आलम्बन-विभावाः, पितृहननमुद्दीपनम्, परुषभाषणादिरनुभावः, तदनुमिता औग्र्यामर्षादयो व्यभिचारिणः ॥ यथा वा— 'कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं मनुजपशुभिर्निर्मर्यादै-

र्भवद्भिरुदायुधैः। नरकरिपुणा सार्धं तेषां सभीमकिरीटि-नामयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥'—इदं हि द्रोणवधक्रुद्धस्याश्वत्थाम्नो वचनम्। इदं द्रोणवध-रूपं गुरु महत्पातकं यैर्मनुजपशुभिः पशुप्रायैर्धृष्टद्युम्नादिभिः कृतम्। पशुवदविवेकी न चेत्को वा संन्यस्तशस्त्रमाचार्यं हन्यादिति भावः। यैर्निर्मर्यादैरतिक्रान्तधर्मसेतुभिर्नरकरि-पुप्रभृतिभिरनुमतं वा यैर्भवद्भिरन्यैः क्षत्रियैर्दृष्टं वा। नन्वस्माकं धृष्टद्युम्ननिवारणे न सामर्थ्यमतस्तूष्णीं दृष्टमिति नास्मास्वपराध इत्यत उक्तमुदायुधैरिति। तेन तन्निवारण-सामर्थ्येऽप्युपेक्षितमिति व्यज्यते। तेषां भीमार्जुनसहितानां नरकरिपुणा समं भवतामसृङ्मेदोमांसैर्दिशां बलिं करोमि।—इत्यत्र धृष्टद्युम्नादय आलम्बनविभावाः, गुरुवधादय उद्दीप-नविभावाः, साटोपालापोऽनुभावः, उग्रतादयो व्यभिचा-रिणः, क्रोधः स्थायीति ध्येयम् ॥ ११३ ॥

वीररसं लक्षयति—

**स्थाय्युत्साहो भवेद्यस्य स वीररस इष्यते ॥**
**चापमानय सौमित्रे शरांश्चाशीविषोपमान्।**
**सागरं शोषयिष्यामि पद्भ्यां यान्तु प्लवंगमाः ॥**

अत्र सागर आलम्बनविभावः, ससंरम्भालापादिरनुभावः, तदनुमिता गर्वादयो व्यभिचारिणः, उत्साहः स्थायी। यथा वा—'क्षुद्राः संत्रासमेनं विजहित हरयो भिन्नशक्रेभकुम्भा युष्मद्गात्रेषु लज्जां दधति परममी सायकाः संपतन्तः। सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि॥'

—हे क्षुद्राः पराक्रमगन्धानभिज्ञा हरयः कपयः, एनं संत्रासं मुञ्चत। कुतः? भिन्नैरावतकुम्भा मदीयाः शरा भवदङ्गेषु संपतन्तो लज्जां वहन्ति। अत्र युष्मदिति गात्रेष्वित्युक्त्या भवतां सर्वेषामखिलाङ्गानां युगपल्लक्ष्यत्वेऽपीति व्यज्यते। सौमित्रे सुमित्रापुत्रेत्यतिबालत्वम्। तिष्ठ निर्भयमास्स्व। कुतः? मम रुषां त्वं न पात्रमसि। यतोऽयं मेघनादः। यः शक्रमपि बद्धवानस्मि सोऽहमिति व्यज्यते। नन्विति प्रसिद्धौ। ननु तर्हि कस्ते शौर्यस्य विषय इत्यत आह— रामं किंचिदन्वेषयामि, तस्य शूरंमन्यत्वात्। शूरताभिमानमेव तस्य संभावयति—भ्रूभङ्गेति। अत्र राम आलम्भनविभावः, जलधिनियमनादिरुद्दीपनविभावः, रामान्वेषणादिरनुभावः, तदनुमिता गर्वादयो व्यभिचारिणः, उत्साहः स्थायी। अयं च वीररसो रणवीरो दयावीरो दानवीरश्चेति त्रिविधः। तत्राद्य

उदाहृतः ॥ द्वितीयो यथा— 'सिरामुखै स्यन्दत एव रक्त-मद्यापि देहे मम मांसमस्ति । तृप्तिं न पश्यामि तवापि तावत्किं भक्षणात्त्वं विरतो गरुत्मन् ॥' —इयं हि नागानन्दे गरुडोपहारीकृतशङ्खचूडार्थं स्वदेहं गरुडाहारतया कृतवतो जीमूतवाहनस्य स्वधैर्यावलोकनविस्मयस्तिमितं गरुत्मन्तं प्रत्युक्तिः ॥ दानवीरो यथा— 'कर्णश्चेत्कवचं ददीत हरये शक्तिं गृहीत्वा स्वयं जन्मारभ्य समार्जिताय यशसे दत्तो निवापाञ्जलिः । स्वामिञ्जीवनदायिनोऽपि भुवने सन्त्येव तेषां पुनः प्रस्तावे कतमस्तवास्तु तनयो यो विक्रये पण्डितः ॥'— यदि कवचं देयं तदा शक्तिं गृहीत्वा देयमिति वदन्तं भानुं प्रति कर्णवचनमिदम् ॥ ११४ ॥

अथ भयानकं लक्षयति—

**स्थायी भावो भयं यस्य भयानकरसस्तु सः ॥**
**घनगर्जितमाकर्ण्य विशन्तो गिरिकन्दराः ।**
**ताभ्यः प्रतिध्वनेर्भीता निवर्तन्ते मृगार्भकाः ॥**

अत्र घनरवादिरालम्बनविभावः, गिरिकन्दराप्रवेशादिरनुभावः, तदनुमितो वेगादिर्व्यभिचारी, भयं स्थायी भावः ॥ यथा वा— 'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्ध-

दृष्टि: पश्चार्धेन प्रविष्ट: शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभि: कीर्णवर्त्मा पश्योद-
ग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥' — अनु-
पतति पश्चादागच्छति स्यन्दने रथे ग्रीवाभङ्गेण कण्ठकाण्ड-
विवलनेनाभिरामं यथा भवति तथा मुहुर्बद्धदृष्टि:, शर: पश्चा-
द्भागे पतिष्यतीति भयात्पश्चाद्भागं सर्वमाधिक्येन पूर्वकायप्रविष्टं
कुर्वन्नर्धचर्वितैः श्रमवशविवृतान्मुखाद्भ्रश्यद्भिर्दर्भैः कीर्णसरणि-
रयं मृगः समधिकप्लुतिमत्तया नभस्यधिकं प्रयाति भूमावल्पं
प्रयाति ।—इत्यत्र स्यन्दन आलम्बनविभाव:, तदनुपतनमु-
द्दीपनम् , पूर्वकायप्रवेशश्रमविवृतमुखत्वादयोऽनुभावा:, तद-
नुमिता: शङ्कात्रासादयो व्यभिचारिण: । एतैर्भयाख्यस्य
स्थायिन: परिपोषाद्भयानकरस: । यद्यप्यत्र त्रासस्य व्यभि-
चारिण: स्वशब्देनोपादानमयुक्तं तथाप्यनुभावस्य पूर्वका-
यप्रवेशादे: क्रमसाधारण्यादत्र त्रासस्य स्वशब्देनोपादाने-
ऽप्यदोष इत्याहु: ॥ ११५ ॥

अथ बीभत्सं लक्षयति—

स्थायी जुगुप्सा यत्र स्या-
त्स बीभत्सरस: स्मृत: ॥

**अन्त्रप्रोतकपालालीभूषणारावभीषणा।**
**पीतोच्छर्दितरक्ताक्तस्तना तिष्ठति ताटका॥**

अत्र ताटकालम्बनविभावः, तदीयान्त्रप्रोतकपालालीभूषणत्वादिरुद्दीपनविभावः, तदीक्षणजनितवक्त्रकूणनाङ्गसंहृत्यादयोऽनुभावाः, तदनुमिताः शङ्कादयो व्यभिचारिणः। एभिः परिपुष्टो जुगुप्साख्यः स्थायी बीभत्सरसः॥ यथा वा—'उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसान्यंसस्फिक्पृष्ठपीठाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा। आत्तस्नाय्वन्त्रनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्कादङ्कस्थादस्थिसंधिस्थपुटगतमपि क्रव्यमव्यग्रमत्ति॥'—गजादीनां निहतानां कृत्तिं चर्म प्रथममुत्कृत्योत्कृत्य पृथून्युत्सेधभूयांस्युपचयभूयिष्ठान्यंसयोः स्फिचोरूरुसंधिप्रदेशयोः पृष्ठपीठाद्यवयवेषु च सुलभान्युग्रपूतीनि दुःसहदुर्गन्धानि मांसानि जग्ध्वा भक्षयित्वा स्नायवोऽस्थिबन्धनसिरा अन्त्राणि सिरान्तराणि नेत्राणि चात्तानि भक्षितानि येन स तथाभूतः प्रेतरङ्कः प्रेतेषु पिशाचविशेषेषु दरिद्रः शिशुर्वा, अङ्कस्थात्करङ्काच्छरीरादस्थिसंधिषु स्थपुटतया निम्नोन्नततया गतं स्थितं क्रव्यं मांसमव्यग्रमत्वरं प्रकटितदशनः सन्नत्ति भक्षयति।—इत्यत्र प्रेतरङ्क आलम्बनविभावः, तदीयं कृत्त्युत्कृन्तनादिकमु-

दीपनम्, तदवलोकनजनितो माधवस्य मुखविकारादिरनुभावः, तदनुमितास्त्रासादयो व्यभिचारिणः। एभिर्जुगुप्साख्यस्थायिनः परिपोषाद्बीभत्सरसश्चर्व्यते ॥ ११६ ॥

अद्भुतं लक्षयति—

यत्र स्थायी विस्मयः स्या-
त्सोऽद्भुताख्यो रसः स्मृतः ।

अनादिकिटिहंसाभ्यामप्यदृष्टाङ्घ्रिशेखरम् ।
अहो महो महदहं महयाम्यधिमानसम् ॥

अयं चाद्भुतरसो दिव्यो मानुषश्चेति द्विविधः। तत्र दिव्यविभावकत्वे दिव्यः, मनुष्यविभावकत्वे तु मानुषः। तत्राद्य उदाहृतः। तत्र महेश्वर आलम्बनविभावः, तदनुस्मरणजनिता नेत्रविकासादयोऽनुभावाः, तदनुमिता हर्षादयो व्यभिचारिणः। एभिर्विस्मयस्य परिपोषादद्भुतरसश्चर्व्यते ॥ मानुषो यथा— 'चित्रं महानेष बताविकारः क कान्तिरेषाभिनवैव भङ्गी। लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिर्नूतन एष सर्गः ॥'—युद्धसंनद्धं कुशमवेक्ष्य रामभद्रस्य वचनमिदम्। एष बालोऽपि महानिव भाति चित्रम्, अस्याविकारो बताश्चर्यम्, एषा कान्तिः

क कुत आगता, मङ्गथवास्थितिरभिनवैवानुभूतपूर्वा, अस्य धैर्यं लोकोत्तरम्, अस्य प्रभावः प्रभुत्वमहो, अस्याकृतिरवयवसंस्थानाविशेषः कापि वाङ्मनसातीता, तस्मादस्यैव एतादृशः सर्गः सृष्टिर्नूतन एव लोकसृष्टिविलक्षण एव।— इत्यत्र कुश आलम्बनाविभावः, तदीयमहत्त्वादय उद्दीपनविभावाः, तदवलोकनजनिता रामस्य नेत्रविकासादयोऽनुभावाः, तदनुमिता हर्षादयो व्यभिचारिणः। एभिर्विस्मयस्य स्थायिनः परिपोषादद्भुतरसश्चर्व्यते॥ ११७॥

एषां स्थायिभावानां लक्षणमुच्यत इति प्रतिजानीते—

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।**
**जुगुप्सा विस्मयश्चेति स्थायिनां लक्ष्म कथ्यते॥**

स्पष्टम्॥ ११८॥

तत्र सामान्यलक्षणमाह—

**चिरं चित्तेऽवतिष्ठन्ते संबध्यन्तेऽनुबन्धिभिः।**
**रसत्वं प्रतिपद्यन्ते प्रवृद्धाः स्थायिनस्तु ते॥**

ये चित्ते चिरं वासनात्मनावतिष्ठन्ते, अनुबन्धिभिर्विभावादिभिः संबध्यन्ते, ततः प्रवृद्धाः सन्तो रसत्वं प्रतिपद्यन्ते, ते स्थायिन इत्युच्यन्ते॥ ११९॥

लक्षणान्तरमाह—

**विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः।**
**आत्मभावं नयत्यन्यान्स स्थायी लवणाकरः॥**

विरुद्धैः स्थाय्यन्तरैरविरुद्धैर्व्यभिचारिभिर्वा यो न विच्छिद्यते। अत एव मालतीपरिणयार्थं महामांसविक्रयप्रसङ्गेन श्मशानवाटं गतस्य माधवस्य प्रेतरङ्कादिदर्शनेन जुगुप्सायां समुद्भूतायामपि न रतेर्विच्छेद इति द्रष्टव्यम्। अन्यान्विभावादीनात्मभावमात्मना सहास्वादविषयतां नयति स स्थायीत्याहुः॥ १२०॥

एतेषां प्राधान्यमाह--

**भावान्तरोपकार्यत्वात्प्रधानत्वेन ते मताः॥**

ते स्थायिनो भावान्तरैरनुभावैर्व्यभिचारिभिश्चोपकार्यतया प्राधान्यं भजन्ते। तदुक्तम्-- 'स्थायिनामेव भावानामुपकाराय सर्वदा। वर्तन्ते सात्त्विका भावा भावाश्च व्यभिचारिणः॥' इति॥ १२१॥

विशेषलक्षणानि रत्यादीनामाह--

**मनोनुकूलेष्वर्थेषु सुखसंवेदनं रतिः।**

**इष्टार्थस्य त्वसंप्राप्तौ सैवोत्कण्ठा निगद्यते ॥**

इष्टार्थविषयकः सुखाकारो मानासिको वृत्तिविशेषो रतिः । सैव रतिरिष्टार्थस्यासंप्राप्तावुत्कण्ठेत्युच्यते ॥ १२२ ॥

हासं लक्षयति—

**हासो विकृतवेषादिदर्शनान्मानसी क्रिया ॥**

विकृतवेषवागादिदर्शनश्रवणादिना यश्चेतसो वृत्तिविशेषः स हासः ॥ १२३ ॥

शोकं लक्षयति—

**शोकश्चित्तस्य वैधुर्यमभीष्टविरहादिभिः ।**

इष्टविरहादनिष्टप्राप्त्या परदुःखदर्शनादिना वा यच्चित्तस्य वैधुर्यं शून्यता स शोकः ॥ १२४ ॥

क्रोधं लक्षयति—

**प्रतिकूलेषु चित्तस्य वैरस्यं क्रोध उच्यते ॥**

प्रतिकूलविषयकचित्तवैरस्यं क्रोधः ॥ १२५ ॥

उत्साहं लक्षयति—

**चित्तस्य स्थिरता सर्वकार्येषूत्साह इष्यते ॥**

महति संकटे प्राप्तेऽपि यच्चित्तस्य प्रारब्धकार्यनिर्वहणोन्मुख्यं स उत्साहः ॥ १२६ ॥

भयं लक्षयति—

**भयं चित्तस्य वैक्लव्यं व्याघ्रादिजनितं विदुः ॥**

व्याघ्रादिहिंस्रदर्शनादिभयहेतूपनिपाते तत्परिहारापरिज्ञाने-नेतिकर्तव्यतानभिज्ञता भयम् ॥ १२७ ॥

जुगुप्सां लक्षयति—

**जुगुप्सा निन्द्यताज्ञानं दोषसंदर्शनादिभिः ॥**

अर्थेषु दोषदर्शनादिना या निन्द्यताधीः सा जुगुप्सा ॥

विस्मयं लक्षयति—

**अपूर्वदर्शनाच्चित्तविस्तारो विस्मयो मतः ॥**

लोकोत्तरवस्तुदर्शनाद्यश्चित्तस्य विस्तारः स विस्मयः ॥

अथानुभावाँल्लक्षयति—

**अनुभावा विभावादिजन्यास्तद्व्यञ्जिकाः क्रियाः ॥**

विभावैर्व्यभिचारिभिश्च जन्या विभावानुभावव्यञ्जिका भुजा-क्षेपकटाक्षविक्षेपादिकाश्चेष्टा अनुभावाः ॥ १३० ॥

यद्यप्यनुभावभेदा एव स्तम्भप्रलयादयस्तथापि 'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः। आनीयमानः स्वादुत्वं स्थायी भावो रसः स्मृतः ॥' इति दशरूपके सात्त्विकानामनुभावाद्भेदेन निर्देशात्तान्पृथङ्निर्दिशति—

**स्तम्भः प्रलयरोमाञ्चौ स्वेदो वैवर्ण्यवेपथू।**
**अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः॥**

स्पष्टोऽर्थः ॥ १३१ ॥

तेषां सामान्यलक्षणमाह—

**सात्त्विकाः परदुःखादिभावनाभावितात्मजाः॥**

परगतसुखदुःखभावनाभावितात्मत्वं सत्त्वम्। ततो भवाः सात्त्विकाः ॥ १३२ ॥

तत्र स्तम्भं लक्षयति—

**स्तम्भो रागादिसंभूतं निष्क्रियाङ्गत्वमुच्यते।**
**कीलिता कामबाणैः किं निश्चलासीत्तमेक्ष्य सा॥**

यथा वा—'चित्ते निधत्ते सुदती यदा त्वां निःस्पन्दतामेति तदा नितान्तम्। कथं क्षमा स्पन्दितुमाशयस्थे विश्वंभराभारभृति त्वयीयम् ॥' इति ॥ १३३ ॥

अथ प्रलयः—

**प्रलयः सुखदुःखाद्यैरन्तरिन्द्रियमूर्च्छनम् ।**
**हरिणाक्षी तमालक्ष्य मग्ना मोहमहार्णवे ॥**

यथा वा—'ध्यानावधानाविसरागतत्त्वदालिङ्गनानन्दजमोहभाजः । परिस्फुरन्तः पुलकप्ररोहाः प्राणेषु तन्व्याः प्रतिभूभवन्ति ॥' इति ॥ १३४ ॥

रोमाञ्चस्वेदौ लक्षयति—

**रोमाञ्चः पुलकोद्भेदः स्वेदस्त्वङ्गाज्जलोद्गमः ॥**
**पुलकैरुद्गिरन्त्यन्तःकामबाणान्प्रियागमे ।**
**स्मरराज्याभिषिक्तेन स्विन्नाङ्गी कामिनी बभौ ॥**

यथा वा—'स्वेदाम्बुसिक्ते हृदये सुदत्या रतीशिता संप्रति रागबीजम् । अङ्कूरयन्किं पुलकापदेशात्पुनःपुनः सिञ्चति बाष्पपूरैः ॥' इति ॥ १३५ ॥

अथ वैवर्ण्यम्—

**वैवर्ण्यं रागरोषादेर्जनिताङ्गविवर्णता ।**
**आसीत्प्रियङ्गुश्यामापि शरकाण्डविपाण्डरा ॥**

यथा वा—'असावपूर्वः स्मरधातुवादी संताप्य संताप्य

रसानुवेधात् । सुवर्णमस्याः सुदृशः शरीरं दुर्वर्णमेव द्रुतमातनोति ॥' इति ॥ १३६ ॥

अथ वेपथुः—

रागभीत्यादिजनितं वेपथुर्गात्रकम्पनम् ।
कदलीव चकम्पे सा यामीति प्रेयसोदिता ॥

यथा वा—'मधुद्रवैर्मन्मथसायकानां स्वेदाम्बुभिः सिक्तशरीरयष्टिः । तत्पक्षवातैस्तरला तदीयपुङ्खैः स्फुरद्भिः पुलकैर्वृता सा ॥' इति ॥ १३७ ॥

अथाश्रु लक्षयति—

अश्रु नेत्रोद्भवं वारि दुःखरोषप्रहर्षजम् ।
तस्याः प्रियेक्षणोत्काया नेत्रे बाष्पपरिप्लुते ॥

यथा वा—'मध्ये नभो मन्दसमीरमस्याः श्वासे सुधादीधितिधाम हासे । भ्रुवं नितम्बे च पुरा निधाय नेत्रे विधात्राद्य निधीयतेऽम्भः ॥' इति ॥ १३८ ॥

अथ वैस्वर्यम्—

भवेद्गदभाषित्वं वैस्वर्यं प्रमदादिजम् ।
बाष्पोपरुद्धकण्ठा सा शठं नो वक्ति किंचन ॥

यथा वा– 'किमत्र चित्रं वद कीरवाणी विलासिनी साजनि विस्वरेति । इदं तु चित्रं यदुनाथ यत्ते सूक्तिस्तथास श्रुति-संगतापि ॥' इति ॥ १३९ ॥

अथ व्यभिचारिणो निर्दिशति—

निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्तामोहः स्मृतिर्धृतिः ॥

व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥

सुप्तं विबोधोऽमर्षश्चाप्यवहित्था तथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥

त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥

स्पष्टम् ॥ १४० ॥

एषां सामान्यलक्षणमाह—

विशेषेणाभिमुख्येन स्थायिनं ज्ञापयन्ति ये ।
अनुभावादिहेतूंस्तान्वदन्ति व्यभिचारिणः ॥
स्पष्टम् ॥ १४१ ॥

तत्र निर्वेदं लक्षयति—

**दुःखेर्ष्यातत्त्वबोधादेर्निर्वेदो निष्फलत्वधीः ।**
**फलं किमेतैः सखि मे पद्मैश्चण्डकरप्रियैः ॥**

यथा वा—'कृतं मृणालैः किसलैरलं मे प्रयोजनं किं प्रसवास्तरेण । हिताय नेयं हिमवालुकेति सेयं निरुन्द्धे शिशिरोपचारान् ॥' इति ॥ १४२ ॥

अथ ग्लानिः—

**बलस्यापचयो ग्लानिर्वैवर्ण्यारतिकारणम् ।**
**धराधरादपि गुरुं वेत्ति सा मणिकन्दुकम् ॥**

यथा वा—'अहार्यभारादिव हन्त हाराद्दूनाधुना हंसगजेन्द्रयाना । महीभृतं त्वां हृदये बिभर्ति मनोभवाज्ञामहिमा स एषः ॥' इति ॥ १४३ ॥

अथ शङ्का—

**अनिष्टाभ्यागमोत्प्रेक्षा शङ्का लज्जादिसंभवा ॥**
**ज्ञास्यत्यन्य इतीश त्वां हृदा साप रिरंसया ।**
**सर्वाङ्गीणैस्तु पुलकैरथापि प्रापि लक्ष्यताम् ॥**

यथा वा—'जानाति यावज्जनतेति शौरे परिस्फुरत्पाण्डि-

मगोपनाय। अजानती मानसजाग्निदीप्तिं करोति मुग्धा घनसारमङ्के ॥ १४४ ॥

अथासूया—

**परोत्कर्षासहिष्णुत्वमसूया परिकीर्तिता।**
**वीक्ष्य प्रियान्वितामन्यां बालासीदरुणेक्षणा ॥**

यथा वा— 'महीयते माधवसंगतेयं वल्ली भवत्याः पुषिता वराङ्गी। आलोकयेत्यालिमुदीरयन्तीमालोकते माधव नर्तितभ्रूः ॥'—माधवं प्रति रुक्मिणीदूतीवचनमिदम्। अत्र श्लेषमहिम्ना वल्ल्या माधवसङ्गतिं वदन्तीमालीं प्रति रुक्मिण्या असूया नर्तितभ्रूरित्यनेन व्यज्यते ॥ १४५ ॥

अथ मदः—

**संमोहानन्दसंभेदो मदिरादिकृतो मदः।**
**वदत्यसंगतार्थं सा प्रियचिन्तैकतत्परा ॥**

स्पष्टम् ॥ १४६ ॥

अथ श्रमः—

**श्रमः खेदोऽध्वरत्यादिजातः स्वेदादिकारणम्।**
**मुहुस्त्वदागतिभ्रान्त्या खिद्यते सा गतागतैः ॥**

मदश्रमौ यथा वा—'हसत्यकाण्डे हरिणेक्षणा सा फूत्कृत्य रोदित्यथ साश्रुपूरा । गतागतैः खिद्यति केवलैस्त्वच्चिन्तासवास्वादनमत्तचित्ता ॥' इत्यत्र पूर्वार्धे मद उत्तरार्धे श्रमश्च व्यज्यते ॥ १४७ ॥

अथालस्यम्—

**क्रियासु मान्द्यमालस्यं सुखदुःखमदादिभिः ।**
**का वार्त्ता गृहकृत्येषु त्यक्ताहारविधेस्तनोः ॥**

स्पष्टम् ॥ १४८ ॥

अथ दैन्यम्—

**सत्त्वत्यागादनौद्धत्यं दैन्यं कार्पण्यसंभवम् ।**
**क्षणं पिधेहि शीतांशुं सखि ते शतशोऽञ्जलिः ॥**

आलस्यदैन्ये यथा वा—'आलीजनादेशमपारयन्ती कर्तुं कटाक्षैरुचितक्रियासु । त्वदन्तिकं प्रेषयितुं प्रियोक्तीर्ब्रवीति भूयः परिचारिकासु ॥' इत्यत्रार्धद्वयेन क्रमादालस्यदैन्ययोर्व्यक्तिः ॥ १४९ ॥

अथ चिन्ता—

इष्टानभिगमाद्ध्यानं चिन्ता शून्यत्वतापकृत् ।
किमप्युन्नमितैकभ्रूर्ध्यायति त्वयमेव सा॥

स्पष्टम् ॥ १५० ॥

अथ मोहः—

मोहस्तु मूर्च्छनं भीतिदुःखावेशानुचिन्तनैः ।
निरीक्ष्येन्दुं रथाङ्गीव निरीहास्ते निशासु सा ॥

चिन्तामोहौ यथा वा—'स्वयं किमप्यस्फुटमालपन्ती पृष्टा पुनर्न प्रतिवक्ति किंचित् । समाधिलीनेव ततः क्षणेन सा सार्मिसंमीलितलोचनास्ते ॥' इत्यत्रापि क्रमाच्चिन्तामोहयोर्धाभ्यामभिव्यक्तिः ॥ १५१ ॥

अथ स्मृतिः—

स्मृतिः पूर्वानुभूतार्थविषयं ज्ञानमुच्यते ।
पुरा तथानुरक्तस्त्वं जातोऽद्य कथमीदृशः ॥

स्पष्टम् ॥ १५२ ॥

अथ धृतिः—

धृतिश्चित्तस्य नैःस्पृह्यं ज्ञानाभीष्टागमादिभिः ।
तदेकसक्तं मच्चित्तमसारं मनुतेऽखिलम् ॥

स्मृतिधृती यथा वा— 'कर्णातिथित्वं गमिता पुरा यत्कथा तथानन्दममन्दमाधात् । कीर्त्तिं तदीयां सखि कीर्तय त्वं गीर्भिः किमन्याभिरिति ब्रवीति ॥' इत्यत्राप्यर्थाभ्यां स्मृतिधृती क्रमाद्व्यज्यते । १५३ ।

अथ व्रीडा—

**चेतःसंकोचनं व्रीडा स्तुतिरागादिसंभवम् ।**
**तमालोक्याभवत्तन्व्या मीलितं नयनद्वयम् ॥**

यथा वा— 'आहूय लीलाशुकमादरेण बाहूपरि न्यस्य बहूपलाल्य । त्वदन्तिकं प्रेषयितुं कृतेच्छा न वाचिकं वक्ति न जोषमास्ते ॥' इति ॥ १५४ ॥

अथ चपलता—

**भावप्रकाशनपरा चेष्टा चपलतोच्यते ।**
**हारं स्पृशत्युत्तरीयं स्रंसयत्येक्ष्य सा प्रियम् ॥**

यथा वा— 'दृष्ट्वा तमग्रे तरुणी स्पृशन्ती कर्णान्तलोलानलकान्करेण क्षणं प्रवालश्रवणावतंसमधत्त वैतथ्यपदेऽभिषिक्तम् ॥' इति ॥ १५५ ॥

अथ हर्षः—

**मनःप्रसादो हर्षः स्यादिष्टावाप्त्यादिसंभवः ।**
**दृष्टे प्रियेऽभजत्तन्वी वर्षानीपलतोपमाम् ॥**

स्पष्टम् ॥ १५६ ॥

अथावेगः—

**इष्टानिष्टागमाज्जात आवेगश्चित्तविभ्रमः ।**
**निशम्य स्तनितं सद्यः सस्वजे मानिनी शठम् ॥**

हर्षवेगो यथा वा—'पश्चायुधाप्तो विधुरश्चतीति चन्द्रं समुद्दिश्य सखीभिरुक्ते । सा किंचिदुत्फुल्लविलोचनाब्जा स्रस्तोत्तरीयाभरणोज्जिहीते ॥' इति । इदं कृष्णं प्रति रुक्मिणीदूतीवचनम् । अत्र तृतीयचतुर्थपादाभ्यां क्रमेण हर्षावेगाभिव्यक्तिः ॥ १५७ ॥

अथ जाड्यम्—

**जाड्यमप्रतिपत्तिः स्यादिष्टानिष्टागमादिभिः ।**
**प्रिये समागते तन्वी न किंचिद्बुबुधे क्षणम् ॥**

अत्र प्रियसमागमेनाप्रतिपत्तिवर्णनाज्जाड्यं व्यज्यते । यथा वा—'संचारिकाप्रेषणसाहसिक्यं कन्याजनानां न कदापि भव्यम् । कामोऽपि मोहं कुरुते बतेति कर्तव्यमेषा न किमप्यवैति ॥' इति ॥ १५८ ॥

अथ गर्वः—

**आत्मोत्कर्षोऽन्याधिक्कारपूर्वो गर्वो बलादिजः ।**
**तुल्या मया किं सा धूर्त रूपेण तव या प्रिया ॥**

अत्र सपत्नीनिन्दापूर्वकमात्मोत्कर्षप्रतीतेर्गर्वो व्यज्यते । यथा वा—'ततस्तु तेभ्यस्तरुणीमतल्ली श्रुत्वा तवात्मन्यनुरागशैलीम् । अन्यावनीनायककन्यकाभ्यो धन्याहमेवेत्यभिमन्यते सा ॥' इति ॥ १५९ ॥

अथ विषादः—

**विषादश्चेतसो भङ्ग उपायापायचिन्तनैः ॥**
**गतं तेनैव मे चेतो मदनो मां न मुञ्चति ।**
**दूतीमपि न पश्यामि किमत्र करवाण्यहम् ॥**

अत्रोपायचिन्तनेन मनसो भङ्गकथनाद्विषादो व्यज्यते । यथा वा—'शृणोमि चेत्तस्य गुणाननङ्गगुणध्वनिर्मां बधिरीकरोति । पश्यामि चित्रे यदि पातकी मे बाष्पो विरोधीति बताकुला सा ॥' इति ॥ १६० ॥

अथौत्सुक्यम्—

**कालाक्षमत्वमौत्सुक्यमभिलाषादिहेतुभिः ।**
**न परं प्रहरत्यद्य पञ्चबाणः क्षणोऽपि हा ॥**

अत्र क्षणोऽपि प्रहरवदाचरतीत्यनेन कालाक्षमत्वप्रतिपादना-दौत्सुक्यं व्यज्यते । यथा वा—'दूती मनोवेगवती दुरापा दूरेतरां द्वारवती पुरी च । क्षणोऽपि हा कल्पशतायते मे करोमि किं वेति करोति चिन्ताम् ॥' इति ॥ १६१ ॥

अथ निद्रा—

**बाह्येन्द्रियाणां वैकल्यं निद्रा दुःखश्रमादिभिः ।**
**स्वप्ने दृष्ट्वा प्रियं बाहू प्रसारयति सा मुधा ॥**

अत्र स्वप्नदर्शनेन बाह्येन्द्रियव्यापारोपरमप्रतीतेर्निद्रा व्यज्यते ॥

अथापस्मारः—

**अपस्मरोऽतिभीत्यादेराकुलीभाव इष्यते ।**
**स्वप्ने प्रयान्तं त्वां मत्वा मा याहीत्याकुला भृशम्**

अत्र भृशमाकुलीभावेनापस्मारो व्यज्यते । निद्रापस्मारौ यथा वा—'निमीलयत्यक्षि निशासु नैव निमेषमेषाथ नि-मीलयेच्चेत् । धनुर्धरं वीक्ष्य पुरः सुमास्त्रं धावत्यविश्रान्त-मितस्ततश्च ॥' इति ॥ १६२ ॥

अथ सुप्तम्—

**सुप्तं तु सुखदुःखाद्यैरन्तरिन्द्रियमीलनम् ।**
**चिरं निद्राति निश्चिन्तं त्वदाश्लेषसुखादियम् ॥**

अत्र निश्चिन्तमित्यन्तारिन्द्रियोपरमप्रतीतेः सुप्तं व्यज्यते ।
यथा वा—'कदा तदालिङ्गनजातमोदसुधासुधावारिधिमग्न-
चेताः । भुजान्तरे तस्य सुखं शयाना रजां विनेष्येऽहमि-
तीहते सा ॥' इति ॥ १६४ ॥

अथ विबोधः—

**विबोधश्चेतनावाप्तिर्जृम्भाक्षिपरिमृष्टिकृत् ।**
**चिरादुत्स्वप्नतां याता विद्धवोन्मिषति क्षणात् ॥**

अत्रोन्मिषतीति विबोधो व्यज्यते ॥ १६५ ।

अथामर्षः—

**क्रोधः कृतापराधेषु स्थिरोऽमर्षत्वमश्नुते ।**
**याहि याहि प्रिया यत्र कदर्थयसि किं वृथा ॥**

अत्रानुनतर्यपि प्रिये कोपाविष्करणेन क्रोधस्य स्थैर्यादमर्षो
व्यज्यते । विबोधामर्षौ यथा वा—'राधा न चाहं रति-
वल्लभा ते पथि स्खलन्किं पतितोऽसि यद्वा । यावद्वृथा
कुप्यति साशु याहि याहीत्युशन्ती मिषतीयमर्षे ॥' इति ।
अत्र पादत्रयेणामर्षस्तुर्यपादेन विबोधश्च व्यज्यते ॥ १६६ ॥

अथावहित्था—

**अवहित्थाकारगुप्तिर्भवेल्लज्जादिसंभवा ।**
**निह्नोति सत्वरागत्य निःश्वासं कम्पितस्तनम् ॥**

अत्र सुरतश्रमजनितश्वासस्य सत्वरागत्या निह्नवेनावहित्था व्यज्यते । यथा वा—'तमालमग्रे तरुणं समीक्ष्य तन्वी भवद्भावनया तदैव । खिन्नाखिलाङ्गी सवितुः करेण खिन्नाहमस्मीति सलज्जमाह ॥' इति ॥ १६७ ॥

अथोग्रता—

**अपकारिषु पारुष्यमुग्रता तर्जनादिकृत् ।**
**जितोऽसि मन्द कंदर्प त्वज्जेतास्ति हृदि प्रियः ॥**

अत्रापकारिणि स्मरे पारुष्यादुग्रता व्यज्यते । यथा वा—'माकन्द मन्दोऽसि यतो मुकुन्दं ब्रूषे न मे हन्त यदि ब्रवीषि । पुष्पाणि पुष्पायुधसाधनानि भूषा तवैव स्युरिति ब्रवीमि ॥' इति । अत्र मुकुन्दप्रवृत्त्यकथनेनापकारिणि चूते मन्दोऽसीति पारुष्यादुग्रता व्यज्यते ॥ १६८ ॥

अथ मतिः—

**विमृश्य युक्तिभिः शश्वदर्थनिर्धारणं मतिः ।**
**औवाग्निर्जृम्भते नेन्दुर्यतो दहति मामसौ ॥**

अत्र स्वदाहकत्वयुक्त्या चन्द्रस्यौर्वत्वनिश्चयान्मतिर्व्यज्यते ।

यथा वा—'विनिन्द्यते हन्त वृथा रसालः समीपमीशोऽस्य समागतश्चेत् निरन्तरं तन्मुरलीनिनादैरङ्कुरितः स्यादयमित्यवैति॥' इति। अत्र निरन्तरपल्लवितत्वाभावेन भगवतो रसालसमीपानागमननिर्धारणान्मतिः। शास्त्रावधारणं मतिरित्यन्ये॥ १६९॥

अथ व्याधिः—

**व्याधिः शरीरसंतापो विरहादिकृतो भवेत्।**
**तस्याः शरीरसंतापो यद्यौर्वो हिमशीतलः॥**

अत्र शरीरतापेन व्याधिर्व्यज्यते। यथा वा—'कृताप्लवा सा हिमवालुकाभिः सवालुकायां हिमवापिकायाम्। दशाननद्रोहिशरानलार्चिर्दन्दह्यमानाऽधिदशां विधत्ते॥' इति॥

अथोन्मादः—

**उत्कण्ठाहर्षशोकादेरुन्मादश्चित्तविभ्रमः।**
**आगतेयं प्रियतमेत्यालिङ्गति लतामसौ॥**

अत्र लतायां प्रियतमाभ्रान्त्युक्त्योन्मादो व्यज्यते। यथा वा—'ब्रवीषि चेद्दुर्हिण वल्लभं मे तदा समादाय तवैव पिञ्छम्। कर्णावतंसं कलयेऽस्य नान्यद्यशस्तवास्मादिति याचते सा॥' इति। अत्राचेतने प्रार्थनयोन्मादो व्यज्यते॥

अथ मरणम्—

**मरणं मरणोद्योगो विरहादिभवो मतः ।**
**चन्द्रमुद्वीक्षते बाला निजजीवितनिःस्पृहा ॥**

अत्र चन्द्रवीक्षणरूपमरणोद्योगेन मरणं व्यज्यते । यथा वा—'चन्द्रांशुलीलावनचन्दनादिवार्त्तासु चार्ता वरवर्णिनी सा । आरामभूमावनुलिप्तगात्री चन्द्रातपं संप्रति सेवते सा ॥' इति ॥ १७२ ॥

अथ त्रासः—

**त्रासश्चित्तस्य संक्षोभ आकस्मिकभयादिभिः ।**
**मानिनी स्तनितं श्रुत्वा हठादालिङ्गति प्रियम् ॥**

अत्र मानिन्या हठालिङ्गनेनाकस्मिकभयप्रतीतेस्त्रासो व्यज्यते । अपस्मारोऽतिभीत्यादेराकुलीभावः, त्रासस्त्वाकस्मिकभयादाकुलीभाव इति भेदः ॥ यथा वा—'आशङ्कय भृङ्गारवमङ्कजातमौर्वीलताटङ्कृतिमेव गुर्वीम् । ध्यानागतत्वत्परिरम्भणाय दीना मुधासारयति स्वबाहू ॥' इति ॥ १७३ ॥

अथ वितर्कः—

**संदेहात्कल्पनानन्त्यं वितर्कः परिकीर्तितः ।**
**प्रेषयामि सखीं यद्वा स्वयं यामि तदन्तिकम् ॥**

अत्र सखीं प्रेषयामीत्यादिनानेकविकल्पकल्पनाद्वितर्को व्यज्यते ॥ यथा वा—'पश्याम्यलिश्यामलमालि कंचित्स्वप्नो नु नाप्नोमि सदैव निद्राम् । भ्रमो नु नोदेति कदापि बाधा मायैव मारस्य तदित्यवैति ॥' इति ॥ एवं रसान्तरेष्वपि व्यभिचारिणो यथासंभवमुदाहार्याः ॥ १७४ ॥

एवं काव्यनाट्यसाधारणानष्टौ रसान्निरूप्य काव्यमात्रासाधारणं नवमं रसं निरूपयति—

**निर्वेदस्थायिकः काव्ये शान्तोऽपि नवमो रसः ।**
**संसारे किमसारेऽस्मिन्भक्तिं कुरु भवे मनः ॥**

यत्र तत्त्वज्ञानादिजनितनिष्फलत्वधीरूपो निर्वेदः स्थायी स शान्ताख्यो नवमो रसोऽपि काव्येष्वस्ति । अत एव व्यभिचारिषु हर्षौत्सुक्यादिषु विद्यमानेषु निर्वेदस्यामङ्गलप्रायत्वेन प्रथममनुपादेयत्वेऽप्युपादानं व्यभिचारित्वेऽपि तस्य शान्तरसं प्रति स्थायित्वसूचनार्थम् । न चैवममर्षस्यापि क्रोधरूपस्य रौद्ररसे स्थायित्वात्तस्य वा प्रथममुपादानं किं न स्यादिति वाच्यम्, स्थायिप्रकरणे तस्य स्थायित्वेनोक्ततया पुनस्तस्य स्थायित्वसूचनावैयर्थ्यादित्याहुः । अन्ये तु—सर्वचित्तवृत्तिप्रविलयरूपः शम एव तत्र स्थायी, अत एव 'जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिताः' इत्युद्भटेनोक्तमित्याहुः ।

अभावरूपस्य तस्य चेतोवृत्तिरूपत्वाभावेन भावत्वा-योगादित्यन्ये । न चात्र काव्यग्रहणं व्यर्थमिति वाच्यम्, 'न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा । रसः स शान्तः कथितो रसज्ञैः सर्वेषु भावेषु समप्रमाणः ॥' इत्युक्ततया समस्तव्यापारप्रविलयलक्षणस्याभिनेतुमशक्यतया तस्य नाट्यरसत्वायोगादित्याहुः । तत्रापि वनप्रवेशविविक्तदेशसेवितादेस्तदभिव्यञ्जकस्याभिनययोग्यतया नाट्यरसत्वमपि तस्याविरुद्धमित्यन्ये । न चानादिसिद्धरागद्वेषवासनामयं न चर्वणीय इति कथमस्य रसतेति वाच्यम्, तर्हि वीतरागादिभिः शृङ्गारादीनामप्यचर्वणीयतया रसत्वं न स्यात् । न चैवमपि भरतेन तस्य विभावाद्यनुपदेशात्कथं रसत्वमिति वाच्यम्, तस्य विभावाद्यप्रतिपादनं परमपुरुषार्थतया लोकयात्रातिक्रान्तत्वात् । शक्यं च तत्र विचक्षणैः स्वयमुत्प्रेक्षितुम् । तथा हि— अध्यात्मशास्त्राभ्यासत्पुरुषसेवादयो विभावाः, यमनियमादयोऽनुभावाः, मतिस्मृतिधृतिचिन्तावितर्कादयो व्यभिचारिणः ।— इत्याहुः ॥ यथा वा—'अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा । तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः क्वचित्पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः ॥' इति । अत्र भुजङ्गहा-

रसमहत्तया परिकर्मनिःस्पृहता, पुष्पास्तरणशिलातलयोः समदृष्टितया भोगोपकरणनिःस्पृहता, रिपुसुहृदोः समदृष्टितया पुत्रैषणाराहित्यं तत्र सुहृत्पदस्य पुत्राद्युपलक्षणत्वात्, मणिलोष्टयोः समदृष्टितयार्थैषणाराहित्यम्, तृणस्त्रैणयोः समदृष्टितया दारैषणाराहित्यं चेत्येषणात्रयराहित्यं च व्यज्यते। तेन च शान्तरसाभिव्यक्तिः सहृदयहृदयसाक्षिका समेधत इति ध्येयम् ॥ १७५ ॥

रसभावतदाभासादीनां व्यक्तावसंलक्ष्यक्रमव्यङ्ग्यत्व इत्युक्तम्। तत्र रसो निरूपितः। इदानीं प्राप्तावसरतया भावं निरूपयति—

**रतिर्देवादिविषया व्यञ्जिता भाव उच्यते।**
**श्यामा दूर्वेव वामाङ्के पाटला देवतावतात् ॥**

आदिशब्देन मुनिपुत्रगुरुनृपमित्रादयो गृह्यन्ते। नन्वेवं पार्वत्याः परमेश्वरविषया रतिरपि देवविषयत्वाद्भावः स्यादिति चेन्न; अत्र रतिशब्देन मन्मथानुद्दीपनीयप्रीतिविशेषस्यैव विवक्षितत्वात्। ततश्च पार्वत्याः परमेश्वरविषया रतिराभिव्यक्ता मन्मथोद्दीप्यतया शृङ्गाररस एवेत्याहुः ॥ यथा वा—

'कण्ठकोणविनिविष्टमीश ते कालकूटमपि मे महामृतम्।
अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि रोचते न मे ॥'—

कालकूटमपि कण्ठकोणविनिविष्टतया भवद्वपुरभिप्रवृत्तीति मे महामृतं परमप्रेमास्पदम्, 'दुःखान्यपि सुखायन्ते विषमप्यमृतायते। मोक्षायते च संसारो यत्र मार्गः स शांकरः॥' इत्युक्तत्वादिति भावः। अमृतं पुनरुपात्तमप्यनायासलब्धमपि भवद्वपुषः सकाशाद्भेदेन वर्तेत यदि तदा तन्न मे रोचत इति भक्तस्य कस्यचिदुक्तिः। अत्र देवताविषया रतिर्व्यज्यमाना भाव इत्युच्यते॥ मुनिविषया यथा—'हरत्यघं संप्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः। शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम्॥' —संप्रतीदानीमघं पापं हरति। न हि भूते भाविनि वा तादृशी प्रीतिर्यादृशी वर्तमान इति रीत्या वर्तमानस्य प्रथमं निर्देशः। तदनन्तरं भूतापेक्षया भाविनि प्रीत्यतिशयादाह—एष्यतो भविष्यतः शुभस्य हेतुः। नैतद्भवद्दर्शनमकृतपुण्यैर्लभ्यमित्याह–पूर्वमाचरितैः शुभैः कृतं संपादितं भवदीयदर्शनं शरीरिणां कालत्रितयेऽपि योग्यताम् 'योगोऽभीष्टार्थसंपत्तिध्यानसंगतियुक्तिषु' इत्युक्ततयाभीष्टार्थसंपत्त्यर्हतां व्यनक्ति। —इति नारदं प्रति कृष्णवाक्ये कृष्णस्य नारदविषया रतिर्व्यज्यते॥ पुत्रविषया यथा—'एह्येहि वत्स रघुनन्दन रामचन्द्र चुम्बामि मूर्धनि चिरं च परिष्वजामि। आरोप्य वा हृदि दिवानिशमुद्वहामि वन्देऽथ वा चरणपुष्करकद्वयं ते॥'

इति । यद्यपीयं महावीरचरिते रामभद्रं प्रति जनकस्योक्तिः, तथापि जामातुरपि पुत्रप्रायत्वादत्र पुत्रविषया रतिर्व्यज्यते ॥ साक्षात्पुत्रविषया यथा—'आलक्ष्यदन्तमुकुलाननिमित्तहासैरव्यक्तवर्णरमणीयवचःप्रवृत्तीन् । अङ्काश्रयप्रणयिनस्तनयान्वहन्तो धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥' इति ॥ गुरुविषया यथा—'संसाराब्धौ विधुरविधुरो ब्रह्म यत्तद्विचिन्वन्नानारूपं जगदिदमहं दृष्टवानेव पूर्वम् । हस्ते न्यस्ते सति तव गुरो सांप्रतं मस्तके मे ब्रह्मैवेदं सकलमभवन्नो जगन्नैव चाहम् ॥' इति ॥ राजविषया यथा—'वीर श्रीरघुनाथभूप भवतो गाम्भीर्यतस्तादृशाद्गाधीभूतमपां निधिं न बुबुधे प्रालेयभूमीधरः । धैर्येणैष जितो निमङ्क्तुमिह यन्मन्ये निपत्य ह्रिया श्वेतद्वीपति किं जडप्रकृतयो जानन्ति भावस्थितिम् ॥' इति ॥ मित्रविषया यथा—'रे रे कापुरुषापवादपटवः पथ्यं कटु श्रूयतामित्थं हन्त पलायितुं किमु वयं पत्या प्रतिष्ठापिताः । अप्यन्यत्कपयः प्रियापरिभवप्रक्षालनाधूर्वहो रामः क्रूरधनुर्धरो यदि वृथा वैकुञ्ठ्यमालम्ब्यते ॥'

—कापुरुषाणां कुत्सितपुरुषाणां योऽयमपवादस्तद्ग्रहणे पटवो रे रे कपयोऽस्थानभीरवः, कटुभूतमपि पथ्यं श्रूयताम् । वयमित्थं पलायितुं किं पत्या रामभद्रेण प्रतिष्ठापिता वालिहननानन्तरं स्वस्वाधिकारे स्थापिताः ! तस्मान्न युक्तं पला-

यनम् । किं चान्यदप्युच्यते—रामः प्रियापहरणपरिभवप्र क्षालनोद्युक्तो यदि । 'यदि वेदाः प्रमाणम्' इतिवदसंदिग्धे संदिग्धवद्वचनमिदम् । तथा च रामभद्र एव सर्वं कार्यं साधयिष्यति । तद्वृथा वैक्लव्यमालम्ब्यते । न च तस्यासा-मर्थ्यमित्याह—क्रूरधनुर्धर इति । वालिहननसमुद्रशोषणा-दिना दृष्टसारता क्रूरशब्देन द्योत्यते । —इत्यत्र पलायमाना-न्कपीन्प्रति सुग्रीववाक्ये सुग्रीवस्य रामभद्रं प्रति मैत्रीरूपर-तिभावो व्यज्यते ॥ एवमन्यदप्युदाहार्यम् । एतेन नवैव रसा इत्यनुपपन्नं देवादिविषयाणां रतीनामप्यभिव्यक्तौ रसान्तर-त्वावश्यंभावादित्यप्यपास्तं वेदितव्यम् ॥ १७६ ॥

नन्वेवमपि व्यभिचारिणां व्यङ्ग्यानां क्वान्तर्भाव इत्या-काङ्क्षायामाह—

**एवं भावतया वेद्या व्यञ्जिता व्यभिचारिणः ।**
**क्षणोऽपि विरहे तन्व्याः कल्पकोटिशतायते ॥**

देवादिविषयरतिव्यञ्जिता व्यभिचारिणोऽपि भावा एव वेद्याः उत्तरार्धमुदाहरणम् । तत्र कालाक्षमत्वरूपमौत्सुक्यं व्यज्यते ॥ यथा वा— 'जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता ततः । नो यावत्परिरभ्य चाटुशतकैराश्वासयामि प्रियां भ्रातस्तावदहं

शठेन विधिना निद्रादरिद्रीकृतः ॥' इति । इदं विरहातुरस्य वयस्यं प्रति वचनम् । अत्र 'जाने' इति वाक्योपन्यासेऽव्ययमित्येके । वक्ष्यमाणवाक्यार्थकर्मकमाख्यातमेव तदित्यन्ये । हे भ्रातः सखे, अद्य स्वप्ने प्रियतमा कोपपराङ्मुखी मया दृष्टा । ततो मयि स्प्रष्टुमुद्युक्ते सति पाणिना मा मा स्पृशेति रुदती सती गन्तुं प्रवृत्ता च दृष्टा । तथा गच्छन्तीं प्रियां परिरभ्य चाटुशतकैर्यावदाश्वासयामि तावदेवाहं शठेन विधिना निर्निद्रः कृत इति ;—अत्र झटिति निद्राविघातकं विधिं प्रत्यसूया व्यज्यते । ननु—'त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायामात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् । अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालिप्यते मे क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥' इत्यत्र विप्रलम्भशृङ्गारो व्यज्यत इत्युक्तम् । इह त्वसूयाख्यव्यभिचारिभावाभिव्यक्तिरित्युच्यते । कः पुनरनयोर्विशेषः ?—इति चेत्सत्यम् ; रसध्वन्यसूयाख्यभावध्वन्योरेकव्यञ्जकानुप्रवेशलक्षणसंकरस्वीकारेणोभयसामञ्जस्यात् , वैपरीत्येनोदाहरणानुयोगस्याशोकवनिकानिदेशतुल्यत्वादित्येके । विप्रलम्भशृङ्गारस्य स्वप्नवृत्तान्तात्मकस्य प्रबोधेन बाधितत्वाद्व्यभिचारिभावस्यैवेह साम्राज्यमित्यन्ये ॥ १७ ॥

अथ रसाभासमाह—

**रसाभासस्तु रत्यादेरनौचित्यप्रवर्तने ।**
**स्मृत्वा दन्दह्यते चेतो दृशाप्यस्पृशतीं सतीम् ॥**

यत्र रत्यादेरनौचित्येन प्रवृत्तिस्तत्र रसाभासः । यथा स्मृत्वे-त्यत्राननुरक्तायां रतेः प्रवृत्तेरनौचित्यप्रवृत्ततया रसाभासः । यत्र परस्परानुरागस्तत्र रसः, यत्र त्वन्यतरानुराग एव तत्र न रसः किं तु रसवदाभासमानत्वाद्रसाभास एवेति ध्येयम् ॥ यथा वा— 'ब्रह्मन्नध्ययनस्य नैष समयस्तूष्णीं बहिः स्थीयतां स्वल्पं जल्प बृहस्पते जडमते नैषा सभा वज्रिणः । वीणां संहर नारद स्तुतिकथालापैरलं तुम्बुरो सीतायल्लकभल्लविद्धहृदयः स्वस्थो न लङ्केश्वरः ॥' इति । आयल्लको विरहः, स एव भल्लः, तेन विद्धहृदयः । अत्र सीतायामनौचित्येन रावणस्य रतिः प्रवृत्तेत्याभासः ॥ एवमे-कस्या युगपदनेकेषु रतिप्रवृत्तिरप्याभास एव । यथा—'स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे विलेभे यः प्राणा-न्रणमुखमखे यं मृगयसे । सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् । '— हे वामाक्षि, कं स्तुमो येन विना क्षणमपि न रमसे । को वा रणमुखयज्ञे प्राणान्विलेभे विमुक्तवान् । को वा रणाभिमुखमरणजनितपुण्यविभवेन जात इति यावत् । यं त्वं मृगयसे । को वा सुलग्ने जातो यं त्वमेव

बलादालिङ्गसि। कस्य वैषा तपःश्रीर्यं तु ध्यायसि।—इत्येकस्या अनेकविषयकरागप्रतीते रसाभासः। न च वेश्याया अनेकविषयकरागेऽपि नानौचित्यमिति नात्र रसाभासतेति वाच्यम्; तस्या अपि युगपदनेकानुरागस्यानौचित्यात्, 'उत्तमप्रकृतिरुज्ज्वलवेषात्मकः' इति शृङ्गारलक्षणाद्वेश्याविषयत्वे शृङ्गारस्य सुतरामाभासत्वाच्च। न च स्तुतिविषयत्वादिनानाविधव्यापारवानेक एव नायकः कुतो न स्यादिति वाच्यम्; ध्यायसि तु यमित्यत्र तुशब्दोपादानेनान्यव्यवच्छेदलाभाद्भिन्नपरत्वस्य व्यक्तत्वात्, मदननगरीति संबोधनेनानेकोपभोग्यत्वप्रतीतेश्चेत्याहुः। यद्यपि काव्यश्रवणनाट्यदर्शनाभ्यां विभावादीनां साधारण्येन ज्ञाने सति सामाजिकानां स्वीयस्थाय्यभिव्यक्तिरित्यलौकिको रसः स्वतो नाभासः, तथापि साधारण्यप्रतीतिप्रयोजककाव्यवर्णनादिविषये तत्रानौचित्यप्रतिसंधानात्तद्व्यङ्ग्ये रसेऽप्याभासत्वव्यवहार इति ध्येयम्॥ केचित्तु तिर्यगादिषु रसाभासमाचक्षते। तदयुक्तम्, तेष्वपि विभावादिसंभवात्। न च विभावादिज्ञानशून्यास्तिर्यञ्चो रसभाजनं भवितुं नार्हन्तीति वाच्यम्। विभावादिसद्भावो हि रसप्रयोजको न विभावादिज्ञानम्। ततश्च 'ददौ रहः पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः। अर्धोपयुक्तेन बिसेन जायां संभावया-

मास रथाङ्गनामा ॥' इत्यत्र गजेनालम्बनविभावेन जनिता वसन्तादिभिरुद्दीपनविभावैरुद्दीपिता सुरभिगण्डूषजलदाना- द्यनुभावप्रकाशिता हर्षादिभिर्व्यभिचारिभिरुपचिता करेणो रतिः शृङ्गाररसतां प्रतिपद्यते । एवं रथाङ्गरतिरपि । अत एव काव्यप्रकाशिकायाम् 'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः—' इति श्लोकेन भयानकरसस्तिर्यग्वि- षयतयोदाहृत इत्याहुः ॥ १७८ ॥

अथ भावाभासं लक्षयति—

**भावाभासस्तु भावानामनौचित्यप्रवर्तने ।**
**कटाक्षयेत्किं सा बाला पुरा या मां निराकरोत् ॥**

अत्राननुरक्तायामौत्सुक्यप्रतीतेर्भावाभासता । यथा वा— 'राकासुधाकरमुखी तरलायताक्षी सा स्मेरयौवनतरङ्गित- विभ्रमा स्यात् । तत्किं करोमि विदधे कथमत्र मैत्रीं तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः ॥'— अतिशैशव एव कांचिदवलोक्य कालान्तरे तां स्मरतः कस्याचिदुक्ति- रियम् । अत्र यौवनं संभाव्य तत्संगमे चिन्ताप्रवृत्तेरनौ- चित्यमित्येके । स्वीकृत्युपायत्वेन मैत्रीमनुचिन्तयतीत्यनौचि- त्याच्चिन्ताया भावाभासतेत्यपरे । सेत्यनेनाननुरक्ता प्रति- संहितेत्यनौचित्यं चिन्ताया इत्यन्ये । अत्र यद्यपि रसाभा-

सताप्यस्ति, तथापि व्यभिचार्याद्यसंवलनदशायां भावाभासतेति ध्येयम् । एवं रसान्तराणां भावान्तराणां चाभासा उदाहार्याः । तत्र वीररसस्याभासो यथा-- 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥' इत्यादिना लक्ष्मणोत्साहस्य दशरथे प्रवृत्तेरनौचित्यप्रवृत्तिः । भावान्तरस्याभासो यथा— 'किं त्वामन्यत वैदेहः पिता मे मिथिलाधिपः । राम जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥' इति । अत्र सीताया रामभद्रे वाक्पारुष्यरूपोग्रताप्रवृत्तेरनौचित्यमित्याद्यूह्यम् ॥ १७९ ॥

अथ भावशान्तिमाह--

**भावशान्तिस्त्वभिव्यक्ते**
**प्रशमे व्यभिचारिणाम् ।**
**विनते विमते तस्या**
**दृक्कोणं शोणिमात्यजत् ॥**

यत्र निर्वेदादीनां व्यभिचारिणां प्रशमो व्यज्यते तत्र भावशान्तिः । उत्तरार्धेऽमर्षरूपभावप्रशमाभिव्यक्तेर्भावशान्तिः । यथा वा— 'तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते । इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया साश्लिष्टा रभसेन

तत्सुखवशात्तन्व्या च तद्विस्मृतम् ।'—मां कथमपनीत- इति पृष्टवन्तं वयस्यं प्रति नायकोक्तिरियं । तस्याः सपत्न्याः सान्द्रविलेपनयोः स्तनयोर्युगस्याश्लेषेण स्तनयुग- मुद्राङ्कितम् । मुद्राङ्कितत्वसिद्धये सान्द्रविलेपनेति विशेषण- मुक्तम् । वक्षः पादानमनसंभ्रमच्छलेन किं गूह्यत इति मानिन्या भणिते, तन्मुद्राङ्कनं क्वेत्युदीर्य सहसा निगूहनो- पायान्तराभावेन साहसं केवलमवलम्ब्य तन्मुद्राङ्कनं संप्र- मार्ष्टुं रभसेन किं भविष्यतीति भीत्या झटिति वा सा मानिनी समालिङ्गिता । तत्सुखवशादालिङ्गनजन्यसुखपा- रवश्यात्तन्व्या च तन्मया च्छलेन कृतं गोपनं विस्मृतम् । —इत्यत्रामर्षस्य शान्तिर्व्यज्यत इति भावशान्तिः । यद्य- प्यत्र तत्सुखवशादिति मोहोदयव्यक्तेर्भावोदयस्यापीदमुदा- हरणम्, तथापि भावोदयस्य भावशान्त्यङ्गतया प्राधान्या- भावाद्भावशान्तिरिहोदाहृता । १८० ॥

भावोदयमाह—

**भावोदयः स्यादुत्पत्तौ**
**व्यङ्ग्यायां व्यभिचारिणाम् ।**
**किमिदं कुचयोराली-**
**त्युक्त्वा मुग्धाभवन्नता ॥**

यत्र व्यभिचारिभावानामुत्पत्तिर्व्यज्यते तत्र भावोदयः। यथोत्तरार्धे कुचयोर्नखाङ्कनमवलोक्य सख्या कुचयोः किमिति सपरिहासमुक्तया मुग्धाया लज्जाख्यभावोदयव्यक्तेर्भावोदयः॥ यथा वा—'एकस्मिञ्शयने विपक्षरमणीनामग्रहे मुग्धया सद्यः कोपपराङ्मुखग्लपितया चाटूनि कुर्वन्नपि। आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः॥'—एकस्मिञ्शयन इत्यनेन सपत्नीनामग्रहणस्यात्यन्तानौचित्यं व्यज्यते। चाटुकरणसमयेऽवधीर्य स्वयं प्रसन्नतया मुग्धयेत्युक्तम्। कोपेन पराङ्मुखतया ग्लपितया मानवशेन म्लानया। आवेगान्मानोत्कर्षात्। कालेनैवायं कोपः शमयितव्य इति तत्क्षणं तूष्णीं स्थितः, 'सामादौ तु परिक्षीणे स्यादुपेक्षावधीरणम्' इति न्यायादिति भावः। वस्तुतो न स्वपिति, किं तु मदाशयपरिज्ञानाय सुप्त इव च मा भूदिति वीक्षितः। पुनःशब्देन प्रथमं किंचिद्वलितग्रीवं वीक्षितः तथापि नायकेन तदाशयशोधनार्थं तदज्ञात्वेव स्थिते पुनरमन्दवलितग्रीवं वीक्षित इति द्योत्यते। ततश्चात्र कालाक्षमत्वलक्षणस्यौत्सुक्यस्योदयो व्यज्यत इति भावोदयः। यद्यप्यत्र कोपस्य शान्तेर्भावशान्तितापि, तथापि भावोदयस्य प्राधान्यात्तदुदाहरणमिति ज्ञेयम्॥ १८१॥

भावसंधिमाह—

**भावसंधिस्तु भावानां तुल्यानां व्यङ्ग्यता यदि ॥**

**सीताकपोलमुकुरे पश्यन्नुत्पुलकं मुखम् ।**
**रक्षःकलकलं शृण्वञ्जटां बध्नाति राघवः ॥**

यत्र तुल्यबलतया परस्परानुपमर्दकानां भावानां भावयोर्वा विरुद्धरसव्यभिचारिभूतयोर्व्यङ्ग्यता तत्र भावसंधिः । यथा सीताकपोलेत्यत्रोत्पुलकमिति पुलकरूपानुभावेन शृङ्गाररस-व्यभिचारिणो हर्षस्य, जटाबन्धनरूपानुभावेन वीररसव्य-भिचारिण आवेगामर्षादेश्च व्यञ्जनाद्भावसंधिः । अत्र चो-त्पुलकमित्यनेनैव रसद्वयव्यभिचारिणो हर्षामर्षादेर्व्यञ्जनास्सं-भवाद्भावद्वयस्यैकव्यञ्जकानुप्रवेशेन भावसंकराख्योऽपरोऽपि प्रकारः संभवतीति ध्येयम् ॥ यथा वा— 'उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः सत्सङ्गप्रियता च वीररभ-सोन्माथश्च मां कर्षतः । वैदेहीपरिरम्भ एष च मुहुश्चैतन्य-मामीलयन्नानन्दी हरिचन्दनेन्दुशिशिरः स्निग्धो रुणद्ध्यन्य-तः ॥' —— भार्गवागमनं श्रुतवतोऽन्तःपुरगतस्य रामभ-द्रस्य वचनमिदम् । उत्सिक्तस्य दृप्तस्य तपसां पराक्रमाणां च निधेः । भार्गवस्येति शेषः । एकतो बहिर्वीराणां योऽयं रभस आवेगस्तस्योन्माथ उन्मथनम् । उन्माथप्रियतेति यावत् ।

तपोनिधित्वात्सत्सङ्गप्रियता कर्षति, हरिसक्तत्वे सति परा-क्रमनिधित्वाद्वीररभसोन्माथश्च बहिः कर्षतीति विभागः। आनन्द्यानन्दहेतुः। अन्यतोऽन्तःपुरे। — अत्र सत्सङ्गप्रिय-तेत्यनेन मुनिविषयकभावव्यभिचारिणो हर्षस्य, वीररभसेत्य-नेन वीररसव्यभिचारिण आवेगस्य, वैदेहीत्यादिना शृङ्गार-रसव्यभिचारिणो हर्षस्य च व्यञ्जनाद्भावसंधिः॥ १८२॥

भावशबलतामाह——

**पूर्वपूर्वोपमर्दे तु तेषां शबलता मता॥**

**फलं किं बन्धुसंक्षोभात्कातर्यं किं वदेज्जनः।**
**का हानिः किंवदन्त्या मे द्रष्टव्या द्रौपदी कथम्॥**

यत्र भावानां पूर्वपूर्वोपमर्दकतया व्यक्तिस्तत्र भावशबलता। यथा फलं किमित्यादि। युद्धार्थं भीष्मादिषु बन्धुषु समुप-स्थितेष्वर्जुनवाक्यमिदम्– 'अरयो यां न पश्यन्ति बन्धुभिर्या न भुज्यते। किं तया वद राजेन्द्र विदेशगतया श्रिया॥' इति न्यायेन बन्धून्संहृत्य लब्धया श्रिया मम किं फलमिति प्रथमपादेन निष्फलत्वधीरूपो निर्वेदो व्यज्यते। यदि बन्धु-स्नेहादुपेक्षा क्रियेत तदा जनः कातर्यं वदेत्किमिति जना-पवादरूपानिष्टोत्प्रेक्षणेन द्वितीयपादे शङ्का व्यज्यते। लोका-पवादेन मम किं हीयते? ततो न बन्धुसंक्षोभः कार्य इति

निर्धारणप्रतीतेस्तृतीयपादेन मतिर्व्यज्यते । बन्धुषु दया कृता चेद्यावत्सुयोधनादिवधं विमुक्तवेणी द्रौपदी कथं द्रष्टव्येति तुरीयपादेन चिन्ता व्यज्यते। ततश्चात्र भावानां निर्वेदशङ्कामतिचिन्तानां पूर्वपूर्वोपमर्देन व्यक्तेर्भावशबलता ॥

यथा वा— 'क्वाकार्यं शशलक्ष्मणः क्व नु कुलं भूयोऽपि दृश्येत सा दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् । किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा चेतः स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधरं पास्यति ॥'— इदं शकुन्तलादर्शनोत्कण्ठितस्य दुष्यन्तस्य वाक्यम् । अत्र मुनिकन्यकाभिलाषरूपमिदमकार्यं क्व निरपवादं चन्द्रस्य कुलं क्वेति युक्तायुक्तविचारणात्मको वितर्कः, सा भूयोऽपि दृश्येतेत्यौत्सुक्यम्, दोषाणां प्रशमाय परिहाराय नोऽस्माकं श्रुतं शास्त्रश्रवणमतो दोषावहत्वादभिलाषो न युक्त इति युक्त्यार्थनिर्धारणान्मतिः, कोपेऽपि तस्या मुखं कान्तमित्यनुभूतार्थस्मरणात्स्मृतिः, कृतधियः स्थिरबुद्धयोऽत एवापकल्मषाः सत्पुरुषाः किं वक्ष्यन्तीति सज्जननिन्दारूपानिष्टागमोत्प्रेक्षणेन शङ्का, सा स्वप्नेऽपि दुर्लभेति कृपणतारूपं दैन्यम्, हे चेतः स्वास्थ्यं धैर्यमुपेहीति धृतिः, धन्यः को वा युवाधरं पास्यतीति चिन्ता च व्यज्यते । ततश्च पूर्वपूर्वोपमर्देन वितर्कौत्सुक्यमतिस्मृतिशङ्का-

दैन्यधृतिचिन्तानां व्यक्तेर्भावशबलता । ननु भावस्योदयव-च्छान्तिवच्च मध्ये स्थितेरपि किमिति नोक्ता नोदाहृता चेति चेन्न; भावस्थितेर्भावस्वरूपाव्यतिरेकाद्भावस्वरूपनिरूपणेनैव सा निरूपिता । 'जाने कोपपराङ्मुखीम्–' इत्यादिर्तैदुदा-हरणेनैव साप्युदाहृतेति न पृथगुच्यत इति ध्येयम् । १८३॥

ननूक्तोदाहरणेषु रसस्यापि संभवात्कथमेषां भावोदाह-रणतेत्यत आह—

**मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन ।**
**यथैव राजानुगता भृत्याः परिणयोन्मुखाः ॥**

ते भावशान्त्यादयो रसे मुख्येऽप्यङ्गित्वं प्राधान्यं प्राप्नुवन्ति कदाचन तादृशचमत्कारे लब्धे न तु सर्वदा । न च कथमिदमुच्यते रसोऽपि मुख्यो भावशान्त्यादयोऽप्यङ्गिन इति यस्मादेकतरप्राधान्यमन्यतरगुणीभावव्याप्तमिति वाच्यम्, यथा राजानुगतो विवाहप्रवृत्तो भृत्यो राजनि मुख्येऽपि कदाचित्प्राधान्यमवलम्बते तद्वदविरोधात् । ततश्च विभा-वादिसंवलनात्पूर्वं भावशान्त्यादीनां प्राधान्यम्, तत्संवलने तु रसस्यैवेति तात्पर्यमित्यनवद्यम् ॥ १८४ ॥

एवमसंलक्ष्यक्रमव्यङ्ग्यं निरूप्य क्रमप्राप्तं संलक्ष्यक्रम-व्यङ्ग्यनिरूपणं शिष्यावधानार्थं प्रतिजानीते—

**असंलक्ष्यक्रमव्यङ्ग्यः सप्रपञ्चमितीरितः ।**
**निरूप्यतेऽथ संलक्ष्यक्रमव्यङ्ग्यः प्रपञ्चतः ॥**

स्पष्टम् ॥ १८५ ॥

तमेव लक्षयति—

**उक्तो बुधैः स संलक्ष्यक्रमोऽनुरणनोपमः ॥**

घण्टावादनानन्तरं प्रथमस्वनपृष्ठभावी यः स्वनस्तदनुरणनम् । तदुपमस्तत्सदृशः । वाच्यार्थप्रतीत्यव्यवहितप्रतीतिविषयव्यञ्जक इति यावत् । तादृशः संलक्ष्यक्रमव्यङ्ग्य इति बुधैरुक्तः । अत्रानुरणनोपम इत्यविवक्षितवाच्याद्भेदः, तत्र बाधप्रतिसंधानादिना वाच्यार्थप्रतीतिविच्छेदादत्र च तदभावात् । असंलक्ष्यक्रमस्यापि नानुरणनोपमत्वम्, तत्र विभावादिसंवलिततयैव प्रतीयमानत्वेन क्रमस्यालक्ष्यतयानुरणनौपम्याभावादित्याहुः ॥ १८६ ॥

तमेव विभजते—

**शब्दार्थोभयशक्त्युत्थस्त्रिधायं कथितो ध्वनिः ॥**

शक्तिः सामर्थ्यम् । तच्च प्रत्येकं संबध्यते । ततश्चायं संलक्ष्यक्रमव्यङ्ग्यध्वनिः शब्दशक्त्युद्भवोऽर्थशक्त्युद्भव उभयशक्त्युद्भवश्चेति त्रिविधः ॥ १८७ ॥

तत्राद्यं लक्षयति--

**स्यात्पर्यायासहिष्णुत्वे शब्दशक्त्युद्भवो ध्वनिः॥**

यत्र पर्यायपदान्तरप्रयोगासहिष्णुता तत्र शब्दशक्त्युद्भवः ।

शब्दशक्त्युद्भवं विभजते--

**अलंकृतेर्वस्तुनो वा प्राधान्याच्छब्दशक्तितः ।**
**यत्र व्यक्तिर्भवेत्सोऽयं शब्दशक्त्युद्भवो द्विधा॥**

अलंकारस्य वस्तुनो वा शब्दशक्त्या प्राधान्येन व्यङ्ग्यत्वे शब्दशक्त्युद्भवो द्विधा ॥ १८९ ॥

तत्र शब्दशक्त्यालंकारस्य व्यङ्ग्यतामुदाहरति--

**प्रतापवानिनो भाति भजन्नुदयमुच्चकैः ।**
**इत्यत्र शब्दशक्त्युत्थः स्याद्वाक्येऽलंकृतिध्वनिः**

अत्र प्रतापवानिनो नृपतिरुदयमभिवृद्धिं भजन्भातीत्यभिधया प्राकरणिकार्थः प्रकाश्यते । व्यञ्जनया तु प्रतापवानातपवानिनः सूर्य उदयाचलं भजन्भातीत्यप्राकरणिकः सूर्यविषयोऽर्थः प्रतिपाद्यते । तदनन्तरं च यथा सूर्य उदयाद्रिं भजन्नातपवान्भाति तथा राजाप्यभिवृद्धिं भजन्प्रतापशीलो भातीत्युपमालंकारो व्यज्यते । अत्र प्रतापादिपदैरातपादिवस्तुध्वनेर्वाक्येनालंकारध्वनिः । न च वर्णनीयवृत्तान्ते वाच्ये सूर्यवृत्तान्तप्रतीतिरिहेति वस्तुमात्रध्वनिरेव नालंकार-

ध्वनिरिति वाच्यम्, तथा सति कवेरसंबद्धाभिधायितापातात्। न हि कश्चिदनुन्मत्तो नृपतिरभिवृद्धिं प्राप्य भातीति प्रस्तावे भानुरुदयाद्रिं प्राप्य भातीति ब्रूयात्। तस्मादसंबद्धाभिधायित्वं मा प्रसाङ्क्षीदित्युपमाध्वनौ कवेस्तात्पर्यावश्यंभावात्। न च 'अब्जेन त्वन्मुखं तुल्यं हरिणाहितसक्तिना' इत्यादाविव श्लेषालंकारतयैव नानार्थपदोपादाननैष्फल्यपरिहारान्नोपमाध्वनिरावश्यिक इति वाच्यम्; 'अब्जेन—' इत्यत्रापि पद्मचन्द्रोभयसाम्यप्रतिपादनेन मुखे कान्त्यतिशयस्य व्यङ्ग्यत्वाङ्गीकारावश्यंभावात्, प्राचां मतेऽभिधाया: प्रकरणान्नियन्त्रणेन प्रकृते श्लेषालंकारत्वासंभवाच्चेति दिक्॥ यथा वा— 'उल्लास्य कालकरवालमहाम्बुवाहं देवेन येन जरठोर्जितगर्जितेन। निर्वापित: सकल एव रणे रिपूणां धाराजलैस्त्रिजगति ज्वलित: प्रताप:॥'— अत्र गम्भीरस्थिरक्ष्वेलितेन येन देवेन राज्ञा काल: श्यामलो य: करवाल: खड्गस्तस्य यो महानम्बुवाहोऽम्बु वहतीति व्युत्पत्त्या धाराप्रदेशस्तमुल्लास्य प्रकटय्य धाराजलैर्धाराप्रदेशगलितैर्जलै रिपूणां ज्वलित: प्रतापो निर्वापित: प्रशमित इति प्राकरणिकार्थोऽभिधया प्रकाश्यते। व्यञ्जनया तु श्रवणपरुषविकटस्तनितेन येन पर्जन्यदेवेन कालकर: श्यामलकान्तिरथ च बाल: प्रवृद्धद्युन्मुखो यो महानम्बुवाहस्तमुल्लास्य

धारारूपैर्जलै रिपूणां दावानलानाम् । पर्जन्यनाश्यत्वेन तेषां तद्रिपुत्वम् । प्रतापः संतापः शमित इत्यप्राकरणिकपर्जन्यविषयोऽर्थः प्रतीयते । तदनन्तरं च यथा पर्जन्येन मेघमुद्धाव्य दावानलादितापः परिह्रियते, एवं राज्ञा खड्गमुत्कृष्य शत्रुप्रतापः परिह्रियत इत्युपमालंकारो व्यज्यते । अत्र करवालादिपदैः कान्त्यादिवस्तुध्वनेर्वाक्येनालंकारध्वनिः ॥ यथा वा—
'तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो मधुरलीलः । मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥' तिग्मः शत्रुषु तीक्ष्णो रुचिरः सुहृत्सु हृद्यश्च प्रतापो यस्य स तथा, विधुराणां शत्रूणां निशां मृतिं करोतीति स तथा, मधुरा मनोहारिणी लीला यस्य स तथा, मतिमानयोर्बुद्धिचित्तसमुन्नत्योस्तत्त्वे सारांशे वृत्तिर्वर्तनं यस्य स तथा, प्रतिपदं पदे पदे पक्षस्य बलस्याग्रणीर्निर्वोढेति प्राकरणिकार्थेऽभिधया प्रतीयमाने, पदभङ्गमवलम्ब्य तिग्मरुचिश्चण्डभानुरप्यप्रताप आतपशून्यः, विधुश्चन्द्रोऽप्यनिशाकृदरजनिकरः, मधुर्वसन्तोऽप्यलीलः, मतिमानप्यतत्त्ववृत्तिरपरमार्थे प्रवृत्तिमान्, प्रतिपत्प्रथमा तिथिरप्यपक्षाग्रणीः पक्षस्यादिर्न भवतीति विरोधाभासो व्यज्यते । न चात्र विरोधाभासो वाच्य एवास्त्विति वाच्यम्, ऐकपद्यप्रतिभासदशायां प्राकरणिकार्थ एवाभिधाया नियन्त्रणाद्व्यञ्जनयैव तत्प्रतीतेर्वक्तव्यत्वात् । न चात्राप्रकृतादि-

त्यादिप्रतीतेः प्रकृतोपयोगाभावाद्विरोधप्रतीत्यपेक्षैव नेति वाच्यम्, तथा सति तदनुकूलनानार्थशब्दरचनाप्रयासानुपपत्तेः, तिग्मरुचिरप्ययमप्रताप इति तिग्मरुच्यादिनिरूपणेन तदभेदप्रतीत्यातिशयितप्रतापशालित्वाद्यभिव्यक्तेः फलत्वकल्पनादिति ध्येयम्। अत्रापि वाक्येनालंकारध्वनिः॥ यथा वा— 'अमितः समितः प्राप्तैरुत्कर्षैर्हर्षदः प्रभो। अहितः सहितः साधुयशोभिरसतामसि॥'— अमितोऽनल्पः समितः संग्रामाज्जयेन प्राप्तैरुत्कर्षैर्हर्षदः प्रीतिप्रदः, असतां खलानामहितोऽननुकूलः, साधुयशोभिः सहितोऽस्तीत्यर्थे प्रतीयमाने, मितरहितोऽपि मितसहितः, हितरहितोऽपि हितयुक्त इति विरोधाभासो व्यज्यते। अत्रापि विरोधप्रतिपादकानामपि शब्दानां भावात्तस्य व्यङ्ग्यत्वम्। अत्र न पदभङ्ग इति पूर्वोदाहरणाद्भेद इति ध्येयम्॥ यथा वा— 'निरुपादानसंभारमभित्तावेव तन्वते। जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने॥'— निरुपादानसंभारं स्वव्यतिरिक्तस्य सर्वस्य सृज्यत्वेन सहकारिकारणनिरपेक्षमेव। यद्यप्यविद्यापेक्षणमस्ति, तथापि तस्याः केवलमवच्छेदकत्वमतेनेदमुक्तम्। चित्रं विविधं जगदभित्तौ! स्वव्यतिरिक्ताधिष्ठानान्तराभावादिति भावः। कला सर्वविषयकज्ञानशक्तिश्चन्द्रकला वा। अत्र चित्रकारापेक्षया शूलिनो व्यतिरेकालंकारो व्यज्यते। अत्र

चित्रकलादिशब्दानां श्लिष्टत्वेन पर्यायासहत्वाच्छब्दशक्तिमूलत्वमिति ध्येयम्। ननूपमादीनां व्यङ्ग्यत्वे प्राधान्यावश्यंभावादलंकार्यत्वेन कथमलंकारता प्राधान्याप्राधान्ययोर्विरोधादिति चेत्; सत्यमलंकार्या एवोपमादयः, परं तु पूर्वप्रत्यभिज्ञाबलादलंकारत्वव्यपदेशः। यथा कश्चिद्ब्राह्मणः श्रमणो बौद्धसंन्यासी जातस्तस्मिन्पूर्वप्रत्यभिज्ञया ब्राह्मण इति व्यपदेशस्तद्वदिति ध्येयम्॥ १९०॥

अथ शब्दशक्त्या वस्तुध्वनिमुदाहरति—

**अवनी च वनी च त्वद्विषां न दिशाति स्थितिम्।**
**इत्यत्र शब्दशक्त्युत्थो वाक्ये वस्तुध्वनिर्भवेत्॥**

अत्र भूमिररण्यानी च त्वद्विषां वासं न दिशतीत्यभिधया प्रतीतौ, अवनी च वनी चेत्यनेन विरुद्धयोरपि त्वदनुवर्तनार्थमेककार्यकारित्वं दृश्यत इति वस्तु व्यज्यते। न चात्र विरोधालंकृतिध्वनिरेव कुतो नेति वाच्यम्, अवनीत्ववनीत्वयोः सामानाधिकरण्याभावाद्विरोधस्य तस्मिन्नसत्येवोद्भवात्॥ यथा वा— 'पन्थअ ण एत्थ सत्थरमत्थि मणा पत्थरत्थले गामे। उण्णअपओहरं पेक्खिऊण जइ वससि ता वसमु॥'— पान्थ नात्र संस्तरोऽस्ति मनाक्प्रस्तरस्थले ग्रामे। उन्नतपयो-

धरं प्रेक्ष्य यदि वससि तदा वस ॥ इयं वर्षतौ रात्रौ निद्रार्थं शयनीयार्थिनं युवानं प्रति स्वैरिण्याः कस्याश्चिदुक्तिः । प्रस्तरस्थले पाषाणमयप्रदेशेऽस्मिन्ग्रामे मनाक्कदाचिदपि संस्तरः शयनीयं नास्ति । पाषाण एव सुखेन शयितुं शक्यत्वान्न शयनीयापेक्षेति भावः । उन्नतं वर्षोन्मुखं मेघं दृष्ट्वा यदि वासेच्छा तदा वसेत्यस्मिन्नर्थेऽभिधया प्रतीयमाने, व्यञ्जनयारसिकजनबहुलेऽस्मिन्ग्रामे संभोगयोग्यः कदाचिदपि न लभ्यते, मदीयमुन्नतं कुचं दृष्ट्वा यदि संभोगेच्छा तदाऽऽस्स्वेति वस्तु प्रतिपाद्यते । अत्र पयोधरमिति पदद्वयश्लेषमहिम्नास्य लाभाद्वाक्ये शब्दशक्तिमूलता । यद्वा पयोधरपदस्यैकपद्येऽपि तत्पदगतश्लेषमहिम्नाहकृतेन प्रकृतवाक्येनैवास्यार्थस्य लाभाद्वाक्ये शब्दशक्तिमूलता ॥ यथा वा— 'शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् । यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥'— हे नरेन्द्र, यस्मै त्वं कुप्यसि तं शनिः शनैश्चरोऽशनिर्वज्रं च निहन्ति । त्वत्कोपविषयस्य ग्रहपीडाशनिपातादिर्दैविकी विपत्तिर्भवतीति यावत् । यस्मिन्पुनः प्रसीदसि स उदार औदार्यवाननुदारोऽनुकूलकलत्रश्च भातीत्यभिधया प्रतीयमाने, शनिरशनिश्चेत्यनेन विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति वस्तु व्यज्यते । द्वितीयार्धे तु नोदाहरणम्, तत्र चशब्दस्याप्यर्थत्वे

विरोधस्य वाच्यत्वात् ; समुच्चयार्थत्वेऽपि विरोधालंकारस्यैव व्यङ्ग्यत्वेन वस्तुध्वनेरुदाहरणत्वायोगादिति ध्येयम् ॥

अथार्थशक्तिमूलं विभजते—

**अर्थशक्त्युद्भवोऽन्यो यो लक्ष्यव्यङ्ग्यक्रमस्त्वसौ ।**
**अर्थस्य हि स्वतःसिद्धया कविप्रौढोक्तिकल्पनात्**
**वक्तुः कविनिबद्धस्य प्रौढोक्त्या कल्पनात्तथा ।**
**त्रैविध्यात्त्रिविधस्तत्राप्यर्थस्य त्रिविधस्य च ।**
**वस्त्वलंकारभेदेन द्वैविध्ये षड्विधो भवेत् ।**
**वस्त्वलंकारभेदेन व्यङ्ग्यद्वैविध्यतः पुनः ।**
**षड्विधो द्विविधीभूय भवेद्द्वादशभेदवान् ॥**

अर्थशक्त्युद्भवः संलक्ष्यक्रमव्यङ्ग्योऽर्थस्य स्वत एव बहिः प्रसिद्धत्वेन, बहिरसत्त्वेऽपि कविप्रतिभामात्रकल्पितत्वेन, कविकल्पितवक्तृप्रौढोक्तिकल्पितत्वेन च त्रैविध्यात्प्रथमं त्रिविधस्त्रिप्रकारः स्यात् । त्रिप्रकारस्याप्यर्थस्य प्रत्येकं वस्त्वलंकारात्मकतया द्वैविध्ये पुनः षड्विधः । एवं व्यञ्जकीभूतानामर्थानां षड्विधानामपि वस्त्वलंकारात्मकव्यङ्ग्यद्वैविध्याद्द्वादशविधत्वम् ॥ १९२ ॥

तत्र वस्तुना वस्तुध्वनिमुदाहरति—

**आविदूरे निशायाति किमित्यालि विलम्ब्यते ।**
**इत्यादौ वस्तुना वस्तुध्वनिर्वाक्येऽर्थशक्तिजः ॥**

इयं समीपे समायान्तीमन्यामवेक्ष्य जारेण चिरं रममाणां सखीं प्रति सख्याः कस्याश्चिदुक्तिः । अत्रान्यापीयं ज्ञास्यति, तदुपपत्तिर्मुच्यतामिति वस्तु प्रकृतवाक्यार्थेन वस्तुना व्यज्यत इति वाक्ये वस्तुना वस्तुध्वनिः ॥ यथा वा—'अलससि-रोमणि धुत्ताणमग्गिमो पुत्ति धणसमिद्धिमओ । इअ भणि-एण णअङ्गी पप्फुल्लविलोअणा जाआ ॥'— अलसशिरोम-णिर्धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः । इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥ अत्रालसत्वेन ग्रामान्तरा-गमनं धूर्ताग्रिमत्वेन रतिकलासु वैदग्ध्यं धनसमृद्धिमयत्वेन बहुप्रदानयोग्यत्वं च व्यज्यते । तदुपश्रुत्य यत्प्रफुल्लविलोचन-त्वं तेन वस्तुना ममैतादृशः कामुको लब्ध इति वेश्यापुत्र्या हर्षाख्यं वस्तु व्यज्यते ॥ १९३ ॥

वस्तुनालंकारध्वनिमुदाहरति—

**अपुरश्चरणायासं राममन्त्रः फलत्यसौ ।**
**इत्यादावर्थशक्त्या स्याद्वस्तुनालंकृतिध्वनिः ॥**

अत्र प्रकृतवाक्यार्थेन वस्तुना राममन्त्रस्य मन्त्रान्तरेभ्यो व्यतिरेकालंकारो व्यज्यते ॥ यथा वा—'धन्यासि या

कथयसि प्रियसंगमेऽपि विस्रब्धचाटुकशतानि रतान्तरेषु । नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि ॥'— इयं रात्रिकृतप्रियसंगमवृत्तान्तं कथयन्तीं सखीं प्रति कस्याश्चिदुक्तिः । अत्र या त्वं प्रियस्य प्रेमास्पदस्य न तु भर्तृमात्रस्य संगमे तत्रापि रतान्तरेषु रतिप्रभेदेषु विस्रब्धानि चाटुकशतानि कथयसि, सा त्वं धन्यासि । अहं तु प्रेयसा नीवीं प्रति करे व्यापारिते तत्क्षण एव न किंचिदपि स्मरामि, हे सख्यो यदि स्मरामि तदा शपामि— इति वाक्यार्थेन वस्तुना त्वमधन्या रसपारवश्याभावात्, अहं तु धन्या रसाब्धिमग्नत्वादिति सख्यपेक्षया व्यतिरेकालंकारो व्यज्यते । यद्यप्युपमानोपमेयतया प्रसिद्धयोरेवान्यतरत्र व्यतिरेकप्रतीतौ व्यतिरेकालंकारः, तथापि सखीनायिकयोरप्युपमानोपमेयभावाविरोधादित्युदाहृतमिति ध्येयम् ॥ १९४ ॥

अलंकारेण वस्तुध्वनिमुदाहरति—

**मन्वते वज्रनिर्घोषं त्वन्मौर्वीटङ्कृतिं द्विषः ।**
**इत्यलंकारतो वस्तुध्वनिर्वाक्येऽर्थशक्तितः ॥**

अत्र भ्रान्तिमदलंकारेण प्रकृतवाक्यप्रतिपाद्येन त्वन्मौर्वीटङ्कृतिश्रवणादेव द्विषस्त्रस्ता भवन्तीति वस्तु व्यज्यते ॥ यथा

वा— 'दर्पान्धगन्धगजकुम्भकवाटकूटसंक्रान्तिनिघ्नघनशोणितशोणरोचिः। वीरैर्व्यलोकि युधि रोषकषायकान्तिः कालीकटाक्ष इव यस्य करे कृपाणः॥'— दर्पान्धानां मत्तेभानां कुम्भा एव कवाटान्यरराणि, तेषां कूटेषु समूहेषु या संक्रान्तिरन्तःप्रवेशः, तत्र निघ्नत्वेनायत्तत्वेन घनैः शोणितैररुणा रुचिर्यस्य स तथा, तादृशावस्थायां कोपारुणशोभकालीकटाक्षप्रतिमः कृपाणो यस्य करे वीरैर्युधि व्यलोकीति योजनायां कालीकटाक्ष इवेत्युपमया सकलरिपुक्षयः क्षणात्करिष्यत इति वस्तु व्यज्यते। कालीकटाक्ष इव व्यलोकि व्यतर्कीति योजनायां कालीकटाक्षत्वेन संभावनादुत्प्रेक्षयोक्तं वस्तु व्यज्यते॥ १९५॥

अलंकारेणालंकारध्वनिमुदाहरति—

**मुञ्चन्ति जीवान्निशितैस्त्वद्बाणैः सह वैरिणः।**
**इत्यलंकारतो वाक्ये विज्ञेयोऽलंकृतिध्वनिः॥**

अत्र सहोक्त्यलंकारेण यस्मिन्क्षणे त्वद्बाणा (जीवाम्) मौर्वीं मुञ्चन्ति तदैव द्विषोऽपि (जीवान) प्राणान्मुञ्चन्तीति कार्यकारणयौगपद्यरूपातिशयोक्तिर्व्यज्यते॥ यथा वा— 'गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः। ओष्ठविद्रुमदलान्यमोचयन्निर्दशन्युधि रुषा निजाधरम्॥'— अत्र स्वाधर-

निर्देशनरूपकारणस्य दयितदन्तक्षतव्यथामोचनरूपकार्यस्य च भिन्नदेशत्वकथनाद्विरोधमूलासंगतिः, क्षतव्यथाजनकादधरनिर्देशनात्तदभावरूपकार्यजनननिबन्धनाद्विरोधमूलस्तद्विजातीयकार्यसमर्थस्य तज्जनकत्वलक्षणश्चित्रालंकारो वा । ताभ्यामधरनिर्देशनसमकालमेव शत्रवो व्यापादिता इति कार्यकारणयोस्तुल्यकालताप्रतीतेरतिशयोक्तिः, मम क्षत्याऽप्यन्यस्य क्षतिर्निवर्ततामिति राज्ञो बुद्धिरुत्प्रेक्ष्यत इत्युत्प्रेक्षा च व्यज्यते। यद्यप्यत्रोपमेयस्योपमानतया संभावनरूपमुत्प्रेक्षालक्षणं न संघटते, तथापि 'अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा । अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्बुधाः ॥' इत्युत्प्रेक्षालक्षणयोगादुत्प्रेक्षात्वमविरुद्धमिति ध्येयम् ॥ एषु चतुर्षूदाहरणेषु स्वतःसंभविनोऽर्था व्यञ्जकाः ॥ १९६ ॥

अथ कविकल्पितेष्वर्थेषु वस्तुना वस्तुध्वनिमुदाहरति—

**वैरिस्त्रैणस्मितज्योत्स्नां निर्धुनीते भवन्महः ।**
**इत्यादौ कल्पितार्थेन वाक्ये वस्तुध्वनिर्मतः ॥**

अत्र कविकल्पितेन प्रतापकर्तृकरिपुस्त्रीस्मितनिर्धूननरूपवस्तुना भवता रिपवो व्यापादिता इति वस्तु व्यज्यते ॥ यथा वा— 'कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः श्रुत्वा कीर्त्तिं विबुधरमणीगीयमानां त्वदीयाम् ।

स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्जयन्ति ॥' प्रथमशिखर इति दिङ्मातङ्गानां नेदिष्ठतासूचनार्थम्। वेणुशब्देन वेणुनादो लक्ष्यते। संमूर्च्छना संभेदः। तानकल्पवेणुनादसंभेदोपलक्षिततया गीयमानामिति यावत्। यद्वा वेणुषु संमूर्च्छनाभिर्व्याप्तिभिरुपलक्षिताम्। वेणुप्रतिध्वनितामिति यावत्। कीर्त्ति श्रुत्वा स्रस्तापाङ्गाः पतितकटाक्षाः। श्रवणपुलिन इति पदमत्रापि काकाक्षिन्यायेन संबध्यते। अत एव कीर्त्तौ बिसकाण्डशङ्कावन्तो दिग्गजाः श्रवणपुलिने। श्रवणस्य पुलिनत्वनिरूपणं शङ्कितबिसकाण्डसंबन्धयोग्यताभिप्रायम्। हस्तमावर्जयन्तीति जातिस्वाभाव्याद्बिसगृध्नुता तेषामाविष्कृता। अत्र कविप्रौढोक्तिमात्रसिद्धेन धवलतमकीर्त्तिसंदर्शनजनितहस्तावर्जनरूपेण वस्तुना येषां विनयादिगुणप्रशंसारूपा कीर्त्तिरित्यर्थावगमो नास्ति तेषां तिरश्चामप्येवं बुद्धिजननेन चमत्कारकारिणी कीर्त्तिरिति वस्तु व्यज्यते। यद्यप्यत्र बिसिनीकाण्डसंजातशङ्का इति भ्रान्तिमान्ससंदेहो वालंकारो व्यञ्जकः संभवति, तथापि तदंशव्यतिरेकेणापि वाच्यार्थस्य प्रकृतव्यङ्ग्योपस्कारकत्वमस्त्येवेति वस्तुना वस्तुध्वनेरुदाहरणत्वमविरुद्धम् ॥ १९७ ॥

अथ वस्तुनालंकारध्वनिमुदाहरति—

**जयश्रीस्त्वां भजत्याजौ सेनाधूल्यन्धकारिते।**
**अलंकारध्वनिर्वाक्ये कल्पितेनात्र वस्तुना ॥**

अत्र कविकल्पितेन जयश्रीभजनरूपार्थेन जयश्रियोऽभिसारिण्योपमा व्यज्यते ॥ यथा वा—'केसेसु बलामोडिअ तह तेण रणम्मि जअसिरी गहिआ। जह कन्दराहि विहुरा तस्स दिढं कण्ठअम्मि संठविआ ॥' केशेषु बलात्कृत्य तथा तेन रणे जयश्रीर्गृहीता। यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः ॥ समरे जयश्रीस्तेन राज्ञा केशेषु बलात्कृत्य तथा गृहीता। शत्रुकेशग्रहणमेव जयश्रीकेशग्रहणत्वेनाध्यवसीयते। यथा तस्य राज्ञो विधुराः शत्रवः कन्दराभिर्गुहाभिः कण्ठे दृढं संस्थापिताः संस्थापितप्राणा जाताः। शत्रवः कन्दराः समभिगम्य कण्ठे संस्थापितप्राणा जाता इति यावत्। अत्र स्त्रीलिङ्गेन जयश्रियः कंदराणां च नायिकात्वं प्रतीयते। ततश्च जयश्रीरूपनायिकाकेशग्रहणं राजकृतमवेक्ष्य मदनोद्दीपितमनस इव कन्दराः शत्रूणां कण्ठालिङ्गनं कुर्वन्तीत्युत्प्रेक्षा कविप्रौढोक्तिसिद्धेन जयश्रीकेशग्रहणादिरूपवस्तुना व्यज्यते। तथैकस्मिन्संग्रामे तस्य विजयदर्शनादन्ये तदरयः पलाय्य गुहासु तिष्ठन्तीति काव्यलिङ्गं च व्यज्यते। गुहासु शत्रूणामवस्थानं प्रति तस्यैकत्र

विजयदर्शनं हेतुरिति काव्यलिङ्गता । तथा तद्वैरिणः स्वयमेव पलाय्य न गुहासु निष्ठन्ति, किं तु ततः परिभवं संभाव्य कन्दराभिरेव संस्थापिता इत्यपह्नुतिश्च व्यज्यते ॥

अथालंकारेण वस्तुध्वनिमुदाहरति—

**सख्युः सृजति पुष्पेषोः प्रीत्यै बाणान्बहून्मधुः ।**
**इत्यलंकारतो वाक्ये ध्वनिः कल्पितवस्तुनः ॥**

अत्र कविप्रौढोक्तिसिद्धमदनप्रीतिरूपफलविषयोत्प्रेक्षया जगदखिलं मदनो जेष्यतीति कल्पितस्य वस्तुनो ध्वनिः ॥ यथा वा—'गाढालिङ्गणरहसुज्जअम्मि दइअम्मि लहु समोसरइ । माणंसिणीइ माणो पीलणभीओ व्व हिअआदो ॥' गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति । मनस्विन्या मानः पीडनभीत इव हृदयात् ॥ अत्र कान्ते परिरम्भणोन्मुखे हृदयस्थितस्य स्वस्य पीडनशङ्कयेव मनस्विनीहृदयान्मानो झटिति निःशेषमपसरतीति कविप्रौढोक्तिसिद्धमानगतभीत्युत्प्रेक्षया नायिकायाः पत्यालिङ्गनस्वच्छन्दसंभोगानुमत्यादिरूपं वस्तु व्यज्यते ॥ १९९ ॥

अथालंकारेणालंकारध्वनिमुदाहरति—

**हसन्त्या किल गङ्गां त्वत्कीर्त्या धवलितं जगत् ।**
**इत्यलंकारतो वाक्ये विज्ञेयोऽलंकृतिध्वनिः ॥**

अत्र कविप्रौढोक्तिसिद्धकीर्त्तिगतगङ्गाहासोत्प्रेक्षया गङ्गापेक्षया कीर्त्तेर्जगन्मात्रधवलकत्वरूपो व्यतिरेको व्यज्यते ॥ यथा वा—'जा थेरं व हसन्ती कइवअणम्बुरुहबद्धविणिवेसा । दंसेइ भुवणमण्डलमण्णं विअ जअइ सा वाणी ॥'—या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा । दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी ॥ अत्र स्थविरं ब्रह्माणं हसन्तीवेति कविप्रौढोक्तिसिद्धवाणीगतहासोत्प्रेक्षया ब्रह्मापेक्षया वाण्या अपङ्कजासनस्थत्वरूपो नवनवचमत्कारैककारणशब्दार्थप्रपञ्चस्रष्टृत्वरूपोऽपि व्यतिरेको व्यज्यते । यद्यप्यत्रोत्प्रेक्षां विनापि व्यतिरेकस्फूर्तिः संभवति, तथाप्युत्प्रेक्षाया अपि तद्व्यञ्जकता न विहन्यत इति ध्येयम् ॥ एषूदाहरणेषु कविप्रौढोक्तिसिद्धा एवार्था व्यञ्जकाः ॥२००॥

अथ कविनिबद्धवक्तृप्रौढोक्तिसिद्धानामर्थानां मध्ये वस्तुना वस्तुध्वनिमुदाहरति—

**प्रेमातिमानतो नश्येत्प्रसीद प्रणते प्रिये ।**
**इति वक्तृवचःसिद्धवस्तुना वस्तुनो ध्वनिः ॥**

अत्र कविनिबद्धसखीरूपवक्तृप्रौढोक्तिसिद्धेनातिमानः प्रेमक्षयहेतुरिति वस्तुना त्वयैवमवधीरितश्चेदयं सपत्नीष्वेवाभिरतो भविष्यतीति वस्तु व्यज्यते ॥ यथा वा—'जे लङ्का-

गिरिमेहलासु चलिआ संभोगखिण्णोरईफारुप्फुल्लफणावली-कवलणा पत्ता दरिद्दत्तणं । एण्हिं ते मलआणिला विरहि-णीणीसाससंपक्किणो जाआ झत्ति सिसुत्तणे वि बहुला तारुण्णपुण्णा विअ ॥'— ये लङ्कागिरिमेखलासु चकिताः संभोगखिन्नोरगीस्फारोत्फुल्लफणावलीकवलनात्प्राप्ता दरिद्र-त्वम् । इदानीं ते मलयानिला विरहिणीनिःश्वाससंपर्किणो जाता झटिति शिशुत्वेऽपि बहुलास्तारुण्यपूर्णा इव ॥ इदं सट्टके (कर्पूरमञ्जरीनाम्नि) विचक्षणावाक्यम् । ये लङ्का-गिरेर्लङ्काधारभूतशैलस्य त्रिकूटस्य नितम्बादुत्पन्नाः सुरत-श्रान्तभुजगीपृथुलविकस्वरस्फटावलीपानेनाल्पीभूतास्ते मल-यानिला विरहिणीनिःश्वाससंपर्केण शैशवेऽपि संपूर्णयौ-वना इव बहुला जाताः । — इत्यत्र कविनिबद्धवक्तृप्रौढोक्ति-सिद्धेन बहुला जाता इत्यनेन वस्तुना पूर्वमेव स्वबाहुल्यसंपा-दनपर्याप्तविरहिणीनिःश्वासकारिण एत इदानीं बहुलाः सन्तो विरहिणीनां किं किं न करिष्यन्तीति वस्तु व्यज्यते । न च तारुण्यपूर्णा इवेत्युत्प्रेक्षात्र व्यञ्जिका, तस्याः प्रकृतव्य-ङ्ग्यप्रतीतावनुपयोगात् । निःश्वाससंपर्कस्य हेतुत्वप्रतिपाद-कविभक्तिं विनैव बाहुल्यहेतुत्वप्रतीतेः काव्यलिङ्गमिह व्यक्त-मिति तदेव व्यञ्जकमित्यपि न युक्तम्, तदप्रतीतावपि व्यङ्ग्यप्रतीतेरविकलत्वादित्याहुः ॥ २०१ ॥

अथ कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुनालंकारध्वनिमुदाहरति—

**मीलिते स्मरतापेन शठ तस्या दृगम्बुजे ।**
**इति वक्तृवचःसिद्धवस्तुनालंकृतिध्वनिः ॥**

कविकल्पितदूतीरूपवक्तृप्रौढोक्तिसिद्धेन दृगम्बुजमीलनरूपवस्तुना स्मरतापस्य सूर्यतापाद्व्यतिरेको व्यज्यते ॥ यथा वा—

'सहि विरइऊण माणस्स मज्झ धीरत्तणेण ओआसं । पिअदंसणमहुवीहलखणम्मि सहसत्ति तेण ओसरिअं ॥ —सखि विरचय्य मानस्य मम धैर्येणावकाशम् । प्रियदर्शनमहविह्वलक्षणे सहसेति तेनापसृतम् ॥ हे सखि, मानस्यावकाशं कथंचिद्धैर्येण विरचय्य स्थिताया इति शेषः । मम प्रियदर्शनोत्सवविवशक्षणे तेन मानेन सहसेत्यनुभूतप्रकारेणापसृतं गतम् । —इत्यत्र सखीं प्रति नायिकावाक्ये कविनिबद्धवक्तृकल्पितेन मानपलायनरूपवस्तुना प्रियानुनयरूपं कारणं विनापि मानपलायनरूपकार्योत्पत्तिप्रतीतेर्विभावनालंकारो व्यज्यते । तथा प्रियदर्शनसौभाग्यबलं धैर्येणापि सोढुं न शक्यत इत्युत्प्रेक्षा च व्यज्यते ॥ २०२ ॥

अथ कविनिबद्धवक्तृप्रौढोक्तिसिद्धालंकारेण वस्तुध्वनिमुदाहरति—

**नाहं दूती क्षणं चास्या न विषह्यः स्मरज्वरः।**
**इति वक्तृवचःसिद्धालंकृत्या वस्तुनो ध्वनिः ॥**

अत्र कविनिबद्धदूतीरूपवक्तृप्रौढोक्तिसिद्धेन नाहं दूतीत्याक्षेपालंकारेण दूत्याः सत्यवाचित्वम्, तेन च क्षणमपि विलम्बस्यायं नावसर इति वस्तु व्यज्यते ॥ यथा वा— 'ओल्लोल्लकरअरअणक्खएहि तुह लोअणेसु मह दिण्णो। रत्तंसुअप्पसाओ कोवेण पुणो इमे ण अक्कमिआ — आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तः। रक्तांशुकप्रसादः कोपेन पुनरिमे नाक्रान्ते। तव सपत्नीकृतानि यान्यार्द्रार्द्राण्यभिनवानि नखदन्तक्षतानि, तैर्मम लोचनयो रक्तोऽरुणोंशुकः प्रभैव रक्तपटः, तद्रूपः प्रसादो दत्तः। तत्परिधानवशादेवानयोरारुण्यं न पुनः कोपवशात्।— इति नायिकाया उत्तरेण किमिति कोपेनारुणे लोचने वहसीति नायकप्रश्नस्योन्नयनादुत्तरालंकारः। तेनालंकारेण कोपेन नाक्रान्ते इत्यपह्नुतिसहितेन कविनिबद्धवक्तृवचःसिद्धेन न केवलं त्वं शाठ्यमाचरितवानपि त्वार्द्राणि नखक्षतानि च न गोपयसीति वस्तु व्यज्यते। २०१॥

अथ कविनिबद्धवक्तृवचःसिद्धालंकारेणालंकारध्वनिमुदाहरति—

**प्रवातकदलीवास्ते तमालं वीक्ष्य सा हरे ।**
**इति वक्तृवचःसिद्धालंकृत्यालंकृतिध्वनिः ॥**

अत्र कविनिबद्धदूतीरूपवक्तृवचःसिद्धेन प्रवातकदलीवेत्युपमानेन तस्याः कम्परूपसात्त्विकभावप्रतीतिजननद्वारा तमाले भवद्भ्रान्तिर्जायत इति भ्रान्तिमदलंकारो व्यज्यते ॥ यथा वा— 'महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती । दिअहं अणण्णकम्मा अङ्गं तणुअं वि तणुएइ ॥'— महिलासहस्रभरिते तव हृदये सुभग सा-मान्ती । दिवसमनन्यकर्माङ्गं तन्वपि तनयति । महिलासहस्रभरितत्वात्तव हृदयस्य तत्रावकाशं सा न लभते, ततः स्वतः कृशमप्यङ्गमनन्यव्यापारा सती सर्वस्मिन्नपि दिवसे तनूकरोति । —इत्यत्र महिलासहस्रभरितत्वस्यावकाशाभावे तस्य च तनूकरणे पञ्चम्यन्तादिपदं विनापि हेतुत्वप्रतीतेः काव्यलिङ्गमलंकारः । तेन च कविनिबद्धदूतीरूपवक्तृवचःसिद्धेन शरीरतनूकरणरूपे कारणे पूर्णेऽप्यवकाशलाभरूपकार्याभावाद्विशेषोक्तिर्व्यज्यते । एवमर्थशक्त्युद्भवव्यञ्जनाया द्वादशापि भेदा उदाहृताः । २०४ ॥

अथ शब्दार्थोभयशक्तिजं विवृणोति—

**भवेदेकविधस्तत्र शब्दार्थोभयशक्तिजः ।**

**मनोहृद्द्विजराजोऽयं भाति सर्वज्ञशेखरः ॥**

शब्दार्थोभयसामर्थ्यसमुत्थो यस्तृतीयोऽभिधामूलध्वनिप्रभेद उक्तः, स पुनरेकविध एव। यथा सर्वज्ञस्येश्वरस्य शेखरीभूतो मनोहारी द्विजराजश्चन्द्रो भातीत्यभिधया प्रतिपाद्यमाने, सर्वविद्प्रणीर्ब्राह्मणोत्तमो भातीति सर्वज्ञादिपदैर्व्यञ्जनया प्रतीयते। वाक्येन ब्राह्मणोत्तमौपम्यं चन्द्रे व्यज्यते। तत्र द्विजराजसर्वज्ञपदयोः पर्यायासहत्वाच्छब्दशक्तिमूलत्वम्, मनोहृच्छेखरपदयोः पर्यायसहत्वादर्थशक्तिमूलत्वं चेत्युभयशक्तिमूलता ॥ यथा वा—'अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा। तारकातरला श्यामा सानन्दं न करोति किम् ॥'—तन्द्रा जाड्यम्। तदभावेनोज्ज्वलत्वं लक्ष्यते। उज्ज्वलचन्द्रभूषणा समुद्दीपितमदना। रात्र्या उद्दीपनविभावत्वान्मन्मथोद्दीपकत्वम्। तारकाभिर्नक्षत्रैस्तरला सा श्यामा रात्रिरानन्दं न करोति किमित्यभिधया प्रतिपाद्यते। व्यञ्जनया तूज्ज्वलचन्द्राख्यशिरोभूषणभूषिता, आलम्बनविभावतया समुद्दीपितमन्मथा, तारकया कनीनिकया तरला श्यामा यौवनमध्यस्था सानन्दं न करोति किमिति चन्द्रादिपदैः शिरोभूषणविशेषादयः प्रतिपाद्यन्ते। वाक्येन कामिन्यौपम्यं रात्रौ प्रतिपाद्यते। अत्र चन्द्रादिपदानां श्लिष्टतया शब्दश-

क्तिमूलता, समुद्दीपितादिपदानां पर्यायसहिष्णुत्वादर्थशक्तिमूलता चेत्युभयशक्तिमूलत्वम् । यद्यप्युभयशक्तिमूलेऽपि व्यङ्ग्यानां वस्त्वलंकारादिभेदेन व्यञ्जकानामर्थानां स्वतःसिद्धत्वादिभेदेन बहवो भेदाः संभवन्ति, तथापि शब्दार्थोभयशक्तिमूलत्वोपाधिनैकीकृत्यैकविध इत्युक्तमित्याहुः ॥ २०५ ॥

निगमयति—

**अष्टादश प्रभेदाश्च ध्वनेरेवमुदाहृताः ॥**

लक्षणामूलो ह्यविवक्षितवाच्योऽर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्यभेदेन द्विविधः । अभिधामूले तु विवक्षितान्यपरवाच्ये रसादिव्यञ्जकोऽसंलक्ष्यक्रमव्यङ्ग्य एकविध एव । संलक्ष्यक्रमव्यङ्ग्यस्तु शब्दशक्तिमूलो वस्तुध्वनिरलंकारध्वनिश्चेति द्विविधः । अर्थशक्तिमूलस्त्वर्थस्य स्वतःसिद्धत्वेन कविप्रौढोक्तिकल्पितत्वेन कविनिबद्धवक्तृप्रौढोक्तिकल्पितत्वेन च त्रैविध्ये, त्रिविधानां चार्थानां वस्त्वलंकारभेदेन द्वैविध्ये पुनः षड्विधः, एवं व्यञ्जकीभूतानां षड्विधानामप्यर्थानां वस्त्वलंकारात्मकव्यङ्ग्यद्वैविध्याद्द्वादशविधत्वमित्यर्थशक्तिमूलो द्वादशविधः । उभयशक्तिमूलस्त्वेकविधः ।—इत्यष्टादश ध्वनिप्रभेदा एवमुक्तरीत्योदाहृताः ॥ २०६ ॥

नन्वसंलक्ष्यक्रमव्यङ्ग्यस्य रसादिव्यङ्ग्यभेदाद्बहवो

भेदाः संभवेयुः, अतः कथमष्टादशेत्युक्तमित्यत आह—

**व्यङ्ग्यानां हि रसादीनां यद्यप्यानन्त्यमिष्यते।**
**तथाप्यलक्ष्यक्रमतोपाध्यैक्यादेकतोदिता॥**

रसो हि शृङ्गारादिभेदेन नवविधः। तत्रापि संभोगविप्रलम्भभेदेन शृङ्गारद्वैविध्यम्। तत्र संभोगस्यैव परस्परदर्शनालिङ्गनचुम्बनकुसुमावचयजलकेलिसूर्यास्तमयचन्द्रोदयर्तुवर्णनादयो बहवो भेदाः। विप्रलम्भश्च पञ्चविध उक्तः। तत्राप्यभिलाषादयो भेदा उक्ताः। तयोरपि विभावानुभावव्यभिचारिभेदाः। तत्रापि नायिकानायकयोरुत्तममध्यमाधमप्रभेदाः। तत्रापि देशकालावस्थाभेदाः। इत्येकस्यैव रसस्यानन्त्यम्। का गणना त्वन्येषामपि संकलन इति। यद्यपि व्यङ्ग्यभेदादनेकभेदाः संभवन्ति, तथापि तेषां परिगणयितुमशक्यत्वादसंलक्ष्यक्रमव्यङ्ग्यत्वोपाधिनैकीकृत्यैकविधो रसादिध्वनिरिति गण्यते॥ २०७॥

अथोभयशक्तिसमुत्थो वाक्य एव भवति, पदे शक्तिद्वयस्यापि तुलाधृतवदवस्थानासंभवात्; अन्ये सप्तदशापि भेदा वाक्य इव पदेऽपि संभवन्तीत्याह—

**वाक्य एव भवेदेष शब्दार्थोभयशक्तिजः।**
**भेदाः सप्तदशान्ये ये वाक्यवत्ते पदेऽपि च॥**

यद्यप्युभयशक्तिमूलः कालिदासादिप्रबन्धेष्वपि संभवतीति वाक्य एवेत्ययुक्तम्, तथाप्यतिशयितत्वाभावेन ध्वनित्वाभावादिति भावः। न च कथमेकदेशभूतपदविषयो ध्वनिर्महावाक्योपयोगी स्यादिति वाच्यम्, कर्णाद्येकावयवस्थिततोटङ्कादिमात्रेण कामिन्या भूषितत्ववत्पदविषयेण व्यङ्ग्येनापि वाक्यस्य चारुत्वोपपत्तेः॥ २०८॥

तत्र प्रथमं लक्षणामूलध्वनौ पदेऽर्थान्तरसंक्रमितवाच्यमुदाहरति—

**यस्मिञ्जीवति जीवन्ति बहवः स तु जीवति।**
**अर्थान्तरे संक्रमितवाच्यतेहावगम्यताम्॥**

अत्र जीवतीति पदं स्वोदरपूरणैकपरजीवनवैलक्षण्ये संक्रमितवाच्यम्। धन्यत्वप्रतीतिश्च फलम्॥ यथा वा—'यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा। अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति॥'— अत्र रूपभेदं विना सामानाधिकरण्यायोगाद्द्वितीयमित्रादिपदान्यर्थान्तरसंक्रमितानि। तत्र द्वितीयमित्रपदं विस्रब्धत्वसंक्रमितवाच्यम्। द्वितीयशत्रुपदं च सर्वथानाश्वस्तत्वपरम्। द्वितीयानुकम्प्यपदं सर्वथा निरपराधत्वपरम्। सहृदयत्वनिरस्यत्वसंपत्तिम-

स्वप्रतीतयश्च यथाक्रमं प्रयोजनानि । मित्रादिशब्दाः प्रत्येकमुदाहरणम्, प्रतिस्वं वाक्यपरिसमाप्तेः । अतो न पदप्रकाश्योदाहरणत्वविरोधो वाक्यत्रयेऽपि । राज्ञो महापुरुषत्वं व्यङ्ग्यम् । चतुर्थपादवाक्यद्वयेन स्वन्यवैलक्ष्येण धन्यता व्यङ्ग्येत्याहुः ॥ १०९ ॥

अथात्यन्ततिरस्कृतवाच्यं पदगतमुदाहरति—

**धवलिम्ना विलिम्पन्ति यशांसि तव दिक्तटान् ।**
**इत्यादिषु पदे वाच्यं स्यादत्यन्ततिरस्कृतम् ॥**

अत्र विलेपनस्य मूर्तद्रव्यसाधनकत्वेन धवलिमसाधनकत्वासंभवाद्विलिम्पन्तीति पदमत्यन्ततिरस्कृतवाच्यं सत्संबन्धमात्रं लक्षयति । यशसामितरयशोवैलक्षण्येन व्यापनं प्रयोजनम् ॥ यथा वा— 'खलववहारा दीसन्ति दारुणा जइ वि तह वि धीराणं । हिअअवअस्सबहुमआ ण हु ववसाआ विमुज्झन्ति ॥'— खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम् । हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति ॥ धीरेषु कस्मिंश्चित्कार्ये प्रवर्तमानेषु तत्प्रवृत्तिदूषणपराः खलव्यवहारा यद्यपि भवन्ति, तथापि हृदयमेव वयस्यः सुहृत्, तेन बहुमताः सम्यगालोच्य निर्धारितास्तेषां प्रवृत्तयो न विमुह्यन्ति न मध्ये प्रतिहता भवन्ति । —

इत्यत्र चेतनधर्मस्य मोहस्य व्यवसायेष्वसंभवादत्यन्ततिरस्कृतवाच्यतया विमुह्यन्तीति पदं प्रतिहर्ति लक्षयति । सर्वथा व्यवसितकार्यनिर्वहणं व्यङ्ग्यम् ॥ २१० ॥

एवं लक्षणामूलौ पदप्रकाश्यतयोदाहृत्याभिधामूलेष्वसंलक्ष्यक्रमव्यङ्ग्यं पदगतमुदाहरति—

**संनिधत्ते सदा चित्ते तद्वक्त्रं तरुणीमणेः ।**
**असंलक्ष्यक्रमव्यङ्ग्यध्वनिरत्र पदे भवेत् ॥**

अत्र तदिति सर्वनामपदेनानुभवैकगोचरा विशेषाः प्रकाश्यन्ते । तेन च लोकोत्तरचमत्कारकारिता व्यज्यते । तथा च विप्रलम्भः प्राधान्येन तत्पदेन व्यज्यते ॥ यथा वा— 'लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः । तदा सुधास्पदमभूदधुना तु ज्वरो महान् ॥' तदा तत्संनिधौ सुखहेतुरभूत् । अधुना तद्विरहे ज्वरः साध्यवसानलक्षणया संतापहेतुरित्यत्र तदादिसर्वनामपदैः पूर्वोक्तरीत्या प्राधान्येन विप्रलम्भो व्यज्यते । यदि च सर्वनामपदानां बुद्धिस्थवाचकतैवेति न व्यञ्जकत्वमिति मतम्, तदान्यदुदाह्रियते— 'मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते मानं धत्स्व धृतिं बधान ऋजुतां दूरीकुरु प्रेयसि । सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना नीचैः शंस हृदि-

स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥'— हे मुग्धे स्वहितसाधनज्ञानशून्ये, मुग्धतयैव स्वेष्टसाधनज्ञानशून्यतयैव सर्वमायुर्नेतुं किमुद्युक्तासि! इदं न युक्तम्। मानं धत्स्व। कथं मानधारणमित्याकाङ्क्षायामाह— प्रेयसि प्रिये ऋजुतामार्जवं दूरीकुरु। प्रेयसि परमप्रेमास्पदे कथमनार्जवं कर्तुं शक्यमित्यत उक्तं धृतिं बधानेति। एवं सख्योपदिष्टा भीतानना भीत्यभिव्यञ्जकहस्तापिधानादिचेष्टाश्रयानना नित्यं हृदयसंनिहितः प्रियः श्रोष्यति, तन्नीचैर्मन्दं शंसेति सखीं प्रत्यवदत्। —इत्यत्र भीताननेत्यनेन नीचैःशंसनस्य युक्तता व्यज्यते। न च युक्ततायाः वस्तुरूपत्वात्तद्व्यञ्जनेऽपि रसाभिव्यञ्जकत्वाभावेनासंलक्ष्यक्रमव्यङ्ग्योदाहरणत्वमयुक्तमिति वाच्यम्, तदानीमन्यहेतुकभयस्याभावाद्विप्रलम्भशृङ्गारस्य प्रेयसि रागातिशयस्य चानुरणनन्यायेन व्यज्यमानत्वान्न दोष इति ध्येयम्॥ 'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी। लीलाकमलपत्राणि गणयामास पार्वती॥'— अत्राधोमुखीति पदेन लज्जाख्यभावो व्यज्यते। एवमन्येषां भावादीनां रसाभासादीनां च पदव्यङ्ग्यत्वमुदाहार्यम्। रसाभासादयो हि वाक्यप्रकाश्या अपि रसापेक्षया निकृष्टचमत्कारा इति पदप्रकाश्यानां तु तेषां निकृष्टतमचमत्कारकारितैवेति पृथङ्नोदाहरणमाहृतमस्माभिरिति ध्येयम्॥

अथ संलक्ष्यक्रमव्यङ्ग्यभेदेषु शब्दशक्त्या पदेऽलंकारध्वनिमुदाहरति—

**चित्ते स्फुरतु तद्रूपं हरेर्दैत्याद्विपद्विषः ।**

**इत्यादौ शब्दशक्त्युत्थः स्यात्पदेऽलंकृतिध्वनिः**

अत्र हरिपदेन व्यञ्जनया सिंहप्रतिपादनद्वारा भगवतस्तदौपम्यं व्यज्यते ॥ यथा वा— 'रुधिरविसरप्रसाधितकरालकरवालरुचिरभुजपरिघः । झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभाति नृप भीमः ॥'— हे नृप, रक्तप्रसरालंकृतभीषणखड्गमनोज्ञबाहुपरिघातनः सद्यो भ्रूक्षेपसंजातविटङ्कफालफलकः । भवानिति शेषः । भीमो भयंकरो विभाति । —इत्यत्र भीमपदेन नृपस्य भीमसेनौपम्यं व्यज्यते । 'विशेषणं विशेष्येण बहुलम्' इति विशेषणस्यापि पश्चान्निर्देशो नानुपपन्न इति नृपभीम इत्येकमेव पदम्, तथा च भवानिति नाध्याहर्तव्यम्; एकपद्ये च न रूपकम्; तथा सत्यलंकारेणैवालंकारध्वनिप्रसक्त्या शब्दशक्त्यालंकारध्वनित्वविरोधात् । नाप्युपमितसमासः, उपमाया व्यङ्ग्यत्वानापत्तेः । —इत्यप्याहुः ॥ ११२ ॥

शब्दशक्त्या पदे वस्तुध्वनिमुदाहरति—

**समरे त्वद्भुजाशौर्यं पश्यन्त्यनिमिषा द्विषः ।**
**इत्यत्र शब्दशक्त्युत्थः पदे वस्तुध्वनिर्भवेत् ॥**

अत्र निमेषरहितवाचकेनानिमिषपदेन त्वद्विषो देवत्वं प्राप्ता इति वस्तु व्यज्यते ॥ यथा वा—'भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः । कस्य नानन्दनिस्यन्दं विदधाति सदागमः ॥'—भुक्तिं सुरतोपभोगमनन्तरं मुक्तिं च करोतीति तथा, एकान्त उपह्वरे यत्समादेशनमाह्वानं तत्प्रवणः, सतः प्रियस्यागमः कस्य स्त्रीजनस्यानन्दातिशयं न तनोति ।—इति संकेतदायिनं कामुकं काचिन्मुख्यया वृत्त्या स्तौति, तस्यैव प्रकृतत्वात् । तत्र च भुक्तिमैहिकभोगं मुक्तिमपवर्गं च कुर्वन्, एकान्तसमादेशने निर्विचित्सोपदेशने प्रवणः, सन्नागमो वेद इति सदागमपदेन वेदो व्यज्यते । समीपस्थवस्त्वनार्थं तत्रापि तात्पर्यादित्येके । केचित्त्वप्रस्तुतप्रशंसया मुख्यया वृत्त्या वेद एवात्र स्तूयते, संकेतदायिनः स्तुतिस्तु व्यञ्जनयेत्याहुः ॥ २१३ ॥

अथार्थशक्तिमूलध्वनिषु स्वतःसंभविपदार्थप्रयुक्तभेदेषु चतुर्षु पदे वस्तुना वस्तुध्वनिमुदाहरति—

**अद्य खड्गमसुच्छेदात्सफलस्तद्द्विषां वने ।**
**पदे स्यादर्थशक्त्यात्र वस्तुना वस्तुनो ध्वनिः ॥**

अत्र प्रकृतवाक्यार्थेन वस्तुना तव शत्रूणां पूर्वं समरे खड्गो निष्फलोऽभूदिति वस्त्वद्येति पदेन व्यज्यते ॥ यथा वा—
'सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतम् । आश्चर्यं तव सौकुमार्यमभितः क्लान्तासि येनाधुना नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति तेनासितुम् ।'—सायं मज्जनमुपासितमादरेण शीलितम्, चन्दनेन च शरीरं सम्यगालिप्तम्, भानुमानप्यस्ताद्रिशिखरं गतवान्, अत्रागमनं च विस्रब्धं मन्दम्, अथाप्यभितः क्लान्तासि यतस्ते नयनयुगं मीलनव्यतिकररहितमासितुं स्थातुं न शक्नोति, अहो तव सौकुमार्यम्! —इत्यत्र सायमित्यादिभिस्त्रिभिर्विशेषणैः क्लमस्य घर्मातिशयप्रयुक्तत्वशङ्का निवार्यते । विस्रब्धमित्यनेन सत्वरागमनप्रयुक्तत्वशङ्का च निरस्यते । एवं क्लमहेत्वभावेऽपि क्लान्तासीत्यहेतुकक्लमरूपेण वस्तुना स्वतःसंभावनाद्यैव परपुरुषमुपभुज्य स्नातास्यनुलिप्तासि चेति वस्त्वधुनापदेन प्राधान्येन व्यज्यते । यद्यपीयं सखीं प्रति कस्याश्चिदुक्तिरिति कविनिबद्धवक्तृवचःसिद्धार्थमूलकध्वनिप्रस्ताव एवेदमुदाहर्तुमुचितम्, तथापि वस्तुना वस्तुध्वनित्वमात्रं पुरस्कृत्येदमुदाहृतमिति ध्येयम् ॥ २१४ ।

अथात्रैव वस्तुनालंकारध्वनिमुदाहरति—

**सदा त्वदर्थिनामाशां पूरयस्यवनीपते ।**
**पदे स्यादर्थशक्त्यात्र वस्तुनालंकृतिध्वनिः ॥**

अत्र प्रस्तुतवाक्यार्थरूपेण वस्तुना राज्ञो दाने मेघाद्व्यतिरेकः सदेति पदेन प्राधान्येन ध्वन्यते ॥ यथा वा— 'तदप्राप्तिमहादुःखविलीनाशेषपातका । तच्चिन्ताविमलाह्लादक्षीणपुण्यचया सती । चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् । निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ॥'— तद्विरहदुःखानुभवक्षपितसमस्तपातका, तच्चिन्तानुभवजनितानन्दानुभवक्षीणनिखिलपुण्यनिचया कापि गोपकन्यका निरुच्छ्वासतया भगवन्तं चिन्तयन्ती मुक्तिं गता । शास्त्रेषु हि तत्तत्पापपुण्ययोः स्वस्वजन्यतत्तद्दुःखसुखानुभवाभ्यामेव नाशो न तु पापान्तरपुण्यान्तरजन्यदुःखसुखानुभवाभ्यां दुःखान्तरसुखान्तरजनकयोः पापपुण्ययोरपीति स्थितिः । तथा चात्र तद्विरहदुःखानुभवेनाशेषपातकविलयप्रतिपादनादिदमवगम्यते—तद्विरहदुःखमेव समस्तपातकजन्यदुःखत्वेनाध्यवसीयते, तथा तादृशदुःखजनकपातकविलय एव समस्तपातकविलयत्वेनाध्यवसीयत इति । ततश्चेदमतिशयोक्तिद्वयमशेषपदेन प्राधान्येन द्योत्यते, तदभावे तद्विरहदुःखजनकपातकस्यैव तद्दुःखानुभवेन नाशप्रतीत्यापत्त्यातिशयो-

क्त्यनुन्मेषात्। एवमुत्तरार्धेऽपि तच्चिन्तासुखस्य सकल-पुण्यजन्यसुखत्वेनाध्यवसानात्तथा तच्चिन्तासुखानुभवेन त-ज्जनकपुण्यनाशस्याशेषपुण्यनाशत्वेनाध्यवसानादतिशयोक्ति-द्वयम्। तच्च चयपदेन प्राधान्येन द्योत्यते॥

अथालंकारेण पदे वस्तुध्वनिमुदाहरति—

**शुचादोहि पयः स्वःस्त्रीगोभिस्तेऽरौ तृणादरे।**
**इत्यलंकृतितो वस्तुध्वनिरूह्यः पदे बुधैः॥**

अत्र तृणचर्वणरूपं कारणं शत्रौ, पयोदोहनरूपं कार्यमप्सरो-नेत्रेष्वित्यलंकारेण तृणचर्वणकृतं रिपुं दयया त्वं विसृजसीति वस्तु शुचेति पदेन प्राधान्येन व्यज्यते॥ यथा वा— 'क्षण-दासावक्षणदा वनमवनं व्यसनमव्यसनम्। बत वीर तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम्॥'—क्षणदा रात्रिरक्षणदा रात्रिर्न भवतीति विरोधः। उत्सवदायिनी न भवतीति तत्परिहारः। वनं काननमवनं वनं न भवतीति विरोधः। रक्षणमिति तत्परिहारः। व्यसनं व्यवसितिर-व्यसनं व्यसनं न भवतीति विरोधः। अवीनामूर्णायूनामसनं कालनमिति तत्परिहारः। पशुपालनमेव जीवनमिति यावत्। अत्र क्षणदादिशब्दशक्तिमूलो यो विरोधालंकारस्तत्समर्थ-

केन त्वयि पराङ्मुखे सर्वं पराङ्मुखमित्यर्थान्तरन्यासेन विधिरपि त्वामनुवर्तते यतस्त्वयि पराङ्मुखे सर्वं पराङ्मुखं विपरीतस्वभावं जातमिति वस्तु व्यज्यते । तत्र सर्वमिति पदं प्राधान्येन व्यञ्जकम् ११६ ॥

अथालंकारेण पदेऽलंकारध्वनिमुदाहरति—

**दैन्यं सहजमेक्ष्य त्वद्विषि नूनं दरिद्रता ।**
**तमेव श्रयतीत्यात्रलंकृत्यालंकृतिध्वनिः ॥**

अत्र दरिद्रता स्वसहजं दैन्यं तव रिपौ दृष्ट्वा नूनं तमेव स्वयमपि भजतीत्युत्प्रेक्षया तव शत्रावेव दारिद्र्यं नान्यत्रेति परिसंख्यालंकार एवकारेण व्यज्यते ॥ यथा वा—'तुह वल्लहस्स गोसम्मि आसि अहरो मिलानकमलदलं । इअ णववहुआ सोऊण कुणइ वअणं महीसंमुहं ॥'—तव वल्लभस्य विभात आसीदधरो म्लानकमलदलम् । इति नववधूः श्रुत्वा करोति वदनं महीसंमुखम् ॥ महीसंमुखीकरणं लज्जया विनमनम् । अत्राधरो म्लानकमलदलमिति रूपकेण नववधूकर्तृकचुम्बनस्याधरम्लानताहेतुत्वप्रतीतेः काव्यलिङ्गं व्यज्यते । तत्र च म्लानपदं प्राधान्येन व्यञ्जकम् ॥ ११७ ॥

एवं स्वतःसंभविनामर्थानां व्यञ्जकतां पदगतत्वेनोदा-

इत्थं कविप्रौढोक्तिसिद्धार्थशक्तिमूलध्वनिषु वस्तुना वस्तुध्वनिमुदाहरति--

**नानावर्णं जगत्पूर्वं त्वत्कीर्त्तेरवदञ्जनाः ।**
**इत्यादौ कल्पितार्थेन कल्पितार्थध्वनिः पदे ॥**

अत्र त्वत्कीर्त्तेः पूर्वं जगन्नीलपीतादिनानावर्णविशिष्टं जना अवदन्निति कविकल्पितेन वस्तुना सांप्रतं त्वत्कीर्त्या धवलधवलायमानमेकवर्णमेव जगदस्ति इति कल्पितं वस्तु पूर्वमिति पदेन प्राधान्येन व्यज्यते ॥ यथा वा--'रत्तीसु चन्दधवलासु ललिअमप्फालिऊण जो चावं । एक्कच्छत्तं विअ कुणइ भुवणरज्जं विइम्भन्तो ॥'-- रात्रिषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् । एकच्छत्रमिव कुरुते भुवनराज्यं विजृम्भमाणः ॥ यो मदनश्चन्द्रधवलासु निशासु विजृम्भमाणः सन्, ललितमिक्षुमयमिति यावत् । आस्फालनक्रियाविशेषणं वा । चापमास्फाल्य भुवनमेव राज्यमेकच्छत्रमिव, स्वैकवशंवदमिति यावत् । कुरुत इत्यत्र मदनवृत्तान्तेन कविप्रौढोक्तिसिद्धेन वस्तुना ये कामिनो ये च विरक्ता ये च पक्षिमृगादयो ये चाचेतनास्ते सर्वेऽपि रात्रिषु मदनाज्ञां नोल्लङ्घयन्ति, किं तु जागरूकाः सकलामपि रात्रिमुपभोगपरा एवातिवाहयन्तीति वस्तु भुवनराज्यपदेन

प्राधान्येन व्यज्यते, भुवनपदस्य चेतनाचेतनात्मकसकल-प्रपञ्चवाचित्वात् ॥ २१८ ॥

अथ कविप्रौढोक्तिसिद्धेन वस्तुनालंकारध्वनिमुदाहरति—

**मधुः प्रसूनमाध्वीभिः ससर्ज सरितो नवाः ।**
**इत्यादौ तु पदे क्लृप्तवस्तुनालंकृतिध्वनिः ॥**

अत्र कविकल्पितेन वसन्तवृत्तान्तरूपेण वस्तुना माध्वीना-मतिशयोक्तिः सरित इति पदेन प्राधान्येन व्यज्यते ॥ यथा वा—'निशितशरधियार्पयत्यनङ्गो दृशि सुदृशः स्वबलं वयस्यराले । दिशि निपतति यत्र सा च तत्र व्यतिकर-मेत्य समुन्मिषन्त्यवस्थाः ॥' अनङ्गः सुदृशोऽराले वक्रे वयसि, यौवन इति यावत् । दृशि निशितशरबुद्ध्या स्वबलं स्वकीयं विश्वविजयसामर्थ्यमर्पयति । सा च दृक्च यत्र दिशि निपतति तत्र दशावस्था व्यतिकरं संमर्दमेत्य समु-न्मिषन्ति ।—इत्यत्र प्रकृतवाक्यार्थरूपेण कविकल्पितवस्तुना परस्परविरुद्धा अपि दशावस्था युगपद्भवन्तीति विरोधो-ऽतिशयोक्तिर्वा व्यतिकरपदेन प्राधान्येन व्यज्यते ॥२१९॥

अथालंकारेण कविप्रौढोक्तिसिद्धवस्तुध्वनिमुदाहरति—

**स्मरः कुक्कुटकाहल्या निवर्तयति किं रणात् ।**
**द्वन्द्वमप्येत्यलंकृत्या क्लृप्तवस्तुध्वनिः पदे ॥**

अद्य प्रभाते स्मरस्ताम्रचूडच्छद्मकाहलीमुद्घोष्य मिथुनं रणा-न्निवर्तयति किमित्युत्प्रेक्षया स्मरो रात्रिमखिलां द्वन्द्वं संभोगजागरूकमेव करोति स्मेति कविकल्पितं स्मर-वृत्तान्तरूपं वस्त्वद्येति पदेन प्राधान्येन व्यज्यते ॥ यथा वा—'वारिज्जन्तो वि पुणो संदावकअत्थिएण हिअएण । थणभरवअस्सएणं विसुद्धजाई ण चलइ से हारो ॥'—वार्यमाणोऽपि पुनः संतापकदर्थितेन हृदयेन । स्तनभर-वयस्येन विशुद्धजातिर्न चलत्यस्या हारः ॥ संतापकदर्थि-तेन हारेण सह गाढालिङ्गने स्तनयोः पीडा भविष्यतीत्य-नुशयवतेत्युत्प्रेक्षा । स्तनयोः पीडया कुतोऽस्य संताप इत्यत उक्तं स्तनभरवयस्येनेति । स्तनभरसाहित्यमेव तत्सख्यत्वे-नाध्यवसीयते । तादृशेन हृदयेन पुनः पुनर्वार्यमाणोऽप्यस्या हारो विशुद्धजातितया । निर्मलोत्पत्तिमत्तया । स्वाश्रयपरि-त्यागदोषशून्यजातिमत्तया चेति ध्वन्यते । न चलति स्वाश्रयं परित्यज्यान्यत्र न गच्छति । कम्पमान एवास्त इति यावत् । एवं च विपरीतरतावस्थेयमिति बोध्यम् । अत्र च विशुद्धजातित्वलक्षणेन काव्यलिङ्गालंकारेण हारोऽनवरतं कम्पमान एवास्त इति वस्तु न चलतीति पदेन प्राधान्येन व्यज्यते ॥ २२० ॥

अथालंकारेणालंकारध्वनिः पदे यथा—

**जयत्यस्याः कटाक्षेऽद्धा स्वशरान्क्षिपति स्मरः।**
**इत्यादिषु पदे ज्ञेयोऽलंकृत्यालंकृतिध्वनिः ॥**

अस्याः कटाक्षे जयति सति स्मरः स्वशरान्नूनं क्षिपतीति कविकल्पितस्मरशरत्यागोत्प्रेक्षया स्मरशरापेक्षयाद्सीयकटाक्षस्य व्यतिरेको जयतीति पदेन प्राधान्येन व्यज्यते ॥

यथा वा— 'सो मुद्धसामलङ्गो धम्मिल्लो कलिअललिअणिअदेहो । तीए खन्धाहि बलं लहिअ सरो सुरअसंगरे जअइ ॥'—स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः । तस्याः स्कन्धाद्बलं लब्ध्वा स्मरः सुरतसंगरे जयति ॥ मुग्धः सुन्दरः श्यामलाङ्गः कलितमनोहरदेहो धम्मिल्लः स्मरस्तस्याः स्कन्धादंसप्रदेशात्सेनासंनिवेशमूलाच्च बलं लब्ध्वा सुरतसंगरे जयति । —इत्यत्र सुरतरभसेनांसप्रदेशे गलितं धम्मिल्लमवलोक्य रतिविरतिसमयेऽपि पुनरङ्कुरिताभिलाषः कामुकोऽभूदिति तात्पर्यम् । ततश्चात्र धम्मिल्लः स्मर इति रूपकेण सुरतसंगर इति रूपकेण च चिरकालरतिपरिश्रान्तोऽपि कामुको रत्यारम्भ इवाङ्कुरिताभिलाषोऽभूदित्यभिलाषकारणाभावेऽप्यभिलाषप्रतीतेर्विभावनालंकारः स्कन्धपदेन प्राधान्येन व्यज्यते ॥ २२१ ॥

एवं कविप्रौढोक्तिसिद्धानामर्थानां व्यञ्जकत्वमुदाहृत्य

कविनिबद्धवक्तृप्रौढोक्तिसिद्धेष्वर्थेषु पदगतं वस्तुना वस्तुध्वनिमुदाहरति—

**शठाधुना सा तनुते साहसं शशिवीक्षणे ।**
**इति वक्तृवचःसिद्धवस्तुना वस्तुधीः पदे ॥**

अत्र कविनिबद्धदूतीरूपवक्तृवचःसिद्धेन शशिवीक्षणसाहसकरणरूपवस्तुना तस्या निजजीवितनैराश्यरूपं वस्तु साहसमिति पदेन प्राधान्येन व्यज्यते ॥ यथा वा— 'णवपुण्णिमामिअङ्कस्स सुहअ को सि त्ति भणसु मह सच्चं । का सोहग्गसमग्गा पओसरअणि व्व तुह अज्ज ॥'—नवपूर्णिमामृगाङ्कस्य सुभग कोऽसीति भण मम सत्यम् । का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥ अन्यानुरक्तं नायकं प्रति नायिकाया वचनमिदम् । हे सुभग, त्वं नवपर्वचन्द्रस्य । अत्र नवपदं रागाविलत्वद्योतनाय । कोऽसि किं ज्येष्ठः किं वा कनिष्ठोऽसीऽति सत्यं मम भण । पूर्वं मयि तथानुरक्तोऽपीदानीं नानुरक्तोऽसि, अतस्त्वं हरिद्रारागोऽसीति यावत् । सौभाग्यशालिनी का वा तवाद्य प्रदोषरजनीवानुरागकारिणीति यावत् । अत्र कविनिबद्धनायिकारूपवक्तृप्रौढोक्तिसिद्धेन प्रकृतवाक्यार्थरूपेण वस्तुना मयीवान्यस्यामपि क्षणादननुरक्तो भविष्यसीति वस्तु नवपदेन

प्रदोषपदेन च प्राधान्येन द्योत्यते ॥ २२२ ॥

अथात्रैव वस्तुनालंकारध्वनिमुदाहरति—

**न श्रोतास्यशुभं यावत्तावदेव व्रज प्रिय ।**
**इति वक्तृवचःसिद्धवस्तुनालंकृतिध्वनिः ॥**

हे प्रिय, अशुभं स्वमरणवार्त्तां यावन्न श्रोतासि तावदेव गन्तव्यं चेद्गच्छेति प्रकृतवाक्यार्थरूपेण कविनिबद्धनायिकारूपवक्तृवचःसिद्धेनाक्षेपालंकारो व्रजेति पदेन प्राधान्येन व्यज्यते ॥ यथा वा—— 'सहि णवणिहुवणसमरम्मि अङ्कपालीसहीइ णिविडाए । हारो णिवारिओ च्चिअ उच्चेरन्तो तदो कहं रमिअं ॥' —सखि नवनिधुवनसमरेऽङ्कपालीसख्या निबिडया । हारो निवारित एवोच्चरंस्ततः कथं रमितम् ॥ इदं नवोढां रात्रिवृत्तान्तं पृच्छन्त्याः सख्या वचनम् । हे सखि, नवसुरतसमय उच्चरन्नुच्छलन् । निर्भरसुरतप्रतिबन्धक इति यावत् । तादृशो हारो निबिडया दृढया, अङ्कपाल्येवालिङ्गनमेव सखी । निर्भरसुरतसौलभ्योपयोगित्वादङ्कपाल्याः सखीत्वेन निरूपणम् । तया निवारितो विच्छिन्न एव भवति । ततो हारविच्छेदानन्तरं कथं रमितम् ।—इत्यत्र कविनिबद्धसखीरूपवक्तृवचःसिद्धेन प्रकृतवाक्यार्थरूपवस्तुना हारविच्छेदानन्तरं प्रौढाङ्गनाया इव नवोढाया अपि तवारम्भस-

मयसुरताद्विलक्षणमेवावश्यं रतमभूत् । तत्कथं कीदृगिति कथयेति व्यतिरेकालंकारः कथंपदेन प्राधान्येन व्यज्यते ॥

अथात्रैवालंकारेण वस्तुध्वनिमुदाहरति—

**कुमुद्वतीव जाताद्य वीक्ष्येन्दुं त्वद्युता सखी ।**
**इति वक्तृवचःसिद्धालंकृत्या वस्तुनो ध्वनिः ॥**

अत्र त्वया युता सखी चन्द्रं वीक्ष्याद्य कुमुद्वतीव जातेति कविनिबद्धनायिकासखीरूपवक्तृवचःसिद्धेनोपमालंकारेण पूर्वं चन्द्रदर्शनेऽस्या मोहोऽभवदिति वस्त्वद्येति पदेन प्राधान्येन व्यज्यते ॥ यथा वा—'पविसन्ती घरदारं विवलिअवअणा पुलोइऊण पहं । खन्धे घेत्तूण घडं हा हा णट्ठो त्ति रुआसि सहि किं त्ति ॥'—प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम् । स्कन्धे गृहीत्वा घटं हा हा नष्ट इति रोदिषि सखि किमिति ॥ अत्र मार्गावलोकनस्य द्वारप्रवेशसमये स्कन्धे ग्रहणस्य च घटनाशं प्रति हेतुत्वप्रतीतेः, घटनाशस्य वा रोदनं प्रति हेतुत्वप्रतीतेः काव्यलिङ्गमलंकारः । तेन च संकेतनिकेतनं गच्छन्तं दयितं दृष्ट्वा यदि तत्र गन्तुमिच्छसि तदापरं घटं गृहीत्वा गच्छेति वस्तु किमितीति पदेन प्राधान्येन व्यज्यते ॥ यथा वा—'विहलं खणं सहि तुमं

दट्ठूण घडेण तरलतरदिट्ठिं । दारप्फंसमिसेणं अप्पा गरुओ त्ति पाडिअ विभिण्णो ॥'— विह्वलां क्षणं सखि त्वां दृष्ट्वा घटेन तरलतरदृष्टिम् । द्वारस्पर्शमिषेणात्मा गुरुरिति पातयित्वा विभिन्नः ॥ हे सखि, स्वभारेण विह्वलामत एव तरलतरदृष्टिं त्वां दृष्ट्वा घटेनैव स्वात्मा गुरुरिति मत्वा द्वारस्पर्शव्याजेन पातयित्वा विभिन्नो न तु त्वमेव द्वारस्पर्शव्याजेन घटस्य भङ्गं कृतवती । — इत्यत्र नदीकूललतागृहे कृतसंकेतं त्वद्गमनसमये तत्राप्राप्तं गृहप्रवेशसमये तत्र गच्छन्तं कामुकं दृष्ट्वा पुनर्जलाहरणव्याजेन नदीगमनाय द्वारोपघातव्याजेन बुद्धिपूर्वकमेव त्वया घटो भग्न इति मया विदितमेव । तत्किमिति नाश्वासिषि? तत्समीहितसिद्धये पुनर्नदीं प्रयाहि । अहं ते श्वश्रूनिकटे सर्वं समर्थयिष्य इति वस्तु द्वारस्पर्शमिषेणेति कविनिबद्धवक्तृप्रौढोक्तिसिद्धयापह्नुत्या व्यज्यते । तत्र मिषेणेति पदं प्राधान्येन व्यञ्जकम् ॥ २२४ ॥

अथात्रैवालंकारेणालंकारध्वनिमुदाहरति—

**मेरो कैलास किं भूभृत्प्रतापैस्त्वत्समोऽस्म्यहम् ।**
**इति वक्तृवचःसिद्धालंकृत्यालंकृतिध्वनिः ॥**

अत्र 'मेरो' इति कैलासेन संबोधने कृते 'कैलास किम्'

इति मेरोरुक्तिः । भूभृदित्यादि कैलासस्य प्रतिवचनम् । अत्र त्वत्सम इत्युपमया प्रतापेऽतिशयोक्तिर्व्यज्यते । तत्र रजतात्मकत्वाभिप्रायमहमिति पदं प्राधान्येन व्यञ्जकम् ॥

यथा वा— 'जोण्हाइ महुरसेण अ विइण्णतारुण्णऊसुअमणा सा । बुड्ढा वि णवोढ व्व परवहू अहह हरेइ तुह हिअअं ॥' —ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमना: सा । वृद्धापि नवोढेव परवधूरहह हरति तव हृदयम् ॥ ज्योत्स्नया पलितधीतिरोधायिकया दत्ततारुण्या मधुरसेन केवलमुत्सुकमनाः सा वृद्धापि परवधूरित्येव तव हृदयं नवोढेव हरति । —इत्यत्र परवधूस्तव हृदयं हरतीति काव्यलिङ्गेन मामुज्झित्वा वृद्धामप्यभिलषसि, त्वदीयमाचरितं किं वक्ष्यामीति वक्तुमिष्टस्याप्यर्थस्य विशेषाभिधित्सया निषेधरूप आक्षेपालंकारः परवधूपदेन प्राधान्येन व्यज्यते ॥ एवं कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीराश्चत्वारोऽपि भेदाः पदगतत्वेनाप्युदाहृताः । एवं च पूर्वोदाहृता वाक्यप्रकाश्या अष्टादश भेदाः, शब्दार्थोभयशक्त्युद्भवस्तु पदप्रकाश्यो न संभवतीति पदप्रकाश्याः सप्तदश भेदाः, एवमाहत्य पञ्चत्रिंशद्भेदा उदाहृता इति ध्येयम् ॥ २२५ ॥

अथार्थशक्त्युद्भवानां प्रकारान्तरेण कतिचिद्भेदानाह—

प्रबन्धेऽपि द्वादश स्युरर्थशक्त्युद्भवा भिदाः।

वाक्यपदयोरिव प्रबन्धेऽप्यर्थशक्त्युद्भवा द्वादशापि भेदाः संभवन्ति। यथा गृध्रगोमायुसंवादे—'अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसंकुले। कङ्कालबहुले घोरे सर्वप्राणिभयंकरे। न चेह जीवितः कश्चित्कालधर्ममुपागतः। प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥'—एतावानेकः प्रबन्धः। श्मशाने शवं निक्षिप्य बहुकालं रुदतस्तद्बन्धूनुद्दिश्य सूर्येऽस्तमिते स्वस्य तत्र स्थित्यसंभवेन शवभक्षणं न संघटेत, किं तु गोमायोरेव स्यादिति मत्वा सूर्यास्तमयात्प्रागेव शवं विसृज्य भवद्भिर्गन्तव्यमित्यभिप्रायवतो गृध्रस्य वाक्यमिदम्। अत्र गृध्रगोमायुसंकुलत्वादि श्मशानविशेषणं स्थितिनिवर्तने हेतुः। कङ्कालो मांसविशेषः। इह भूलोके। जीवितः प्रत्युज्जीवितः। कालधर्म मरणम्। —अत्र बन्धुषु निवृत्तेषु ममोपभोगाय भवत्वयं शव इति दिवाबलवतो गृध्रस्य गोमायुवञ्चनाभिलाषरूपं वस्तु वस्तुनैव प्रबन्धेन प्रकाश्यते। अथ दिवैव शवं विसृज्य बन्धुभिर्गतं चेत्स्वस्य न भविष्यति, किं तु गृध्रस्यैव भविष्यतीति मत्वा बन्धुस्थितिपर उत्तरः प्रबन्धो गोमायोः—'आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत सांप्रतम्। बहुविघ्नो मुहूर्तोऽयं जीवेदपि

कदाचन। अमुं कनकवर्णाभं बालमप्राप्तयौवनम्। गृध्रवाक्या-त्कथं मूढास्त्यजध्वमविशङ्किताः ॥'— आदित्योऽद्यापि तिष्ठति । ततो नात्रापि भीतिप्रसक्तिः । तन्न गन्तव्यम्। बहुविघ्न इष्टप्राप्तौ यथा विघ्नबाहुल्यं तथानिष्टप्राप्तावपीति दैवाज्ञीवेदपि। कनकवर्णाभमित्याद्यत्यागे हेतुः । गृध्रवाक्यादित्यनेन गृध्रस्तु स्वयं भक्षितुमेवं वदति, नैतद्वाक्ये विश्वासः कार्य इत्याशयः । अत्रापि रात्रौ ममैवोपभोगाय संपत्स्यत इति पुरुषव्यावर्तनपरस्य गोमायोर्गृध्रप्रतारणाभिलाषरूपं वस्तु स्वतः-संभविना वस्तुना प्रबन्धेन द्योत्यते । युगविशेषाणां दिव्यानुभावशालित्वाद्गृध्रगोमायुसंवादः स्वतःसंभवी, न तु कविप्रौढोक्तिमात्रान्निष्पन्न इत्याहुः ॥ अलंकारेण वस्तुध्वनिर्यथा— 'एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च । अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् ॥' इति रघुवंशे सिंहवाक्यानन्तरम् 'क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः । राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥' इति राजवाक्यप्रबन्धे क्षतत्राणाभावस्य राज्यादिकैमर्थक्यहेतुत्वप्रतीतेः काव्यलिङ्गमलंकारः । तेन क्षतसंरक्षणमेव मम मुख्यं प्रयोजनम्, पुत्रादिकं प्रयोजनं त्वानुषङ्गिकमिति वस्तु व्यज्यते । एवमन्येऽप्यूह्याः ॥ वाक्यसमूहः प्रबन्धः । स चावान्तरप्रब-

न्धो महाप्रबन्धश्चेति द्विधा। तत्राद्य इदमुदाहरणम्। अन्त्येऽप्यूह्यम् ॥ २२६ ॥

अथासंलक्ष्यक्रमव्यङ्ग्यस्य प्रबन्धवाक्यपदगतत्ववत्पदैकदेशादिगतत्वेनापि केचन भेदाः संभवन्तीत्याह—

**पदैकदेशरचनावर्णेष्वपि रसादयः।**
**जगत्सु स जयत्येकः कृशासि सखि यत्कृते ॥**

तिङन्तं सुबन्तं च पदम्। तदेकदेशास्तदवयवाः प्रकृतिप्रत्ययादयः। रचना संघटना। वर्णान्यक्षराणि। तेष्वपि रसाः शृङ्गारादयः, आदिशब्दाद्भावादयश्च व्यज्यन्ते। यथा जगत्स्वित्यत्र जगदिति प्रातिपदिकेन क्वचिद्देशविशेषमात्र एवायं न जयति, किं तु सर्वस्मिन्नपि देश इति व्यज्यते। तद्गतेन बहुवचनेन भूलोकमात्रेऽयं न केवलं जयति, रसातलस्वर्गयोरपीति व्यज्यते। तथा जयतीति तिङ्प्रकृत्या तस्य सर्वातिशायित्वम्। एवं जगदादिपदैकदेशैर्विप्रलम्भशृङ्गारसाम्राज्यमभिव्यज्यते ॥ यथा वा तिङन्तप्रकृतेर्व्यञ्जकता—'रइकेलीहिअणिवसणकरजुअलणिरुद्धणअणजुअलस्स। रुद्दस्स तइअणअणं पव्वइपरिचुम्बिअं जअइ ॥'—रतिकेलीहृतनिवसनकरयुगलनिरुद्धनयनयुगलस्य। रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥ रतिकेलीहृतं देवीनिवसनं येन

स तथा, देव्याः करयुगलेन पिहितं नयनयुगलं यस्य स तथा। रतिकेलीहृतनिवसनश्चासौ करयुगलनिरुद्धनयनयुगलश्च तथा, तस्येति विग्रहः। भगवति वसनं हरति सति तदवलोकनेन सलज्जा देवी करद्वयेन तदीयं नयनद्वयं पिधाय यत्तृतीयं नयनं चुम्बनेन मुकुलीचकार, तन्नयनं जयतीतरनयनापेक्षयोत्कर्षेण वर्तते।—इत्यत्र करतलपिहितनयनद्वयापेक्षया चुम्बनपिहितस्योत्कर्षपरतया जयतीति तिङ्प्रकृत्या चुम्बितस्य नयनस्य लोकातिशायित्वं व्यज्यते। तेन च संभोगशृङ्गाररसस्य साम्राज्यं व्यज्यते। अत्र चोत्तमदेवताविषयसंभोगवर्णनस्यानौचित्यादाभासत्वमित्यप्याहुः॥ सुबन्तप्रकृत्या यथा वा—'प्रेयान्सायमपाकृतः सशपथं पादानतः कान्तया द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्यात्मना। तावत्प्रत्युत पाणिसंपुटलसन्नीवीनिबन्धं धृतो धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः॥' —प्रेयान्परमप्रेमविषयः, न भर्तृमात्रम्। सायमुद्दीपनसमये पादानतोऽपि सशपथम्, न केवलं वाचा, अपाकृतः सन्वासगृहाद्द्वित्राण्येव पदानि यावन्न याति तावदेव न केवलं प्रसन्ना, प्रत्युत नीवीविश्लथनभिया करतलधृतनीवीबन्धं यथा भवति तथा धावित्वा, न तु मन्दं गत्वा, सप्रणामम्, न त्वनुनयमात्रेण, आत्मना स्वयमेव, न तु दूतीमुखेन, धृतः पुनः

पदान्तरचलनमपि यथा न करोति तथा धृतः, न तु केव- लं वारितः ।—इत्यत्र पदानीति प्रकृत्या कालाक्षमत्वलक्षण- मौत्सुक्यं व्यज्यते । न हि तादृशमौत्सुक्यं द्वित्राणि द्वाराणीति द्वारपदोपादाने व्यज्यत इति ध्येयम् ॥ तिङ्सुपोः प्रत्यययोर्यथा —'पांथे पथि शुकचञ्चूचारुरागाङ्कुराणां दिशि दिशि पव- मानो वीरुधां लासकश्च । नरि नरि किरति द्राक्सायका- न्पुष्पधन्वा पुरि पुरि च निवृत्ता मानिनीमानचर्चा ॥'— दिशि दिशि पथि पथि च पवमानो मारुतः शुकमुखव- च्चारू रागो येषां ते तथा, तादृशा अङ्कुरा उद्गमोन्मुखाः पल्लवा यासां तास्तथा, तादृशीनां वीरुधां लतानां लासको नर्तकः, चालयितेति यावत् । पुष्पधन्वा नरि नरि पुंसि पुंसि द्राग्झटिति सायकान्किरति क्षिपति । पुरि पुरि नगरे नगरे मानिनीनां मानकथा च निवृत्ता । —इत्यत्र किर- तीति लटा किरणव्यापाररूपधात्वर्थस्य साध्यमानता ग- म्यते । तथा निवृत्तेत्यत्र क्तप्रत्ययेन किरणव्यापारकार्यभू- तमाननिवृत्तेश्चिरकालसिद्धता व्यज्यते । यद्यप्यत्राख्यातस- मभिव्याहाराद्धात्वर्थस्य साध्यमानता व्युत्पत्तिबलादेव सिध्यतीति न व्यञ्जनापेक्षा, तथाप्याख्यातस्य व्यापारे यत्ने वा शक्तिर्लटोऽपि वर्तमानत्व एवेत्युभयथापि साध्य- मानताप्रतीतिस्ततो व्यञ्जनयैवेत्याहुः । न चैवमपि भूताधि-

कारविहितेन क्तप्रत्ययेनातीतत्वं शक्त्यैव प्रतिपाद्यं न व्यञ्जन-येति वाच्यम्; तथाप्यतीतत्वप्रतिपादनमुखेन कारणीभूत-शरविकिरणापेक्षया कार्यभूतमाननिवृत्तेश्चिरकालसिद्धताप्र-तिपादनेनातिशयोक्तिरूपेण मानरूपभावशान्तिद्वारा रसोत्क-र्षाभिव्यक्तिः क्तप्रत्ययाधीनेत्याहुः ॥ यथा वा— 'लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो निराहाराः सख्यः सततरु-दितोच्छूननयनाः । परित्यक्तं सर्वं हसितपठितं पञ्जरशु-कैस्तवावस्था चेयं विसृज कठिने मानमधुना ॥' —प्राण-इव दयित इष्टो बहिर्गृहद्वार्यवनतमुखः सन्भूमिं विलिख-न्नास्ते सख्यश्च सततरोदनेनोच्छूनानि नयनानि यासां तास्तथा, तादृश्यश्च निराहाराश्च तिष्ठन्ति । पञ्जरशुकैः सर्वं हसितपठितं हासकारि वचनम्, हसितं पठितं च वा परित्यक्तम् । तव चावस्थेयं कण्ठगतप्राणता । तत्कठिने, मानमधुना विसृज । —इत्यत्र लिखन्निति शतृप्रत्ययेन लेखनस्य वर्तमानत्वमात्रं प्रतीयते न तु कृतिसाध्यत्वमपि, वर्तमानत्वमात्रार्थकलडादेशभूतस्य शतुस्तावन्मात्रार्थकत्वस्यै-वौचित्यात् । तथा च यथा लिखतीत्याख्यातप्रयोगे कृति-साध्यताया अप्याख्यातेन प्रतीतेः कृतिसमनियता बुद्धिपू-र्वकतापि प्रतीयते, तथात्र न बुद्धिपूर्वकताप्रतीतिरिति शतृ-प्रत्ययेन लेखनस्याबुद्धिपूर्वकता व्यज्यते । तथा लेखनस्य

तन्तन्यमानताप्रतीतेः प्रसादपर्यन्तता च व्यज्यते । एवमास्त इति प्रकृत्या सत्तामात्रं प्रतीयते । तेन च व्यापारान्तरवत्त्वाप्रतीतेः प्रसादैकप्रयोजनकता सत्तायाः प्रतीयते । लटा च सत्ताया भूतता व्यावर्त्यते । तेन च न तु गत इति व्यज्यते । भूमिमिति द्वितीयया भूमिमात्रं लेखनक्रियाकर्मेति प्रतीयते । ततश्च चिन्ताकुलतया बुद्धिपूर्वकतां विनैव लिखतीति व्यज्यते । भूमौ लिखन्नित्युक्तौ तु सप्तम्याधिकरणत्वप्रतीतेरन्यत्किंचित्तत्र लिखतीति बुद्धिपूर्वकता व्यज्येत, तच्चानुचितं नैश्चिन्त्यद्योतकत्वादिति ध्येयम् । अत्र सुप्तिङ्भक्तीनां व्यञ्जकत्वम् ॥ सुब्विभक्तिषु षष्ठ्या यथा—'गामारुहम्हि गामे वसामि णअरट्ठिइं ण जाणामि । णाअरिआणं पइणो हरामि जा होमि सा होमि ॥'—ग्राम्यास्मि ग्रामे वसामि नगरस्थितिं न जानामि । नागरिकाणां पतीन्हरामि या भवामि सा भवामि ॥ स्वकामुकोपभोगकुपितया नागरिकया कयापि ग्राम्यासीति सनिन्दमुपलब्धायाः कस्याश्चिद्ग्राम्याया उक्तिरियम् । ग्राम्या ग्रामे भवा । हरामि वशीकरोमि ।—इत्यत्र या नागरिकाः सुरततन्त्रकुशलास्तत्संबन्धिनोऽपि विटान्वशीकरोमीति स्वस्य रतितन्त्रकौशलातिशयः परस्यास्तत्राकुशलत्वं च नागरिकाणामिति षष्ठ्या प्राधान्येन व्यज्ये-

ते ॥ तिङ्प्रत्ययेन कालविशेषप्रतिपादनद्वारा व्यञ्जकता यथा—'रमणीयः क्षत्रियकुमार आसीत्' इति। एषा हि भग्नमाहेश्वरकार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः। अत्रातीतकालानुशिष्टेनासीदिति लङ्प्रत्ययेन भग्नभवधनुषो राघवस्य विद्यमानस्याप्यतीततां प्रतिपादयता तदीयमतीतत्वमचिरसंपादनीयमिति व्यज्यते। तेन च तस्य रौद्ररसस्याभिव्यक्तिरिति ध्येयम्। सुब्विभक्तेः संख्याप्रतिपादनद्वारा यथा—'ताणँ गुणग्गहणाणं ताणुक्कण्ठाणँ तस्स पेम्मस्स। ताणँ भणिआणँ सुन्दर ईरिसिअं जाअमवसाणं।'—तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः। तेषां भणितानां सुन्दरेदृशं जातमवसानम्॥ पूर्वमत्यन्तमनुरक्तं कदाचिदपराद्धं नायकं प्रति नायिकोक्तिरियम्। तेषां गुणग्रहणादीनामवसानं पर्यवसानमीदृशमन्यानुरागपर्यवसायि जातमित्यत्र गुणग्रहणादीनां बहुत्वप्रतिपादनद्वारा षष्ठीविभक्तिभिरेकैकस्यापि तत्तद्गुणस्य बहुप्रकारेण ग्रहणं द्योत्यते। तथा प्रेम्ण इति षष्ठ्या तद्गतैकत्वप्रतिपादिकया प्रेम्णः सर्वकालमेकरूपता द्योत्यते। तेन चानुरागातिशयो व्यज्यते॥ व्यत्ययेनानुशिष्टयोर्मध्यमोत्तमपुरुषयोर्यथा—'रे रे चञ्चललोचनाञ्चितरुचे चेतः प्रमुच्य स्थिरप्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि। किं मन्ये विहरिष्यसे बत हतां

मुञ्चान्तराशामिमामेषा कण्ठतटे कृता खलु शिला संसार-वारांनिधौ ।'– चञ्चललोचनायां कान्तायामञ्चितरुचे रे रे चेतः, स्थिरप्रेमाणं भक्तेष्वक्षय्यानुग्रहं महिमानं हरं हरिं वा विमुच्यैणनयनां मृगाक्षीमालोक्य किं नृत्यसि, तुष्यसीति यावत्। विहरिष्यसे विहरिष्यामीति किं मन्ये मन्यसे किम्? इमामन्तरात्मन्याशां मुञ्च। कुतः? एषा कान्ता संसारवारिधौ प्लवमानानां कण्ठतटे निबद्धा शिला यतः। – इत्यत्र प्रहासे प्रतिपाद्य उत्तमपुरुषस्थाने मध्यमपुरुषस्य मध्यमपुरुषस्थाने चोत्तमपुरुषस्य विहिततया मन्ये विहरिष्यस इति व्यत्यस्तपुरुषाभ्यां प्रहासप्रतिपादनद्वारा वक्तुः शान्तिरसो व्यज्यते॥ पूर्वनिपातस्य यथा—'येषां दोर्बलमेव दुर्बलतया ते संमतास्तैरपि प्रायः केवलमेव नीतिशरणैः कार्यं किमुर्वीश्वरैः। ये क्ष्माशक्र पुनः पराक्रमनयस्वीकारकान्तक्रमास्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम्।'–ये दोर्बलमात्रशालिनस्ते दुर्बला एव। ये नीतिमात्रशरणास्तैरपि किं कार्यम्? तेऽप्यप्रयोजका इति यावत्। हे क्ष्माशक्र भूमीन्द्र, ये पराक्रमनयोभयशालिनस्ते भवादृशा नैव स्युः। यदि स्युस्तथापि पवित्रा द्वित्रा एव परं स्युरिति योजना। यद्वा पराक्रमनयोभयशालिनो ये द्वित्राः पवित्रास्तेऽपि भवादृशा न स्युरिति योजना। अत्र पराक्रमनयपदयोः

'अल्पाच्तरम्' इति नयपदस्य पूर्वनिपाते प्राप्ते, 'अभ्यर्हितं च' इति पराक्रमस्य पूर्वनिपातात्तदुभयमध्ये पराक्रमस्य प्राधान्यं गम्यते ; तेन च नायकस्य वीररसो व्यज्यते । ननु पूर्वनिपातस्य पदधर्मत्वेन कथमत्र पदैकदेशत्वमिति चेदुपचारादित्याहुः ॥ अर्थविशेषे विहितस्य विभक्तिविशेषस्य यथा—'प्रधनाध्वनि धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् । दिवसेन तु भूप भवानयुद्ध विधिसिद्धसाधुवाद-पदम् ॥'—गम्भीरचापटङ्कारभरिते रणवर्त्मनि तव विधुरैः शत्रुभिर्दिवसं सर्वस्मिन्नपि दिवसे क्षणमप्यविरम्यायोधि युद्धं कृतम् । भवांस्तु विधिना युद्धशास्त्रोक्तमार्गेण सिद्धतया कृतत्वेन साधुवादस्य श्लाघायाः पदं यथा भवति तथा दिवसेनायुद्ध युद्धं कृतवान् । —इत्यत्र दिवसमित्यत्यन्तसं-योगे विहितया द्वितीयया शत्रूणां युद्धस्य नैष्फल्यं व्यज्यते, फललाभे युद्धविरामप्रसङ्गात् । तेन च तेषामयुद्धकुशलत्वं व्यज्यते । तथा दिवसेनेति तृतीयया क्रियापरिसमाप्तिरूपे-ऽपवर्गे विहितया फलप्राप्तिः, तां विना क्रियापरिसमाप्त्य-योगात् । फलप्राप्त्या च वर्ण्यस्य युद्धकौशलं व्यज्यते ॥ तद्धितस्य यथा— 'भूयो भूयः सविधनगरीरथ्यया पर्य-टन्तं दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था । साक्षात्कामं नवमिव रतिर्मालती माधवं यद्गाढोत्कण्ठा लुलितलु-

लितैरङ्ककैस्ताम्यतीति ॥' —संनिहितेन नगरराजमार्गेण चरन्तं नवं वपुष्मन्तं साक्षान्मदनमिव स्थितं माधवं दर्शं दर्शं गाढाभिलाषा रतिरिव स्थिता मालती लुलितलुलितैर्लुठनलुठनैरङ्ककैस्ताम्यतीति यत्। —इत्यत्राल्पार्थविहितेन कप्रत्ययरूपेण तद्धितेनानुकम्पा व्यज्यत इत्येके। कप्रत्ययोऽनुकम्पायामेव विहितः, ततश्चानुकम्पार्थकेन तेनानुकम्पनीयैरङ्कैस्ताम्यतीतिप्रतीतिद्वारा मालत्याश्चिरकालविरहासहिष्णुता व्यज्यत इत्यन्ये ॥ उपसर्गस्य यथा— 'परिच्छेदातीतः सकलवचनानामविषयः पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्। विवेकप्रध्वंसादुपचितमहामोहगहनो विकारः कोऽप्यन्तर्जडयति च तापं च तनुते।'— ईदृक्तयेयत्तया च परिच्छेत्तुमशक्यो वाचामगोचरोऽस्मिञ्जन्मनि जन्मसंताने पुनः कदाप्यननुभूतपूर्वो विवेकस्य प्रध्वंसादुपचितमहामोहतया गहनः किं भविष्यतीति भीतिकरः कोऽपि मनसाप्यनुल्लेख्यो विकारोऽन्तर्जडयतीतिकर्तव्यतामूढं करोति तापं च विस्तारयति —इत्यत्र प्रध्वंसादिति प्रशब्दरूपोपसर्गेण विवेकस्य संस्कारात्मना भावो व्यज्यते। न चायं प्रशब्दवाच्य एवास्त्विति वाच्यम्, उपसर्गाणां केवलं द्योतकत्वेन वाचकत्वाभावात्। वाचकत्वेऽपि वा तत्प्रतिपादनद्वारा विप्रलम्भातिशयो व्य-

श्च इत्याहुः ॥ निपातस्य यथा— 'कृतं च गर्वाभिमुखं मनस्त्वया किमन्यदेवं निहताश्च नो द्विषः। तमांसि तिष्ठन्ति हि तावदंशुमान्न यावदायात्युदयाद्रिमौलिताम् ॥' —इदं भगवन्तं प्रति सुराणां वचनम्। त्वया गर्वाभिमुखं दैत्यहननं कियदस्तीत्यहंकाराभिमुखं मनः कृतं च। एवमेवं सति किमन्यदुद्भूच्यते? नोऽस्माकं द्विषो निहताश्च। यावदुदयाचलशेखरमंशुमान्नायाति तावदेव हि तमांसि तिष्ठन्ति। —इत्यत्र कृतं च निहताश्चेति चकारद्वयेन समुच्चयद्योतकेन मनसो गर्वाभिमुखीकरणस्य द्विषां निहननस्य च तुल्यकालताप्रतीतेर्भगवतः शौर्योत्कर्षो व्यज्यते। यद्यप्युपसर्गा निपाताश्च पदान्येव न तु पदैकदेशाः, तथापि स्वतन्त्रप्रयोगाविषयत्वेन पदैकदेशत्वव्यपदेश इति ध्येयम् ॥ बहूनामेकवाक्यानुप्रवेशेन व्यञ्जकता यथा— 'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परामस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम्। बन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहतिश्रेणीभूतविशालसालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥' —सुवेलकृतसंनिवेशं कपिबलमवलोक्यात्र को वा राम इति कृतप्रश्नं रावणं प्रति चारस्योक्तिरियम्। भुवनेषु भूर्भुवःस्वर्लोकेषु विक्रमगुणैर्विक्रमेण तत्प्रमुखैरन्यैर्दाक्षिण्यादिगुणैश्च परां प्रसिद्धिं प्राप्तो रामोऽसावङ्गुल्या निर्दि-

श्यमान एव। त्रिभुवनप्रसिद्ध इति कथमुच्यते मयैवाज्ञा-तत्वादिति वदन्तं प्रत्याह–– तं त्रिजगत्प्रसिद्धं देव: परं भवानेव केवलं न जानाति यदि तदस्माकं भाग्यविपर्यया-दुरदृष्टवशादेव। यदि भवानपि जानीयात्तदा मैथिलीं नाह-रेदस्माकमप्येवं विपत्तिर्न स्यादिति भाव:। तस्य प्रसिद्धि-मेव स्मारयति— यस्यैकस्यैव बाणस्यैकयैवाहत्या श्रेणीभू-तान्येकरेखान्त:पातितया कृतानि विशालानि यानि सप्तानां सालानां विवराणि तेषूद्गीर्णैरुद्भूतै: सप्तभि: स्वरै:। विवर-सप्तकसद्भावात्स्वरसप्तकाविर्भाव इति भाव:। विवरसप्तका-विर्भूता: सप्त स्वरा एव षड्जादिसप्तस्वरा इत्यभेदाध्यवसा-य:। तैरुपलक्षिततया यस्य यशांसि मरुद्वन्दीव वैतालिक इव गायति।— इत्यत्रासाविति सर्वनाम्ना लोकोत्तरमहिमशा-लिताप्रतिपादनद्वारा तवायमजय्य इति व्यज्यते। तद्गते-नैकवचनेन कान्तारवासकान्ताविरहादिरूपमहाक्लेशानुभवेऽ-प्येकरूपतयावस्थानं व्यज्यते। भुवनेष्विति प्रातिपदिकेन भूमौ न कश्चिद्देशविशेष एवायं प्रसिद्ध: किं तु सर्वस्मिन्नपि देश इति व्यज्यते। तद्गतेन बहुवचनेन न भूलोकमात्रेऽयं प्रसिद्ध: किं तु त्रिष्वपि लोकेष्विति व्यज्यते। विक्रमगुणै-रित्यत्रापि विक्रमरूपप्रातिपदिकेन विक्रमै: प्रसिद्धिर्लभ्यते, तेन च भवद्विजयिशालिनिहन्तृत्वं तथा भवद्विजयिकार्तवी-

र्थं निहन्तृभार्गवविजयित्वं च व्यज्यते । गुणरूपप्रातिपदिकेन दाक्षिण्यादिगुणैः प्रसिद्धिः, तेन चान्तःपुरद्रोहिणमपि शरणागतं काकमयमरक्षीत्, तद्भूत्यानपि शरणागतश्चेद्भवन्तमपि रक्षिष्यतीति व्यज्यते । तद्गतेन बहुवचनेन चैकैकस्य गुणस्य बहुप्रकारता व्यज्यते । परामित्यनेन चैतादृशी प्रसिद्धिर्नान्यसुलभेति व्यज्यते । अस्मादित्यनेन तव तदज्ञानं न केवलं त्वदभाग्यमात्रान्नापि मदभाग्यमात्रात्किं त्वस्माकं सर्वेषां राक्षसानामभाग्यादिति व्यज्यते । तं न जानातीत्यहो तवैश्वर्यमत्ततेति व्यज्यते । ऐश्वर्यमदान्न जानातीत्यनुक्त्वास्मद्भाग्यविपर्ययादित्युक्त्या निरपराधिनामस्माकमपि त्वदविनयादापत्प्राप्तेति व्यज्यते । अभाग्यादित्यभावमुखेनानभिधाय भाग्यविपर्ययादित्यभिधानेन भाग्यस्य पुण्यस्य विपर्ययो विपरीतफलदायित्वमिति पुण्यस्यापि विपरीतफलदायित्वं त्वदविनयाज्जातम्, अधर्मस्य तु किमु वक्तव्यमिति लभ्यते । यद्यभाग्यादित्येवोच्येत तदा दुरदृष्टाद्विपद्भवतु भाग्यात्तु संपदपि स्यादित्यपि लभ्येतेत्यन्ये ॥ उपसर्गस्य यथा—'अभुञ्जत भुवं प्राञ्चो भवानेको भुनक्ति ताम् । राजन्वत्यस्तथान्येषां राजन्वत्यस्तव प्रजाः ॥'— प्राञ्चो राजानो भुवमभुञ्जत; न पालितवन्तः किं तु करादानेन केवलमभ्यवहरन्ति स्मेति व्यज्यते, 'भुजोऽनवने' इत्यर्थविशेष एवात्म-

नेपदविधानात्। भवान्भुनक्ति केवलं रक्षति। अन्येषां राज्ञां प्रजाः केवलं राजवत्यः, त्वद्विषयवासिन्यस्तु प्रजा राजन्वत्यः सुराजवत्यः, 'राजन्वान्सौराज्ये' इत्यनुशासनादिति ध्येयम्। अत्र वर्णनीयस्यातिशयो व्यज्यते॥ ननु वाचकत्वाविशेषेऽपि कस्यचिदेव व्यञ्जकत्वं कस्यचिन्नेति विशेषावधारणं कथमिति चेत्; उच्यते— 'तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे। अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना॥'— तरुणिमनि तारुण्ये कलामेकांशं कलयति सति। किंचिद्यौवने सतीति यावत्। भ्रुवोरग्रे प्रान्ते कर्तरि, अनुमदनधनुर्मदनधनुषः समीपे। अत्रापि काकाक्षिन्यायेन कलामित्यनुषज्यते। अर्थाद्वक्रिम्ण इति लभ्यते। वक्रिमैकदेशं पठति सति, इयं त्रस्तमृगेक्षणा सर्वासां कान्तानां मौलिमधिवसति मौलौ वर्तते। इयं यौवनारम्भ एव सर्वातिशायिनी जाता, यौवनोत्कर्षे तु कथं स्यादिति भावः। अत्र तरुणत्व इति त्वप्रत्ययापेक्षया तरुणिमनीतीमनिचः, तथा मदनधनुषः समीप इति वाक्यापेक्षयानुमदनधनुरित्यव्ययीभावस्य, तथा मौलौ वसतीत्याधारनिर्देशापेक्षया मौलिमधिवसतीति कर्मभूताधारनिर्देशस्य च पदबन्धसौकुमार्येण सहृदयहृदयैकवेद्यश्चमत्कारकारी कोऽपि विशेषः प्रथत इत्यविवादम्। एवं व्यञ्जकतायामपि कोऽपि

विशेषः सहृदयहृदयैकसाक्षिक इति नात्र कथंतावकाश इत्येके । अन्ये तु तरुणत्व इत्यनेन त्वप्रत्ययेन द्रव्यगुणकर्मादिवाचकेभ्योऽनुशिष्टेन द्रव्यगुणादिसाधारणो धर्म उपस्थाप्यते, इमनिचा तु गुणवचनमात्रादनुशिष्टया गुणमात्रासाधारणधर्म एवोपस्थाप्यते । अयमेव च तरुणिमशब्दस्य विशेषो यत्तरुणत्वशब्दापेक्षया विशेषधर्मप्रतिपादकत्वम् । एवं च तरुणिमशब्देनाभिनवोद्भिद्यमानं वयः प्रतीयते । तरुणत्वशब्देन तु प्रौढं वय एव । एवं मदनधनुषः समीपे पठतीति वाक्यादुपाध्यायतापर्यन्तं मदनधनुषो न लभ्यते, किं तु सामीप्योपलक्षणत्वमात्रम् । अव्ययीभावे त्वनुपदस्य प्रथमप्रयोगावश्यंभावेनोपसर्जनतया तदर्थभूतसामीप्यविशिष्टतया मदनधनुषः प्राधान्येन भाननियमादुपाध्यायतापर्यन्तं व्यज्यते । तथा मौलौ वसतीत्याधारतामात्रं प्रतीयते । मौलिमधिवसतीति कर्मभूताधारनिर्देशे व्याप्यावस्थानं व्यज्यते । तथा कर्मत्वोपस्थितावीप्सितत्वप्रतीतेर्मौलेर्मुख्याधारत्वं निवासकर्तुरधिशब्दसंबन्धात्तदीश्वरत्वं च व्यज्यते । एवं सर्वत्रापि व्यञ्जकानां विशेषो विद्वद्भिरूहनीय इत्याहुः ॥ २५७ ॥

रचनावर्णयोस्तु व्यञ्जकत्वं गुणनिरूपप्रस्ताव एवोदाह्रियमाणत्वान्नेहोदाह्रियत इत्याह—

**रचनावर्णयोर्व्यक्तिं ब्रूमो गुणनिरूपणे ॥**

स्पष्टम् ॥ २२८ ॥

अथ वाक्यपदपदैकदेशवर्णरचनादिष्विव प्रबन्धेष्वपि रसादयो व्यङ्ग्या इत्याह—

**एवं रसादयो व्यङ्ग्याः प्रबन्धेष्वपि भूयसा ॥**

रत्नावल्यादौ शृङ्गारः प्राधान्येन व्यङ्ग्यः। वेणीसंहारादौ वीररसः। नागानन्दादौ करुणरसः। वीरभद्रविजयादिडिम-प्रबन्धेषु रौद्ररसः। प्रहसनेषु हास्यरसः। प्रबोधचन्द्रोदयादौ शान्तरसः प्राधान्येन व्यङ्ग्य इत्याद्यूह्यम् ॥२२९॥

अथ बुद्धिसौकर्यायोक्तान्ध्वनिभेदान्संकलयति—

**उक्तरीत्यैकपञ्चाशद्भेदाः शुद्धा ध्वनेर्मताः ॥**

तथा हि— लक्षणामूलाविवक्षितवाच्यध्वनेरर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्यरूपयोर्भेदयोः प्रत्येकं पदवाक्यप्रकाश्यत्वे चत्वारो भेदाः। अभिधामूलविवक्षितान्यपरवाच्यध्वनावसंलक्ष्यक्रमव्यङ्ग्याख्यरसध्वनेः प्रबन्धवाक्यपदपदैकदेशवर्णरचनागतत्वेन षड् भेदाः। संलक्ष्यक्रमव्यङ्ग्याख्यभेदे तु शब्दशक्तिमूले वस्त्वलंकाररूपयोर्व्यङ्ग्ययोः

प्रत्येकं पदवाक्यप्रकाश्यत्वेन चत्वारो भेदाः । अर्थशक्तिमूले तु स्वतःसंभविन्यर्थे वस्तुना वस्तुध्वनिर्वस्तुनालंकारध्वनिरलंकारेण वस्तुध्वनिरलंकारेणालंकारध्वनिरिति चतुर्णां भेदानां प्रत्येकं पदवाक्यप्रबन्धगतत्वेन त्रैविध्याद्द्वादश भेदाः; एवमर्थस्य कविप्रौढोक्तिसिद्धत्वेऽपि द्वादश भेदाः; तथार्थस्य कविनिबद्धवक्तृप्रौढोक्तिसिद्धत्वेऽपि द्वादश भेदाः, एवमाहत्यार्थशक्तिमूलध्वनौ षट्त्रिंशद्भेदाः । शब्दार्थोभयशक्त्युद्भवस्तु वाक्य एवेत्येकविधः । एवं शुद्धा ध्वनिभेदा एकपञ्चाशदिति ज्ञेयाः ॥ २३० ॥

अथ मिश्रभेदान्विविच्य संकलयति—

**संकरेण त्रिरूपेण संसृष्टया चैकरूपया ।**
**तेषां योगे मिथो भेदा वेदखाम्बुधिखेन्दवः ॥**

संशयास्पदत्वेनाङ्गाङ्गिभावेनैकव्यञ्जकानुप्रवेशेनेति त्रिरूपः संकरः । तद्भिन्नरूपा संसृष्टिरेकविधा । एतेषु चतुर्षु संबन्धप्रकारेष्वन्यतमेन संबन्धप्रकारेणैकस्यैकपञ्चाशता भेदैर्योगे सत्येकपञ्चाशद्भेदा भवन्ति । एवमेकपञ्चाशतो भेदानामेकेन संबन्धप्रकारेणैकपञ्चाशता भेदैर्योगे भेदानामेकोत्तरषट्शत्यधिका द्विसहस्री भवति । पुनरेवमन्यैरपि त्रिभिः संबन्धप्रकारैः सर्वेषामेवं योजने चतुरधिकचतुःशत्यधिका

दशसहस्री भेदानां भवति । तदाह— वदखाम्बुधिखेन्दव इति । प्रथमस्थानगताः संख्यासंकेतिताः शब्दा एकद्व्यादिसंख्यां वदन्ति । द्वितीयस्थानगतास्तु दशविंशतित्रिंशदादिसंख्याम् । तृतीयस्थानगतास्तु शतद्विशत्यादिसंख्याम् । चतुर्थस्थानगतास्तु सहस्रद्विसहस्रयादिसंख्याम् । पञ्चमस्थानगतास्तु दशसहस्रीविंशतिसहस्रयादिसंख्याम् । षष्ठस्थानगतास्तु लक्षादिसंख्याम् । यस्मिन्स्थाने वक्तव्या संख्या नास्ति तत्र स्थाने नभआकाशवाचकपदादयः प्रयुज्यन्त इति ज्यौतिषिकाणां संप्रदायः । तथा चात्र प्रथमस्थानगतेन वेदशब्देन चतुष्टसंख्योच्यते, वेदानां चतुःसंख्याकत्वात् । द्वितीयस्थाने वक्तव्यसंख्याभावात्खशब्दः प्रयुक्तः । तृतीयस्थानस्थेनाम्बुधिशब्देन चतुःशती प्रतिपाद्यते । चतुर्थस्थाने वक्तव्यसंख्याभावात्खशब्दप्रयोगः । पञ्चमस्थानस्थितेनेन्दुशब्देन दशसहस्री प्रतिपाद्यते, इन्दोरेकत्वादिति ध्येयम् ॥ २११ ॥

**शुद्धभेदैर्मिलित्वा तु शरेषुयुगखेन्दवः ॥**

शुद्धभेदानां मिश्राणां चाहत्य गणनायां पञ्चपञ्चाशदुत्तरचतुःशत्यधिकदशसहस्री भेदानां भवति । नन्वेकस्य पञ्चाशतैव योगः संभवति न तु स्वेनैव स्वस्य, अतः कथमियं गणनेति चेन्न; स्वसजातीयेन भेदेन स्वस्य संबन्धसंभवात् ।

न च पदैकदेशव्यङ्ग्यध्वनीनां पूर्वोक्तरीत्यानेकविधत्वान्नेयं गणना युक्तेति वाच्यम्, पदैकदेशानां प्रकृतिप्रत्ययादिभेदेनानेकविधत्वेऽपि तद्व्यङ्ग्यानां पदैकदेशव्यङ्ग्यत्वेनैकीकरणात्। न च तद्ध्यर्थशक्त्युद्भवादिभेदानामप्यर्थशक्त्युद्भवत्वेनैकीकरणसंभवाद्विभागन्यूनता स्यादिति वाच्यम्, स्वतन्त्रेच्छानां प्राचां नियोगपर्यनुयोगानर्हत्वात्। एतेन स्वतःसंभविना वस्तुना स्वतःसंभविवस्तुध्वनिः, तथा स्वतःसंभविना वस्तुना कविकल्पितवस्तुध्वनिः, तथा कविकल्पितवस्तुना कविकल्पितवस्तुध्वनिः, तथा कविकल्पितवस्तुना स्वतःसंभविवस्तुध्वनिः, तथा कविनिबद्धवक्तृप्रौढोक्तिसिद्धानामर्थानां च स्वतःसंभवित्वेन कविकल्पितत्वेन च द्वैविध्यं संभवतीत्यर्थशक्तिमूलध्वनिषु पुनरन्येऽपि भेदाः संभवन्तीति विभागन्यूनतेत्यपास्तम्, स्वतःसंभविवस्तुव्यङ्ग्यत्वेन तद्भेदानां कविकल्पितवस्तुव्यङ्ग्यत्वेन च तद्भेदानां कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुत्वेन तद्भेदानां च स्वतन्त्रेच्छैश्चिरंतनैरेकीकृत्य तथा विभागकरणादित्याहुः। विद्यानाथास्तु— शुद्धा एकपञ्चाशद्भेदाः। तेषां प्रत्येकमेकैकस्यैकैकेन संबन्धे प्रथमभेदस्यैकपञ्चाशद्भेदाः, द्वितीयस्य पञ्चाशद्भेदाः, तृतीयस्यैकोनपञ्चाशद्भेदा इत्यनेनैव क्रमेणोत्तरोत्तरस्यैकैकभेदपरित्यागे षड्विंशत्युत्तरशतत्रयाधिकसहस्रसंख्याका मिश्रभेदाः।

अविवक्षितवाच्यविवक्षितान्यपरवाच्ययोः संबन्धे यो भेदस्तस्मिन्नेवान्तर्भूतो विवक्षितान्यपरवाच्यस्याविवक्षितवाच्यसंबन्धकृतोऽपि भेदो न पृथग्भूत इत्यनेनैव क्रमेण वस्तुध्वनेरलंकारध्वनिसंबन्धकृतभेदोऽप्यलंकारध्वनेर्वस्तुध्वनिसंबन्धकृताश्च पृथग्भूत इति पूर्वपूर्वस्योत्तरोत्तरसंबन्ध एकैकभेदन्यूनता ज्ञेया। अत एव विरोधालंकारे जातिगुणक्रियाद्रव्याणां मिथो विरोधे, जातिविरोधे चत्वारो भेदा गुणविरोधे त्रयः क्रियाविरोधे द्वौ द्रव्यविरोधे त्वेक इति दशविधो विरोध इति वक्ष्यते। अन्यथा तत्रापि प्रत्येकं चत्वारो भेदाः स्युः। तत्रापि मिश्रणस्य त्रिरूपेण संकरेणैकरूपया संसृष्ट्या च पुनश्चतुर्धा योजने चतुरुत्तरशतत्रयाधिकपञ्चसहस्रमिता भेदाः। 'शुद्धाश्चन्द्रशरा मिश्रा ऋतुनेत्रानलेन्दवः। संसृष्टिसंकरायत्तास्त्वब्धिखाग्निशरा भिदाः॥'— इत्याहुः। अत्रास्मत्पितामहचरणा भवस्वामिभट्टाः— इयमपि गणना न युक्ता; अङ्गाङ्गिभावरूपसंकरे विवक्षितान्यपरवाच्यस्य कदाचिदङ्गत्वेन कदाचिदङ्गित्वेनेतरैः संबन्धः, एवमितरेषामपीति भेदान्तराणामपि सुवचत्वात्, एवमेकस्याङ्गत्वेन द्वयोरङ्गित्वेन, द्वयोरङ्गत्वेनैकस्याङ्गित्वेनेत्येत्रंप्रकारेण चानेकेषां भेदानां संभवात्, एवमेकस्याङ्गत्वेनान्यस्यैकव्यञ्जकानुप्रवेशेनापरस्य संशयास्पदत्वेनेतरस्य संसृष्ट्या च योजने पुनरनेके भेदाः

संभवन्तीत्यास्तां तावत् ।— इत्याहुः ॥ २३२ ॥

तत्र दिङ्मात्रमुदाहरति—

**वक्ष्ये सा कृशिमाश्लिष्टा शठोच्छ्वसिति सांप्रतम्**
**संसृष्टिः संकरश्चात्र ध्वनीनामूह्यतां मिथः ॥**

अत्र वक्ष्य इत्यनुक्त्वा वचनसंभवाद्वक्ष्य इत्येतदनुपयुक्तं सदुपदेशरूपतया परिणमद्वचनस्य विश्वसनीयतामभिव्यनक्तीति वक्ष्य इत्यत्रार्थान्तरसंक्रमितवाच्यता । कृशिमाश्लिष्टेत्यत्राश्लेषस्य चेतनकर्तृकत्वेन कृशिम्नि तदसंभवेन मुख्यार्थबाधात्कृशिम्नः संबन्धातिशयो लक्ष्यते । तेन च तस्याश्चलितुमप्यक्षमत्वं व्यज्यते । अत्र सा सांप्रतं चलितुमप्यक्षमा नात्राविश्वासः कार्य इत्यत्यन्ततिरस्कृतवाच्यध्वनिं प्रत्यर्थान्तरसंक्रमितवाच्यध्वनेरङ्गत्वेन सामानाधिकरण्यात्संकरः । तथा सा सांप्रतमुच्छ्वसितीत्यत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना क्षणान्तरे न जीविष्यतीति सांप्रतमिति पदेन व्यज्यते । ततश्च कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुनिमित्तकवस्तुध्वनेः कृशिमाश्लिष्टेत्यत्यन्ततिरस्कृतवाच्यध्वनेश्च मिथो नैरपेक्ष्येण सामानाधिकरण्यात्संसृष्टिः । तथोक्तवस्तुध्वनेर्वक्ष्य इत्यर्थान्तरसंक्रमितवाच्यध्वनेश्चाङ्गाङ्गिभावात्संकरः । एवमत्र विप्रलम्भातिशयाभिव्यक्तेरुक्तध्वनीनां रसध्वनेश्चाङ्गाङ्गिभा-

वात्संकर इत्याद्यूह्यम् ॥ यथा वा– 'खणपाहुणिआ देवर जाआए सुहअ किं वि दे भणिआ । रुअइ पुरो घरवलहीघरम्मि अणुणिज्जउ वराई ॥' क्षणप्राहुणिका देवर जायया सुभग किमपि ते भणिता । रोदिति पुरोगृहवलभीगृहेऽनुनीयतां वराकी ॥ उत्सवार्थमागतायां कस्यांचिदनुरक्तं देवरं प्रत्युत्सवव्याजेन प्रजावत्याः परिहासोक्तिरियम् । हे देवर पतिसहोदर, तव जायया क्षणप्राहुणिका क्षण उत्सवस्तदर्थमागता किमप्यनुचितं भणिता सती पुरःस्थितगृहवलभीगृहे रोदिति । सा वराक्यनुनीयताम् ।–इत्यत्र जायया ते किमपि भणितेत्यनुचितभणनस्य प्रजावतीकल्पनामात्रत्वेनानुनीयतामिति पदं मुख्यार्थायोगादुपभोगरूपार्थान्तरे संक्रमितं सत्तस्यां तवानुरागो मया ज्ञात इत्यमुमर्थं व्यञ्जयतीति किमयमर्थान्तरसंक्रमितवाच्यः किं वाविवक्षितवाच्य एव सन्नुरणनन्यायोद्भिन्चितेन व्यञ्जनाव्यापारेणोपभोगमेव प्रतिपादयतीति विवक्षितान्यपरवाच्यतया वस्तुना वस्तुध्वनिरिति संशयरूपेण संकरेणार्थान्तरसंक्रमितवाच्यस्य विवक्षितान्यपरवाच्येषु वस्तुना वस्तुध्वनेश्च संबन्धः ॥ संसृष्टेरङ्गाङ्गिभावेन संकरस्यैकव्यञ्जकानुप्रवेशेन संकरस्य च यथा— 'स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः

कलाः । कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव ॥'—घनाः स्निग्धाभिर्नीबिडाभिः श्यामलाभिः कान्तिभिर्लिप्ताकाशाः सविधवल्गमानबकसंहतयश्च कामं सन्तु । वाताश्च शीकरिणः सन्तु । पयोदाः सुहृदो मित्राणि येषां तेषां मयूराणां निजसुहृद्घनावलोकनानन्दजनिताः केकाः स्वरविशेषाश्च कला अव्यक्तमधुराः कामं सन्तु । एवं विरहिणां चरमावस्थासामग्रीपौष्कल्येऽपि सर्वं दुःखजातं सहे सोढ्वा तिष्ठामि यतोऽहं कठोरहृदयो रामोऽस्मि । सीताविरहक्षण एवान्यथाभावमप्राप्यैतावन्तं कालं जीवन्नस्मि । वैदेही तु मां विनान्यदापि क्षणमपि जीवितुमशक्ता घनाद्युद्दीपकसमवधाने कथं भविष्यति! सर्वथा विपद्यत एव । ह हेति दुःखातिशये । वैदेही तु कथमिति चिन्तयोपनीयमानतया पुरः स्थितामिव तां मत्वा हा देवीति संबोधनम् । धीरा भव कथंचिद्धैर्यमवलम्ब्य प्राणान्धारय । यद्वा घनादयः कामं सन्तु । तथाप्यहं रामोऽस्मि । बहुदुःखसहिष्णुतया कथंचिज्जीवामीति यावत् । हे सर्वसहे वसुंधरे, वैदेही तु कथं भविष्यति! सर्वथा विपद्यत एव । हा देवि, त्वमपि सर्वसहा यतः, ततः पुत्रिकाशोकेना-

न्यथाभावं मा भज, धीरा भव धैर्यमवलम्बस्व। — इत्यत्र लेपो मूर्तस्यैव न त्वमूर्तस्य गगनस्येति मुख्यार्थबाधाल्लिप्तपदेनोपरञ्जनातिशयो लक्ष्यते। तेन च वियतश्छायाधिक्यं व्यज्यते। सुहृत्त्वं चेतनस्यैव न त्वचेतनस्य घनस्येति मुख्यार्थबाधात्सुहृत्पदेनेष्टत्वं व्यज्यते। तेन चेष्टसंदर्शनजनितानां केकानामधिकोद्दीपकत्वं व्यज्यते। एवमत्यन्ततिरस्कृतवाच्ययोरन्योन्यनिरपेक्षयोरैकाधिकरण्यात्संसृष्टिः। एवं रामोऽस्मीति रामभावस्य स्वतः सिद्धतया विधेयत्वानुपपत्ते रामपदं सकलदुःखसहत्वं लक्षयत्सीतां विना जीवनव्यञ्जनद्वारा विप्रलम्भातिशयं व्यञ्जयति। ततश्च पूर्वोक्ताभ्यामत्यन्ततिरस्कृतवाच्याभ्यां सह राम इत्यर्थान्तरसंक्रमितवाच्यस्याङ्गाङ्गिभावेन संकरः, तयोरुद्दीपकत्वेनाङ्गत्वप्रतिपादनात्। एवमपि केचिद्भेदाः संभवन्तीति ध्येयम्। तथा रामोऽस्मीति योऽयमर्थान्तरसंक्रमितवाच्यो यश्च रामोऽस्मीत्यनेनैव व्यञ्जितो विप्रलम्भश्च, तयोरेकस्मिन्रामपद एवानुप्रवेशादर्थान्तरसंक्रमितवाच्यरसध्वन्योः संकरः। यद्यपि रामपदस्यार्थान्तरसंक्रमं विनापि कठोरहृदयत्वविशेषणबलादेव प्रकृतार्थसिद्धिः, तथापि कठोरहृदयत्वमात्रेण पयोदादिजनितपीडातिशयसहनसमर्थनस्य चमत्कारकारित्वाभावाद्रा-

मपदस्यार्थान्तरसंक्रमितवाच्यत्वमवश्यं वाच्यमिति सर्वमन-
वद्यम् ॥ २३१ ॥

इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कसाग्निचिद्विश्वजिदतिरात्रयाजि-
सत्यमङ्गलरत्नखेटश्रीनिवासदीक्षिततनयस्य कामाक्षीगर्भ-
संभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरणसहजता-
लब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षितस्य
कृतौ काव्यदर्पणे ध्वनिभेदनिर्णयः
चतुर्थ उल्लासः ॥



# पञ्चम उल्लासः ॥

अवसरलक्षणां संगतिं दर्शयति—

**उक्तमित्युत्तमं काव्यं मध्यमं काव्यमुच्यते ॥**

अथ मध्यमं काव्यमुच्यते ॥ २३४ ॥

तस्य विशेषलक्षणं वक्तुं विस्मरणशीलं प्रति सामान्यलक्षणमुक्तं स्मारयति—

**प्रथमोल्लास एवोक्तं तस्य सामान्यलक्षणम् ।**

तस्य मध्यमकाव्यस्य । 'काव्यं तु मध्यमं व्यङ्ग्ये वाच्यादनतिशायिनि । तदेव च गुणीभूतव्यङ्ग्यमित्युच्यते बुधैः ॥' इत्यनेन प्रथमोल्लास एव तस्य सामान्यलक्षणमुक्तम् ॥

अथ तद्विभजते—

**अगूढमपराङ्गं च वाच्यसिद्ध्यङ्गमस्फुटम् ।**
**संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ।**
**व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ।**

व्यङ्ग्यमिति पदं सर्वत्रान्वेति । तथा चागूढव्यङ्ग्यमपराङ्गव्यङ्ग्यं वाच्यसिद्ध्यङ्गव्यङ्ग्यमस्फुटव्यङ्ग्यं संदिग्धप्राधा-

न्यव्यङ्ग्यं तुल्यप्राधान्यव्यङ्ग्यं काक्वाक्षिप्तव्यङ्ग्यमसुन्दरव्यङ्ग्यं चेति गुणीभूतव्यङ्ग्यमष्टविधम् ॥ २३६ ॥

तत्रागूढं लक्षयति—

**अगूढता सहृदयैरिवान्यैरपि वेद्यता ।**
**सोऽयं विजयते राजा सुमनोजनरञ्जनः ॥**

सहृदयासहृदयवेद्यत्वमगूढत्वम् । यथा सोऽयमित्यत्र भूपे चन्द्रौपम्यं व्यज्यमानं वाच्यवत्स्फुटमित्यगूढम् । एतच्च शब्दशक्तिमूलानुरणनध्वनेरगूढतायामुदाहरणम् । अर्थान्तरसंक्रमितवाच्यस्यागूढतायां यथा— 'यस्यासुहृत्कृततिरस्कृतिरेत्य तप्तसूचीव्यथाव्यतिकरेण युनक्ति कर्णौ । काञ्चीगुणग्रथनभाजनमेष सोऽस्मि जीवन्न संप्रति भवामि किमालपामि ॥'— कीचककृतपरिभवया द्रौपद्या कीचकवधार्थं प्रेर्यमाणस्यार्जुनस्योक्तिरियम् । असुहृदा कीचकेन कृता तिरस्कृतिर्यस्य कर्णावेत्य तप्तसूचीव्यथाया व्यतिकरेणातिशयेन युनक्ति स एषोऽहं स्त्रीवेषधारितया काञ्चीगुणग्रथनपात्रमस्मि । ततश्च संप्रति न जीवामि । ततः किं त्वां प्रत्यालपामि ।— इत्यत्र जीवन्न एव न जीवामीति वचनं मुख्यार्थबाधान्मरणोन्मुखजीवनसदृशजीवनरूपार्थान्तरे संक्रमितं प्रकृतकार्याक्षमत्वं व्यनक्ति । तच्च वाच्यायमानमि-

अत्रागूढता। यत्पुनरगूढं तन्न चमत्कारकारि, किं तु कामिनीकुचकलशवत्किंचिद्गूढमेव तथा तदुक्तम्— 'चोलीपयोधर इव प्रकटो न कामं नो घूर्जरीस्तन इवातितरां निगूढ। अर्थो गिरामपिहितः पिहितश्च किंचिदान्ध्रीपयोधर इवातितरां समिन्द्धे॥' इति॥ अत्यन्ततिरस्कृतवाच्यस्यागूढता यथा— 'उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा गायन्ति मञ्जु मधुपा गृहदीर्घिकासु। एतच्चकास्ति च रवेर्नवबन्धुजीवपुष्पच्छटाभमुदयाचलचुम्बि बिम्बम्॥'— उन्निद्राणां विकचानां रक्तसरसिजानां रेणुभिः पाटलिताङ्गा मधुपा गृहसरसीषु मञ्जु मधुरं गायन्ति। उदयाचलचुम्बि रवेरेतद्बिम्बं च नवबन्धूककुसुमसमूहशोभं चकास्ति।— इत्यत्र चुम्बनपदं स्त्रीपुरुषकपोलादिवक्त्रसंयोगवाचकमत्यन्ततिरस्कृतवाच्यतयैषत्संबन्धमात्रं लक्षयत्प्रत्यूषस्य तादात्विकतां व्यञ्जयति॥ अर्थशक्तिमूलानुरणनध्वनेरगूढता यथा— 'अत्रासीत्फणिपाशबन्धनविधिः शक्त्या भवद्देवरे गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः। दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी॥'— इदं प्रतिप्रयाणे सीतां प्रति रामचन्द्रवचनम्। नागास्त्रेणात्र बन्धनविधानमासीत्। भवत्या देवरे लक्ष्मणे। देवरः पत्युर्भ्राता। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावा-

द्भवदेवर इत्यविरुद्धम् । रावणस्य शक्त्या वक्षसि दृढं प्रहृते सति हनुमता द्रोणाद्रिरोषधिपर्वतोऽत्राहृतः । एवमावाभ्यां भवत्कृते महत्कृच्छ्रमनुभूतमित्युक्त्वोभयोः शौर्यमप्याह—अत्र दिव्यैर्लक्ष्मणशरैरिन्द्रजित्स्वर्गं गमितः । अत्र रावणस्य कण्ठाटवी च केनापि कृत्ता । —इत्यत्र रावणशिरश्छेत्तृतयाभिहितस्य रामत्वेनोपस्थितिर्व्यञ्जनया स्फुटैवेति केनापीत्यत्रार्थशक्तिमूलानुरणनध्वनेरगूढता । इदं च किंपदादिना बुद्धिस्थस्य सामान्येनैव रूपेणोपस्थितिरिति पक्षमवलम्ब्योक्तम् । सर्वनाम्ना येन रूपेण बुद्धिस्थता तेनैव रामत्वादिविशेषरूपेणोपस्थितिरिति पक्षे किंपदेन रामपदार्थस्य व्यङ्ग्यत्वासंभवात् 'तस्यात्यत्र' इति पाठो द्रष्टव्य इत्याहुः ॥ २३७ ॥

अथापराङ्गं लक्षयति—

**अपराङ्गं नैरपेक्ष्याल्लब्धसिद्ध्युपकारकम् ॥**

स्वनैरपेक्ष्येण लब्धसिद्धेर्यदुपकारकं तदपराङ्गम् ॥ २३८ ॥

तदेतद्विभजते—

**रसवत्प्रेय ऊर्जस्वि तथैव च समाहितम् ।**
**भावोदयो भावसंधिशबलत्वे इति क्रमात् ।**
**अपराङ्गं सप्तविधं प्रवदन्ति मनीषिणः ॥**

तत्रापराङ्गं रसवत्प्रेयऊर्जस्विसमाहितभावोदयभावसंधिभावशबलताभेदेन सप्तविधमाचक्षते ॥ २३९ ॥

तत्र रसवदपराङ्गं लक्षयति—

**रसे रसाङ्गे भावाङ्गेऽप्येषु स्याद्रसवद्द्विधा ॥**

एषु सप्तविधेष्वपराङ्गेषु रसस्य रसाङ्गत्वे भावाङ्गत्वे वा रसवदाख्यमपराङ्गं द्विधा भवति । इदमेव रसवदलंकारमाचक्षते ॥ २४० ॥

तत्र रसस्य रसाङ्गतायामपराङ्गमुदाहरति—

**क्षणध्वस्तखरानीकं जानकी सस्वजे प्रियम् ।**
**अत्र संभोगशृङ्गारस्याङ्गं वीररसः स्मृतः ॥**

अत्र जानक्या राघवविषयकसंभोगशृङ्गारस्य वीररसोऽङ्गम् ॥ यथा वा— 'अयं स रशनोत्कर्षी पीनस्तनविमर्दनः । नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥'— अर्जुनेन कृत्तं भूरिश्रवसो भुजमवलोक्य तत्पत्न्याः प्रलापोऽयम् । अत्र करुणरसस्य शृङ्गाररसोऽङ्गम् । एवमूह्यम् ॥ २४१ ॥

अथ रसस्य भावाङ्गतायामपराङ्गमुदाहरति—

**लक्ष्मीविलोकनोत्फुल्ललोचनं शीलये विभुम् ।**
**इत्यादौ रतिभावस्य शृङ्गारोऽङ्गत्वमश्नुते ॥**

अत्र भगवतो लक्ष्मीविषयकशृङ्गाररसो भगवद्विषयकरति-भावस्याङ्गम् । यद्यपि रसभावमापन्नस्याङ्गता न संभवति, तथापि रसस्थायिभावस्याङ्गतया रसाङ्गत्वोपचार इत्याहुः ॥ यथा वा— 'कैलासालयभाललोचनरुचा निर्वर्तितालक्तक-व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् । स्पर्धाबन्धसमिद्धयेव सुदृढं रूढा यया नेत्रयोः कान्तिः कोकनदानुसारसरसा सद्यः समुत्सार्यते ॥'— कैलासा-लयस्य शंभोर्यद्भाललोचनमग्निमयं तस्य रुचा निर्वर्तिता यावकैर्विशेषेणाक्तिरञ्जनं यस्याः सा पार्वत्याः पदनखका-न्तिर्वः पातु । यया भालनेत्ररुचिरञ्जितया पादनखकान्त्या स्पर्धाबन्धसमिद्धयेवाम्बिकाया नेत्रकान्तिरपि मत्सदृशी रागेण वर्तत इति तन्नेत्रकान्त्या असूयन्त्येव, यद्वा हरनेत्रं मदीयां रुचमपाकरोदहमपि तज्जातीयरुचमपाकरोमीति सासू-यमेव देव्या नेत्रयोर्दृढं रूढा कोकनदस्य रक्तोत्पलस्यानुस-रणे सरसा चतुरा कान्तिः सद्यः समुत्सार्यते । भगवति प्रणते देव्याः प्रसन्नायाः कोपजनितारुण्यं नेत्रयोर्निवृत्तमिति तात्पर्यम् ।— अत्र मानोपबृंहितो देवयोः संभोगशृङ्गारो देवीविषयकरतिभावस्याङ्गम् । यद्यप्यमर्षरूपभावशान्तेरिह देवीविषयकरतिभावाङ्गत्वं तथापि तदभिव्यञ्जयरसस्थायिनो-ऽप्यङ्गत्वमस्तीत्युपधेयसंकरेऽप्युपाधेरसंकर इत्याहुः ॥२४२॥

अथ प्रेयोभिधानं द्वितीयमपराङ्गं लक्षयति—

**प्रेयोपराङ्गं भावस्य यदि भावरसाङ्गता ॥**

भावस्य भावाङ्गत्वे रसाङ्गत्वे च प्रेय इत्यपराङ्गमपि द्विविधं भवति । तदेव च प्रेयोलंकारमप्याचक्षते । २५३ ॥

तत्र भावस्य भावाङ्गतायां प्रेयोपराङ्गमुदाहरति—

**वन्द्येय महतस्तान्ये रामपादावलम्बिनः ।**
**इत्यादिषु तु भावस्य भावाङ्गत्वं प्रतीयताम् ॥**

अत्र महद्विषयकरतिभावस्य रामविषयकरतिभावोऽङ्गम् ॥ यथा वा— 'अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधयस्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः । आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुवस्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥'— परितः समन्तादत्युन्नताः शैलाः स्फुरन्ति । स्फारा विस्तीर्णा अम्भोधयश्च तथा परितः स्फुरन्तीत्यर्थः । तान्गिरीनेतानम्भोधीनपि वहन्ती किमपि किंचिदपि न श्रान्तासि । तुभ्यं नमः । इत्याश्चर्येण मुहुर्मुहुरुपलक्षितः सन्यावद्भुवः स्तुतिं प्रस्तौमि, तावदिमां सशैलसागरां भुवं बिभ्रत्तव भुजः स्मृतः । ततस्तदनन्तरमेव भूस्तुत्यर्थप्रवृत्ता वाचो मुद्रिताः ।—

इत्यत्र कवेर्यो भूविषयको रतिभावः स राजविषयकरति-भावस्य कविगतस्यैवाङ्गम् । यद्यप्यत्रापि भूराजोभयविषय-योर्भावयोरद्भुतरसोऽप्यङ्गमिति रसवदलंकारताप्यस्ति, तथा-प्युपधेयसंकरेऽप्युपाधेरसंकर इत्येव ध्येयम् ॥ २४४ ॥

अथ भावस्य रसाङ्गतायां प्रेयोपराङ्गमुदाहरति—

**वत्से जानकि हा हन्त कथं वत्स्यसि कानने ।**
**इत्यादिषु रसाङ्गत्वं भावस्य परिकीर्तितम् ॥**

अत्र जानकीविषयकरतिभावस्य करुणरसं प्रत्यङ्गत्वम् ॥ यथा वा— 'त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासं-स्पृशि । शय्योपान्तनिविष्टसस्मितवधूनेत्रोत्सवानन्दितो नि-र्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥'— अत्र सखीनां नायिकाविषयकरतिभावः शृङ्गाररसस्याङ्गम् ॥ इत्थं भावस्य भावाङ्गत्वे रसाङ्गत्वे च द्विविधमपि प्रेयो-लंकाराख्यमपराङ्गमुदाहृतम् ॥ २४५ ॥

अथोर्जस्विनामकमपराङ्गं लक्षयति—

**रसाभासोऽथ वा भावाभासो भावाङ्गतां यदि ।**
**अश्नुवीत तदोर्जस्विनाम स्यादपराङ्गकम् ॥**

यत्र रसाभासो भावाभासो वा भावाङ्गतां प्रतिपद्यते तत्रो-भयत्राप्यूर्जस्विनामकमपराङ्गमाहुः । इदमेवोर्जस्व्यलंकारमा-चक्षते ॥ २४६ ॥

तत्र रसाभासस्य भावाङ्गतामुदाहरति—

**हन्त द्रक्ष्यामि देव्यै च खड्गमुत्कृष्य रावणः ।**
**भारुत्युक्ताविह रसाभासो भावाङ्गतां व्रजेत् ॥**

अत्र रावणस्य सीतालम्बनो रौद्रो रसोऽनुचितविषयत्वादा-भासः । स च देवीविषयकरतिभावस्याङ्गम् ॥ २४७ ॥

अथ भावाभासस्य भावाङ्गतामुदाहरति—

**जितेन्द्रस्य कियान्रामो ममेत्युक्त्वा तृणाय तम् ।**
**मेने देवीत्यत्र भावाभासो भावाङ्गतां भजेत् ॥**

अत्र रावणस्य गर्वाख्यो भाव आभासः । स च सीतागत-धृतिरूपभावस्याङ्गम् । रसाभासस्य भावाभासस्य च भावा-ङ्गता यथा वा—'बन्दीकृत्य नृप द्विषां मृगदृशस्ताः पश्यतां प्रेयसां श्लिष्यन्ति प्रणमन्ति यान्ति परितश्चुम्बन्त्यमी सैनि-काः । अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे वि-ध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥'—हे नृप, भवत्सेनाभटा रिपूणां प्रेयसीर्बन्दीकृत्य । पश्यतां प्रेय-

सामित्यनादरे षष्ठी । पश्यत एव तत्प्रेयमोऽनादृत्येत्यर्थः । ताः शत्रुवधूः श्लिष्यन्ति । ततस्ताभिरवधूताः प्रणमन्ति । पुनस्तास्वन्यत्र यान्तीषु स्वयमपि परितो यान्ति । ततः सर्वात्मनानिच्छन्तीर्बलाच्चुम्बन्ति । तैः प्रत्यर्थिभिस्तु हे औचित्यवारांनिधे, त्वमस्मत्पुण्यैर्दृष्टोऽसि । तद्विपदो वधूपरिभवादिरूपा विध्वस्ता इति स्तूयसे ।—इत्यत्र प्रथमार्धे शृङ्गारोऽननुरक्तदुःखितद्विषद्वधूविषयकत्वेनाभासो राजविषयककविगतरतिभावस्याङ्गम् । उत्तरार्धे द्विषतां राजविषयको रतिभाव आभासः । स तु कवे राजविषयकरतिभावस्याङ्गमिति रसाभासस्य भावाभासस्य च भावाङ्गत्वमिति ध्येयम् । एवमूर्जस्व्यलंकाराख्यं द्विविधमप्यपराङ्गव्यङ्ग्यमुदाहृतम् ॥

अथ समाहिताख्यमपराङ्गं लक्षयति—

**भावाङ्गत्वे भावशान्तेः समाहितमुदाहृतम् ।**
**त्वद्दानश्रवणे जाता स्वर्गवी भग्नमानसा ॥**

यत्र भावशान्तेर्भावाङ्गत्वं तत्र समाहिताख्यमपराङ्गम् । इदमेव समाहिताख्यमलंकारमाचक्षते । यथा त्वद्दानेत्यत्र स्वर्गवीगतगर्वाख्यभावशान्तिः कविगतराजविषयकरतिभावस्याङ्गम् ॥ यथा वा—'अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः । ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षण-

क्षणे ॥'—अत्र विषमयोः प्रथमतृतीयपादयोर्मात्राषट्कानन्तरम् , समयोर्द्वितीयतुरीयपादयोर्मात्राष्टकानन्तरं च रगणस्य लघोर्गुरोश्च दर्शनाद्वैतालाख्यं वृत्तमिदम् । यद्यपि 'युगयुजोरष्टौ षडनिरन्तराः कला रलगाश्च' इति वैताललक्षणे निरन्तराः सर्वे गुरवः सर्वे लघवो वाद्यौ न प्रयोज्या इत्युक्तत्वात् 'अविरलकरवाल–' इत्यत्र निरन्तरलघुप्रयोगो न युक्तः, तथापि कवीनां निरङ्कुशत्वाददोष इत्याहुः । अविरलमविरतं करवालस्य खड्गस्य कम्पनैर्भ्रुकुट्या भ्रूक्षेपेण तर्जनेन गर्जनेन च मुहुरुपलक्षितो यो मदस्तव वैरिणां ददृशे स मदस्त्वद्वीक्षणक्षण एव क्वापि गतः ।—इत्यत्र मदरूपभावशान्ते राजविषयकरतिभावाङ्गत्वम् । भावाभासस्य भावाङ्गत्वे समाहितम् ; इह तु भावशान्त्यलंकाराख्यं भावशान्त्यपराङ्गमित्यन्ये ॥ १४९ ॥

अथ भावोदयाख्यमपराङ्गं लक्षयति—

**भावोदयश्चेद्भावाङ्गं तदा भावोदयं विदुः ।**
**त्वद्दानश्रवणादेति कामधेनुर्विनम्रताम् ॥**

अत्र कामधेनोर्लज्जाख्यभावोदयस्य राजविषयकरतिभावाङ्गत्वम् । अमुमेव भावोदयालंकारमाचक्षते ॥ यथा वा—
'साकं कुरङ्गकदृशा मधुपानलीलां कर्तुं सुहृद्भिरपि

वैरिणि ते प्रवृत्ते । अन्याभिधायि तव नाम विभो गृहीतं केनापि तत्र विषमामकरोदवस्थाम् ॥'— मृगदृशा सुहृद्भिरपि सह तव वैरिणि मधुपानोद्यते सति त्वत्सनाम्नोऽन्यस्याह्वानाय त्वन्नामधेयं केनचिदुक्तं सत्तत्र वैरिणि दुःसहामवस्थामकरोत् ।— इत्यत्र त्रासाख्यभावोदयस्य राजविषयकरतिभावाङ्गत्वम् ॥ २५० ॥

अथ भावसंध्याख्यमपराङ्गं लक्षयति—

**भावाङ्गं चेद्भावसंधिर्भावसंध्यपराङ्गकम् ।**
**नम्रस्मेरमुखी पाणिं गृह्णती सेव्यतामुमा ॥**

भावसंधेर्भावाङ्गत्वे भावसंध्याख्यमपराङ्गव्यङ्ग्यम् । इदमेव भावसंध्याख्यमलंकारमाचक्षते । यथा नम्रस्मेरेति पदाभ्यां व्यक्तयोर्लज्जाहर्षयोः संभूय वृत्तेर्भावसंधिः । स च देवीविषयकरतिभावस्याङ्गम् ॥ यथा वा— 'असोढा तत्कालोल्लसदसहभावस्य तपसः कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः । प्रमोदं वो दिश्यात्कपटबटुवेषापनयनत्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥'— शैलदुहितुस्तत्कालमुल्लसन्ती या सोढुमशक्यता तद्वतस्तपसोऽसोढासहिष्णुः । देवीं तथा शरीरनिरपेक्षमुग्रं तपश्चरन्तीं क्षणमप्युपेक्षितुमक्षम इति यावत् । अनेन कपटब्रह्मचारिवेषा-

पनयने हेतुरुक्तः। तथा देव्याः कथानां विस्रम्भेषु सवि-स्रम्भकथाश्रवणेषु च रसिक इत्यनेन तादृशवेषापनयनमान्द्ये हेतुरुक्तः। एवं कपटवेषापनयने त्वरया मान्द्येन चाभि-युक्तः स्मरहरः प्रमोदं वो दिश्यात्। ——इत्यत्र त्वराभियो-गेनावेगः शैथिल्याभियोगेन धैर्यं च व्यक्तमित्यावेगधैर्ययोः संभूय वृत्तेर्भावसंधिः। स च देवविषयकरतिभावस्याङ्गम्॥

अथ भावशबलताख्यमपराङ्गं लक्षयति——

**भावाङ्गे भावशाबल्ये भावशाबल्यमिष्यते।**
**छिष्टे दृष्टेऽरुणं नम्रे फुल्लमाक्षि तवेक्ष्यते॥**

यत्र भावशबलताया भावाङ्गत्वं तत्र भावशबलताख्यमपरा-ङ्गम्। अमुमेव भावशबलतालंकारमाचक्षते। भावानां शब-लता नाम पूर्वपूर्वोपमर्देन वृत्तिः। यथा द्विष्ट इत्यत्रारुणपद-द्योत्यकोपोपमर्देन फुल्लपदद्योत्यस्य हर्षस्य वृत्तेर्भावशबलता। तस्याश्च राजविषयकरतिभावाङ्गतया भावशबलताख्यमपरा-ङ्गम्॥ यथा वा——'पश्येत्कश्चिच्चपल चल रे का त्वराहं कुमारी हस्तालम्बं वितर ह ह हा व्युत्क्रमः क्कासि यासि। इत्थं पृथ्वीपरिवृढ भवद्विषिणोऽरण्यवृत्तेः कन्या कंचित्फल-किसलयान्याददानाभिधत्ते॥'—— हे पृथ्वीवृढ, अर-ण्यवासिनो भवद्रिपोः कन्या कंचिदाभिदत्ते वक्ष्यमाणरी-

स्योक्तिप्रत्युक्तिपरिपाटीमारचयति— मया सह रममाणां त्वां कश्चित्पश्येदित्युपहासपरेण कामुकेन संत्रासार्थमुक्ता तं प्रत्याह— रे चपल, तर्हि चल विविक्तं देशं गच्छ । अहमपि तत्रागच्छामीति भावः । अथ तस्योपहासपरस्योक्तिः—का त्वरेति । अहो ते भीरुतेति यावत् । अथ कन्याया उक्तिः—अहं कुमारीति । कुमार्या भीरुता सहजा किमत्रोपहासेनेति यावत् । अथ तस्योपहासपरस्योक्तिः—हस्तालम्बं वितरेति । यदि भीरुतया विविक्तदेशे गन्तव्यं तर्हि मम स्वयं गन्तुं न पाटवम्, अतः करावलम्बनं देहीति । अथ तस्या उक्तिः—ह ह हा व्युत्क्रम इति । युवतया मम हस्तावलम्बनं दातुं शक्तोऽपि हन्त मां तत्र नियोजयसीति यावत् । अथ चलिते तस्मिन्सैवाह—क्वासि यासीति । असीति त्वमर्थेऽव्ययम् । —इत्यर्थ इत्याहुः । अस्मत्पितामहचरणा भवस्वामिभट्टास्तु—कन्याभिधत्त इति पदस्वारस्येन पश्येत्कश्चिदित्यादि सर्वं कन्याया एव वचनम् । तथा हि— भवद्विषः कन्या कंचित्कामयमानं प्रत्याह—रे चपल, कश्चित्पश्येत्, अतश्चल गच्छेति । अथ तस्मिन्नपसरत्याह—का त्वरेति । चलेत्यर्थोक्तिमात्र एव किं चलसीति यावत् । अथ तस्मिन्नागते सत्याह— अहं कुमारीति अतः पितृपराधीना न स्वेच्छया त्वया सह रन्तुमुद्युक्त इति

यावत्। अथ तस्मिन्नपयाति पुनराह— हस्तालम्बं वितरेति। पुनस्तस्मिन्करावलम्बनायोपसर्पति सत्याह—ह ह हा व्युत्क्रम इति। पुनस्तस्मिन्नपगच्छत्याह— क्वासि यासीति योजना। — इत्याहुः। अत्र पश्येत्कश्चिदिति शङ्का, कास्त्वरेत्यसूया, अहं कुमारीति स्वगतकुमारीभावस्मृतेः स्मृतिः, हस्तालम्बं वितरेति श्रमः, ह ह हा व्युत्क्रम इति कार्पण्योक्तेर्दैन्यम्, क्वासि यासीत्यौत्सुक्यं च व्यज्यत इति पूर्वपूर्वोपमर्देन भावानामुपनिबन्धनाद्भावशबलता। सा च राजविषयकरतिभावस्याङ्गम्। एवं च ये पूर्वमसंलक्ष्यक्रमव्यङ्ग्यप्रस्तावे रसादीनामङ्गत्वे रसवदादयोऽलंकारा गुणीभूतव्यङ्ग्यप्रस्ताव उदाहरिष्यन्त इत्युक्तास्त इहोदाहृताः। यद्यपि भावोदयभावसंधिभावशबलत्वानि नालंकारतया पूर्वैरुक्तानि तथापि युक्तिसाम्यात्पर्यालोचनकुशलः कश्चिद्ब्रूयादित्यस्माभिस्तान्यप्यलंकारतयोक्तानि। वस्तुतस्तु, उक्तोदाहरणेषु गुणीभूतव्यङ्ग्यत्वे मध्यमकाव्यता रसवदाद्यलंकारवत्त्वे त्वधमकाव्यता च स्यात्, अतो रसवदादयो नालंकारा भवितुमर्हन्तीति नव्याः। ननु रसादीनां रसाद्यङ्गत्वे गुणीभूतव्यङ्ग्यतेत्ययुक्तम्, तथा सत्यङ्गाङ्गिभावेनसंकरमात्रस्य गुणीभूतव्यङ्ग्यान्तर्भावापातादिति चेत्, इष्टत्वादित्येके।

यत्र साक्षादङ्गता तत्र गुणीभूतव्यङ्ग्यता। यथा— 'अयं स रशनोत्कर्षी पीनस्तनविमर्दनः' इत्यादौ। यत्र परम्परयाङ्गता तत्र तु रसादिसंकरध्वनिः। अत एव 'स्निग्ध-श्यामलकान्तिलिप्तवियतो वेल्लद्वलाका घना वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः। कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव॥' इति पूर्वसंकरप्रस्तावोदाहृतश्लोके रामोऽस्मीति रामभावस्य स्वतः सिद्धतया विधेयत्वानुपपत्ते रामपदं सकलदुःखसह-त्वं लक्षयत्सीतां विनापि जीवनसामर्थ्यं व्यञ्जयद्विप्रलम्भा-तिशयं च व्यञ्जयति। ततश्च श्यामलकान्तिलिप्तेति पयोद-सुहृदामिति चात्यन्ततिरस्कृतवाच्ययो राम इत्यर्थान्तरसंक्र-मितवाच्यस्य चाङ्गाङ्गिभावेन संकरः, तयोरुद्दीपकत्वेनाङ्ग-त्वादिति परम्परयाङ्गत्व एव संकर उदाहृत इति तत्त्वम्।— इत्यन्ये। यद्यपि ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह संसृष्टिः संकरो वा सर्वत्र संभवति, तथापि 'प्रधानेन व्यपदेशा भवन्ति' इति न्यायेन यत्र येन चमत्कारः पुरः-स्फूर्तिकस्तत्र तेन व्यपदेश इति ध्येयम्॥ एवं सप्तविधमप्य-पराङ्गमुदाहृतम्॥ २५२॥

अथापराङ्गेऽष्टममपि प्रकारं लक्षयति—

**शब्दार्थोभयशक्त्युत्थास्त्रयस्ते ध्वनयो यदा ।**
**वाच्याङ्गतां भजेयुः स्यादपराङ्गं तदाष्टमम् ॥**

शब्दशक्तिमूलस्यार्थशक्तिमूलस्योभयशक्तिमूलस्य वाणुरणनध्वनेर्वाक्यार्थाङ्गत्वेऽष्टममपराङ्गमाचक्षते ॥ २५३ ॥

तत्र शब्दशक्तिमूलध्वनेर्वाक्यार्थाङ्गतायामपराङ्गमुदाहरति—

**नलिनीयमिनालोकादामोदं भजतेतराम् ।**
**इत्यादौ शब्दशक्त्युत्थध्वनेर्वाच्याङ्गता मता ॥**

अत्र कमलिनीनस्य सूर्यस्यालोकात्प्रकाशादामोदं सौरभं भजतेतरामिति प्रस्तुतेऽर्थे शक्त्या प्रतीयमाने नलिनीति स्त्रीलिङ्गेन प्रतीयमाना नायिकेनस्य दयितस्यालोकाद्दर्शनादामोदमानन्दं भजत इतीनालोकादिपदानां पर्यायासहिष्णुतया शब्दशक्तिमूलध्वनिविषयो यो नायिकानायकवृत्तान्तः स रविकमलिनीवृत्तान्तरूपे वाक्यार्थे समारोप्यमाणतया वाक्यार्थाङ्गतां नीयते, सर्वत्र समासोक्तौ प्रतीयमानावस्तुवृत्तान्तसमारोपोपस्कृतस्यैव प्रकृतवाक्यार्थस्य प्राधान्येन प्रतीतेः । अत्र च रविकमलिनीवृत्तान्तस्य प्रतीयमानना-

यिकानायकवृत्तान्तनिरपेक्षतयैव लब्धोत्पत्तिकत्वाद्वक्ष्यमाण-वाच्यसिद्ध्यङ्गाङ्गेद इति ध्येयम् । यथा वा— 'जनस्थाने भ्रान्तं कनकमृगतृष्णाकुलधिया वचो वैदेहीति प्रतिपद-मुदश्रु प्रलपितम् । कृतालंकाभर्तुर्वदनपरिपाटीषु घटना मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥' जनस्थाने जनसंनिवेशे । नगर इति यावत् । जनस्थानाख्यदण्डका-रण्यप्रदेशविशेषे च कनकमेव मृगतृष्णा मरुमरीचिका, तयाकुलधिया कनकमयो यो मारीचमायामृगस्तस्मिन्या तृष्णा वाञ्छा तदाकुलधिया च भ्रान्तं सर्वतः पर्यटितम् । वै प्रसिद्धौ निपातः । देहि वितरेति वैदेहि हे जानकीति च वचः प्रतिपदं प्रतिवर्णसमूहं प्रतिचरणन्यासं चोदश्रु प्रलपितम् । काभर्तुः कुत्सितनृपतेर्वदनम् 'वद व्यक्तायां वाचि' इति स्तोत्ररूपं वचनम्, तत्परिपाटीषु तत्प्रकारेषु घटना यत्नः, अथ वा वदनपरिपाटीषु वचनसंदर्भेषु घट-नाघटितांशसमर्थनालमधिकं कृता लङ्काभर्तुर्दशास्यस्य मुख-परिपाटयितृशरसंधानं कृतं च । अतो मया रामधर्माचर-णाद्रामत्वं प्राप्तम् । कुशलवसुता क्षेमहेतुधनवत्ता कुशश्च लवश्च सुतौ यस्याः सा सीता च न त्वधिगता । —इत्यत्र जनस्थान इत्यादिपदानां परिवृत्त्यसहतया शब्दश-क्तिमूलध्वनिविषयो रामेण सहोपमानोपमेयभावो मयाप्त

रामत्वमिति वाच्याङ्गम् । नन्वत्र व्यज्यमानं रामौपम्यं विना अयाप्तं रामत्वमिति वाच्यसिद्ध्यसंभवाद्वक्ष्यमाणवाच्यसिद्ध्यङ्गस्यैवेदमुदाहरणं युक्तमिति चेत्; सत्यम्, 'मयाथापि प्राप्ता कुशलवसुता नैव ह ह हा' इति पाठे व्यज्यमानरामवृत्तान्तसमारोपोपस्कृतस्यैव प्रस्तुतवाक्यार्थस्य प्राधान्येन प्रतीतेः प्रकृतोदाहरणत्वमविरुद्धमिति ध्येयम् ॥ २५४ ॥

अथार्थशक्तिमूलवस्तुध्वनेर्वाच्याङ्गत्वमुदाहरति—

**आलिङ्गत्यंशुमानैन्द्रीमुल्लासयति चाब्जिनीम् ।**
**इत्यादावर्थशक्त्युत्थध्वनेर्वाच्याङ्गता मता ॥**

अत्र प्रतीयमानदक्षिणनायकवृत्तान्तसमारोपोपस्कृतस्य प्रस्तुतरविवृत्तान्तस्य प्रतीतिः । ऐन्द्र्यादिपदानां परिवृत्तिसहिष्णुतयार्थशक्तिमूलत्वमप्रस्तुतवृत्तान्तप्रतीतेरिति ध्येयम् ॥

यथा वा— 'आगत्य संप्रति वियोगविसंष्ठुलाङ्गीमम्भोजिनीं क्वचिदपि क्षपितत्रियामः । एतां प्रसादयति पश्य शनैः प्रभाते तन्वङ्गि पादपतनेन सहस्ररश्मिः ।' —क्वचिदपि मेरोरपरभागे नायिकान्तरसंनिधौ च रात्रिं नीत्वा रविर्नायकश्च संप्रत्यागत्य वियोगेन विह्वलाङ्गीमम्भोजिनीं नलिनीं नायिकां च पादपतनेन किरणावतरणेन चरणप्रणामेन च शनैः शनैः प्रसादयति विकचयति गतरोषां

करोति च । —इत्यत्र क्वचिदादिपदानां पर्यायसहिष्णुतयार्थशक्तिमूलवस्तुध्वनिविषयो यो नायिकानायकवृत्तान्तः स रविकमलिनीवृत्तान्तरूपे वाक्यार्थे समारोप्यमाणतया वाच्याङ्गतां नीयते । न चात्र पादपतनेनेति श्लिष्टपदसत्त्वाच्छब्दशक्तिमूलताप्यस्तीत्युभयशक्तिमूलध्वनिविषयस्यैव अत्र वाच्याङ्गतेति वाच्यम्, 'भूम्ना व्यपदेशः' इत्यर्थशक्तिमूलत्वव्यपदेशात् । न चैवमपि 'झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभाति नृपभीमः' इत्यत्र भीमपदवदत्रापि पादपदं श्लिष्टमिति पदप्रकाश्यशब्दशक्तिमूलध्वनित्वव्यपदेशः किं न स्यादिति वाच्यम्; भीमपदस्येव पादपदस्य विशेष्यानुपस्थापकत्वात्, किं तु सापराधत्वमात्रं पादपदमुपस्थापयतीत्याहुः । वस्तुतस्तु, उभयशक्तिमूलध्वनिविषयस्य वाच्याङ्गत्व एवेदमुदाहरणं युक्तम् । 'पाथोजिनीपरिवृढोऽयमधीरनेत्रे' इति तुरीयपादपाठेऽर्थशक्तिमूलध्वानिविषयस्य वाच्याङ्गत्वमिति ध्येयम् ॥ २५५ ॥

अथोभयशक्तिमूलध्वनिविषयस्य वाच्याङ्गतायामपराङ्गमुदाहरति—

**रक्तोऽयमब्जिनीनाथश्चुम्बत्यैन्द्रीमुखं शनैः ।**
**इत्यत्रोभयशक्त्युत्थध्वनेर्वाच्याङ्गता भवेत् ॥**

अत्र रक्तपदस्य श्लिष्टत्वादब्जिनीनाथादिपदस्य तदभावाच्चो-भयशक्तिमूलध्वनिविषयता । प्रतीयमानस्य नायिकानायकवृ-त्तान्तस्य च वाक्यार्थे रविकमलिनीवृत्तान्ते समारोपाद्वाच्या-ङ्गत्वम् । एवमुदाहरणान्तरमप्यूह्यम् ॥ २५६ ॥

अथ क्रमप्राप्तं वाच्यसिद्ध्यङ्गं लक्षयति—

**वाच्यसिद्ध्यङ्गमेतद्यद्विना वाच्यं न सिध्यति ।**
**भूभृदाभाति काश्मीरपङ्कगैरिकपाटलः ॥**

व्यङ्ग्येन येन विना वाच्यं न सिध्यति तद्वाच्यसिद्ध्यङ्गम् । निरपेक्षवाच्योपस्कारकमपराङ्गम्, सापेक्षवाच्यार्थोपस्कारकं वाच्यसिद्ध्यङ्गमिति विवेकः । अत्र काश्मीरस्य गैरिकत्वेन निरूपणं वाच्यम् । तत्सिद्धौ भूभृत्पदे शब्दशक्तिमूलध्वनि-माहिम्ना प्रतीयमानो भूधरोऽङ्गम् । यथा वा—'भ्रमिमरति-मलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् । मरणं च जल-जभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥'—भ्रमिं शि-रोभ्रमणमरतिं विषयेष्वरुचिमलसहृदयतामालस्यं प्रलयं निश्चे-ष्टतां मूर्च्छां बाह्यज्ञानोपरमं तम आन्तरज्ञानोपरमं शरीरसादं ग्लानिं मरणं च घनभुजगजन्यं विषं जलं वियोगिनां कुरुते । — इत्यत्र जलदस्य भुजगत्वनिरूपणलक्षणं वाच्यं विषपदे भ्रम्यादिकारणगरलप्रतीतिमन्तरेण न सिध्यतीति वाच्यसि-

द्व्यङ्गम्। इदमुदाहरणद्वयमपि कविवाक्यार्थस्यैव कविवाक्यार्थसिद्ध्यङ्गत्वादेकवक्तृगतत्वेन वाच्यसिद्ध्यङ्गम्। कविनिबद्धवक्तृवाक्यार्थस्य कविवाक्यार्थसिद्ध्यङ्गता यथा—'गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते किं त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा। इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसमाश्लिष्यन्पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः॥'—हे अच्युत, तव दर्शनेन तृप्तिरुत्पन्नेति न गच्छामि। किं त्वेवं दृष्ट्वैव विजनस्थयोरावयोः सतोः, हतो दोषैकदृग्जनोऽन्यथावयोः संभोगं संभावयेदित्यन्यत्रगमनाभ्यनुज्ञाप्रार्थनव्याजेन सूचितं यद्वृथावस्थानं संभोगमन्तरेण विफलावस्थितिस्तन्निबन्धनेन खेदेनालसां गोपीमालिङ्ग्य पुलकितो हरिर्युष्मानवतु। —इत्यत्राच्युतादिपदव्यङ्ग्यानामस्खलितत्वादीनां कविनिबद्धवक्तृवाक्यार्थानां वृथावस्थानेत्यादिकविवाक्यार्थसिद्धिं प्रति हेतुत्वाद्वक्त्रन्तरवाक्यार्थस्य वक्त्रन्तरवाक्यार्थसिद्ध्यङ्गत्वाद्वाच्यसिद्ध्यङ्गम्। 'शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योर्थः कविना पुनः। यत्राविष्क्रियते स्वोक्त्या नान्यैवालंकृतिर्ध्वनिः॥' इत्युक्ततयात्र न ध्वनित्वमित्यप्याहुः॥ १५७॥

अस्फुटं लक्षयति—

**स्याद्यत्सहृदयस्यापि दुःखवेद्यं तदस्फुटम्।**

**भूपो गुणाहितप्रीतिर्भुनक्त्यम्बुधिमेखलाम् ॥**

यत्र पोटास्तनसंनिवेशवदनुन्मेषिततया सहृदयानामप्याति-दुःखवेद्यो व्यङ्ग्यस्तत्रास्फुटं नाम गुणीभूतव्यङ्ग्यम् । यथा गुणाहितप्रीतिरिति भीमसेनेनातिप्रसिद्धेन युधिष्ठिरौपम्यं राज्ञि दुःखेन व्यज्यत इत्यस्फुटम् ॥ यथा वा—'अदृष्टे दर्शनोत्कण्ठा दृष्टे विश्लेषभीरुता । नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥'—नायकस्य सौभाग्यं चापलं च प्रकाशयन्त्याः कस्याश्चिदुक्तिरियम् । भवत्यदृष्टे सत्युत्कण्ठोदयान्न सुखं लभ्यते, दृष्टेऽपि झटिति विश्लेषभिया न सुखम् । तदुभयथापि भवता न सुखमिति वाच्योऽर्थः स्फुटः । प्रतीयमानस्तु, अदृष्टश्च यथा न भवसि दृष्टश्च क्षणादेवान्यत्र गत्वा वियोगभयं यथा न जनयसि तथा मत्संनिधावेव सर्वदा स्थातव्यमित्येवंरूपः स्फुटं न प्रतीयते । पूर्वोदाहरणे शब्दशक्तिमूलालंकारध्वनेरस्फुटत्वम्, इह त्वर्थशक्तिमूलवस्तुध्वनेरस्फुटत्वमिति भेदः । इदमेव क्लिष्टमित्यप्याचक्षते ॥ २५८ ॥

अथ संदिग्धप्राधान्यं लक्षयति—

**स्यात्संदिग्धप्रधानत्वं वाच्यात्प्राधान्यसंशये ।**
**त्वामालोक्य रणे वैरी वीक्षते जविनं हयम् ॥**

यत्र वाच्यापेक्षया व्यङ्ग्यस्य प्राधान्यं संदिग्धं तत्र संदिग्धप्राधान्यम् । यथा वेगवत्तुरगावलोकनेन व्यङ्ग्या पलायनेच्छा प्रधानं किं वा भयानकरसस्थायिभूतभयानुभावरूपं वाच्यमेव प्रधानमिति संदेहात्संदिग्धप्राधान्यम् ॥ यथा वा—'हरस्तु किंचित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः । उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥'—चन्द्रोदयसमये यथा जलधिः किंचित्प्रशिथिलधैर्यो भवति तथा मदने गृहीतचापे सति किंचित्प्रशिथिलधैर्यो हरो बिम्बफलसदृशाधरे गौरीमुखे त्रीण्यपि विलोचनानि व्यापारयामास ।—इत्यत्र विलोचनव्यापारेण बिम्बफलाधरोष्ठ इत्युमामुखविशेषणमहिम्ना परिचुम्बितुमैच्छदिति व्यङ्ग्यं रत्यनुभावरूपं विलोचनव्यापरणं वाच्यम् । उभयोः साधकबाधकप्रमाणाभावात्प्राधान्यं संदिग्धम् । येनैव लोचनेन भगवानिक्षुधन्वानं दिधक्षति तेनापि देवीमुखावलोकनमहोत्सवं भावयामासेति वाच्यस्योक्तव्यङ्ग्याच्चात्प्राधान्यसंदेहात्संदिग्धप्राधाम्यमित्यन्ये ॥ २५९ ॥

अथ तुल्यप्राधान्यं लक्षयति—

**वाच्यात्प्राधान्यतौल्ये तु तुल्यप्राधान्यमिष्यते ।**
**जातास्त्वद्वैरिसुदृशां स्मरणीयाञ्जना दृशः ॥**

अत्र वाच्यस्य व्यङ्ग्यस्य च प्राधान्यं तुलाधृतवत्तुल्यमवतिष्ठते तत्र तुल्यप्राधान्यम् यथा वैरिस्त्रीणां दृशः स्मरणीयाञ्जना जाता इति वाच्यस्य वैरिणः सर्वे निपातिता इति व्यङ्ग्यस्य च तुल्यं प्राधान्यम्, स्मरणीयाञ्जना इति वाच्यस्यापि विदग्धोक्तितया चमत्कारजनने व्यङ्ग्यसमशीर्षकत्वात् ॥ यथा वा—'ब्राह्मणाभिभवत्यागो भवतामेव भूतये। जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते ॥'—इदं रावणदूतं प्रति भार्गवस्य प्रतिसंदेशवाक्यम्। ब्राह्मणानां परिभवस्य प्रस्तुतस्य यस्त्यागः परिवर्जनं स भवतां रक्षसामेव श्रेयसे। अन्यथा ब्राह्मणपरिभवात्यागे युष्माकं माहेश्वरत्वप्रत्यासत्त्या मित्रं भवन्नयं जामदग्न्यो दुर्मनायते क्रुद्धो भवतीति वाच्यं विदग्धोक्तिरूपतया ब्राह्मणपरिभवात्यागे जामदग्न्यः क्षत्रियाणामिव रक्षसां सर्वेषामपि क्षयं करिष्यतीति व्यङ्ग्येन चमत्कारजनने समशीर्षिकामारोहतीति तुल्यप्राधान्यम्। केचित्तु रक्षःक्षयलक्षणं व्यङ्ग्यं ब्राह्मणानुसरणं श्रेयस इति वाच्यं च तुल्यमिति तुल्यप्राधान्यमत्रेत्यप्याहुः। अत्र प्राधान्यस्य संदेहसाम्ययोः सहृदया एव प्रमाणम्, व्युत्थितैरन्यथा वक्तुं शक्यत्वादित्याहुः ॥ २६० ॥

अथ काक्वाक्षिप्तं लक्षयति—

**काक्वाक्षिप्तं यत्र साक्षात्काक्वा व्यञ्जकतेष्यते ।**
**मन्ये सा सुभगा मत्तो यां त्वमेवानुधावसि ॥**

यत्र काकुः साक्षादेव व्यञ्जिका तत्र काक्वाक्षिप्तम् । प्रतीयमानो विधिर्वा निषेधो वा काक्वाक्षिप्यते प्रतिक्षिप्यत इत्यन्वर्थता । यथा सा सुभगेत्यत्र काक्वा वाच्यसौभाग्यनिषेधेन नैव सा सुभगेति व्यज्यते ननु 'तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः । विराटस्यावासे स्थितमनुचितारम्भनिभृतं गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥' — इत्यत्रापि काकोर्व्यञ्जकत्वाविशेषात्तत्र कथं प्रधानध्वनिरित्युक्तं तृतीयोल्लास इति चेन्न; तत्र प्रश्नमभिव्यज्य काक्वां विश्रान्तायां तद्वैशिष्ट्यज्ञानवतां सहृदयानां खिन्ने कोपस्यायोग्यत्वात्खिन्न इति पदेन मयि न कोपो युज्यते किं त्वपकारिषु कुरुष्वेव स युक्त इति व्यज्यत इति तत्र न काकोः साक्षाद्व्यञ्जकत्वम्, इह तु तथेति ततो भेदः । न च सा सुभगेति शक्यान्वयस्यायोग्यतया विपरीतलक्षणया न सा सुभगेति प्रतीतिसंभवात्किमित्यत्र काक्वा व्यञ्जकताऽऽश्रीयत इति वाच्यम्, लक्षणया न सा सुभगेत्यंशलाभेऽपि न सुभगैवेत्यवधारणांशो व्यञ्जनाविषय एवेत्याहुः । नन्वेवम् 'निःशेषच्युतचन्दनं स्तनतटं निर्मृ-

ष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे वापीं
स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥' इत्य-
त्रापि वापीं नैव गतासि, किं तु तस्याधमस्यान्तिकमेव
गतासीति काक्वा व्यञ्जनसंभवादुत्तमकाव्यता न स्यादिति
चेन्न; तत्राधमपदेनैव विवक्षितार्थव्यञ्जनसंभवे काक्वा
व्यञ्जकत्वानङ्गीकरात् । यदि च तत्रापि काकोर्व्यञ्जकता
कवेर्विवक्षिता स्यात्तदा मध्यमकाव्यतैवेत्याहुः ॥ यथा वा–
'मथ्नामि कौरवशतं समरे न कोपाद्दुःशासनस्य रुधिरं न
पिबाम्युरस्तः । सचूर्णयामि गदया न सुयोधनोरू संधिं
करोतु भवतां नृपतिः पणेन ॥'— संरब्धस्य भीमसेनस्य
वाक्यमिदम् । कौरवशतं कोपेन युद्धे न मथ्नामि, दुःशा-
सनस्य वक्षसो रुधिरं न पिबामि, सुयोधनस्योरू गदया
न संचूर्णयामि, भवतां न तु मम नृपतिर्युधिष्ठिरः पणेन ।
पञ्चग्राममात्रं प्रतिग्राह्यतया स्वीकृत्येति यावत् । दुर्योध-
नेन संधिं करोतु —इत्यत्र प्रतिनकारं काकुः । तया
मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यो यः प्रतिषेधस्तन्निषेधाशि-
रस्कतयैव प्रतीयते ॥ २६१ ॥

अथासुन्दरं लक्षयति——

**वाच्यान्निकृष्टं व्यङ्ग्यं चेदसुन्दरमितीरितम् ।**
**अतपःक्लेशसुलभं सुकृतं तव दर्शनम् ॥ २६२ ॥**

यत्र व्यङ्ग्यं वाच्यापेक्षया निकर्षशालि, तत्रासुन्दरम् । यथा भवद्दर्शनं तपःक्लेशं विनैव सुलभं सुकृतमिति वाच्यापेक्षया निरतिशयानन्दकरत्वरूपं व्यङ्ग्यं चमत्कारातिशयजनकत्वाभावान्निकर्षशालीत्यसुन्दरम् ॥ यथा वा— 'वाणीरकुडुङ्गुड्डीणसउणिकोलाहलं सुणन्तीए । घरकम्मवावुडाए वहूइ सीअन्ति अङ्गाइँ ॥'— वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वत्याः । गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥ वेतसनिकुञ्जे दत्तसंकेता काचित्तत्रत्यशकुन्तकोलाहलेन तत्र कामुकस्य गमनमनुमाय कार्याक्षमावयवा जातेति वाच्यं कामुको लतागृहं गत इति व्यङ्ग्याच्चमत्काराय कल्पते । अत्र वाच्यस्यैव चमत्कारकारित्वे सहृदया एव प्रमाणम् । अन्ये तु— वाच्यस्याङ्गसादस्यानुभावतया साक्षाद्रसव्यञ्जकतया चमत्कारकारित्वम्, व्यङ्ग्यस्य तु वाच्यं द्वारीकृत्य विलम्बेन रसव्यञ्जकतेति वाच्यापेक्षया निकर्षशालिता— इत्याहुः ॥२६२॥

एवं गुणीभूतव्यङ्ग्यान्युदाहृत्यामीषामपि ध्वनिवद्यथासंभवं भेदा ऊह्या इत्याह—

## एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ॥

चकार एषामित्यनेनान्वेति। एषां गुणीभूतव्यङ्ग्यानां च भेदाः शुद्धाः संकरसंसृष्ट्यायत्ताश्च भेदाः पूर्ववद्ध्वनिवदेव यथासंभवं वेदितव्याः। तत्रागूढप्रस्तावे 'जीवन्न भवामि' इत्यर्थान्तरसंक्रमितवाच्यः, 'उदयाचलचुम्बि' इत्यत्रात्यन्ततिरस्कृतवाच्यः, 'केनाप्यत्र मृगाक्षि' इत्यत्रार्थशक्तिमूलो वस्तुध्वनिश्चोदाहृतः। अपराङ्गप्रस्तावे रसभावरसाभासभावाभासभावशान्तिभावोदयभावसंधिभावशबलता असंलक्ष्यक्रमव्यङ्ग्यप्रभेदा उदाहृताः। तथा 'जनस्थाने भ्रान्तम्—' इत्यत्र शब्दशक्तिमूलानुरणनरूपोऽलंकारध्वनिश्चोदाहृतः। वाच्याङ्गप्रस्तावे 'विषम' इत्यत्र शब्दशक्तिमूलो वस्तुध्वनिश्चोदाहृतः। एवमन्येषां शुद्धभेदानां संकरसंसृष्ट्यायत्तभेदानां चोदाहरणान्यूह्यानि। यत्र वस्तुमात्रेणालंकारो व्यज्यते तत्र न गुणीभूतव्यङ्ग्यतेत्यभिप्रेत्यात्र यथायोगमित्युक्तम्। तदुक्तं ध्वनिकृता—'व्यज्यन्ते वस्तुमात्रेण यदालंकृतयस्तदा। ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात्॥' इति। शब्दशक्तिमूलतयार्थशक्तिमूलतया वा वस्तुमात्रेण यदालंकृतय उपमाद्या व्यज्यन्ते तदा तासामलंकृतीनां ध्वन्यङ्गता ध्वनिप्रभेदतैव न गुणीभूतव्यङ्ग्यता यतो वाच्यकक्ष्याया-

मपि प्रायेण काव्यवृत्तेः काव्यतात्पर्यस्य तदाश्रयता तद्विषयतेति कारिकार्थः । अयं भावः—द्वयमिह चमत्कारप्रयोजकं चित्रत्वं व्यङ्ग्यत्वं चेति । ततश्चालंकारेण वस्तुध्वनौ व्यङ्ग्यत्वविवक्षया ध्वनित्वेऽपि चित्रत्वविवक्षया द्वयोस्तुल्यप्राधान्याद्गुणीभूतव्यङ्ग्यतापि संभवति । तथा वस्तुना वस्तुध्वनौ व्यङ्ग्यत्वविवक्षया ध्वनित्वेऽप्युभयोश्चित्रत्वविवक्षया तुल्यप्राधान्याद्गुणीभूतव्यङ्ग्यतापि संभवति । तथालंकारेणालंकारध्वनौ व्यङ्ग्यत्वविवक्षया ध्वनित्वेऽप्युभयोश्चित्रत्वविवक्षया तुल्यप्राधान्याद्गुणीभूतव्यङ्ग्यतापि संभवति । वस्तुनालंकारध्वनौ तु व्यञ्जकस्य वस्तुनोऽचित्रत्वादव्यङ्ग्यत्वाच्च तुल्यप्राधान्यविवक्षा न संभवतीति न गुणीभूतव्यङ्ग्यतासंभवः, किं तु ध्वनित्वमेवेत्याहुः । शब्दशक्तिमूलानुरणनरूपालंकारध्वनेरिव वस्तुमात्रव्यङ्ग्यालंकारध्वनेरपि वाच्याङ्गताद्यप्राधान्यप्रयोजकसद्भावे गुणीभूतव्यङ्ग्यता संभवत्येवेत्यप्यन्ये ॥ ६३ ॥

एवं गुणीभूतव्यङ्ग्यानामन्योन्यसंकरसंसृष्टयायत्तभेदानुक्त्वा तेषामुपमाद्यलंकारैर्योगेऽपि बहवो भेदा भवन्तीत्याह—

**एषां योगेऽप्यलंकारैर्भेदाः स्युर्बहवस्तथा ॥**

यथा स्वप्रभेदैर्योगे बहवो भेदास्तथालंकारैर्योगेऽपि बहवो भेदा भवन्ति ॥ २६४ ॥

अथालंकारैरलंकारयुक्तैर्गुणीभूतव्यङ्ग्यैश्च त्रिविधेन संकरेण संसृष्ट्या च पूर्वोक्तानां ध्वनिभेदानां योगे त्वनन्ता भेदा भवन्तीत्याह—

**अलंकारैर्गुणीभूतव्यङ्ग्यैश्चालंक्रियान्वितैः ।**
**संसृष्टिसंकरैर्योगे न गण्यन्ते ध्वनेर्भिदाः ॥**

उपमाद्यलंकारैः प्रत्येकं ध्वनिभेदानां योगे तथा शुद्धैः स्वप्रभेदयुक्तैरलंकारयुक्तैश्च गुणीभूतव्यङ्ग्यैस्त्रिरूपेण संकरेण संसृष्ट्या च योगे ध्वनेर्भेदा न गणनापथमवतरन्ति । तदुक्तं ध्वनिकृता—'सगुणीभूतव्यङ्ग्यैः सालंकारैः सह प्रभेदैः स्वैः । संकरसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा ॥' इति । स ध्वनिर्बहुधोद्द्योतत इत्यन्वयः ॥ २६५ ॥

एवमनन्तभेदभिन्नस्यापि ध्वनेर्व्यङ्ग्यत्रैविध्येन त्रैविध्यं संग्रहेण दर्शयति—

**वस्तुध्वनिरलंकारध्वनिर्वाच्येतरध्वनिः ।**
**इति त्रिधोदितोऽनन्तभेदभिन्नोऽप्ययं ध्वनिः ॥**

वाच्येतरे रसभावादयो यद्यपि वस्त्वलंकारयोर्वस्त्वलंकारशब्दवाच्यत्ववद्रसभावादीनामपि तत्तत्पदवाच्यत्वमस्ति, तथा-

पि वस्त्वलंकारौ व्यङ्ग्यावपि कदाचिद्वाक्यार्थप्रतीतिकक्ष्या-मधिरोहतः, रसभावादयस्तु कदापि न वाक्यार्थप्रतीतिक-क्ष्यामधिरोहन्तीति वाच्यभिन्ना इत्युच्यन्ते । ननु 'गतस्ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः शिवः स्वच्छच्छायाकपटघटि-तप्रच्छदपटः । त्वदीयानां भासां प्रतिफलनरागारुणतया शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतुकम् ॥'—हे शिवे विधिविष्णुरुद्रेश्वररूपैश्चतुर्भिः पादैर्भृतः स्वच्छस्वकीय-प्रभाव्याजप्रच्छदपटाच्छादितस्तव मञ्चतां गतः शि-वस्त्वदीयप्रभाप्रतिबिम्बनजनितरागारुणतया मूर्तिमानिव शृङ्गाररसो नयनोत्सवं विधत्ते ।—इत्यादौ शृङ्गारपद-प्रयोगे वाक्यार्थप्रतीतिविषयतापि रसादीनां दृश्यत इति कथं तेषां व्यञ्जनैकविषयतोच्यत इति चेन्न, तत्रापि देवी-रूपविभावादिभिरेव रसाभिव्यक्तिः, विभावाद्यभिव्यक्त-स्यापि रसस्योत्प्रेक्षादिनिष्पादनाय परं शृङ्गारादिपदैरनु-वादः । तदुक्तं ध्वनिकृता—'स्वशब्देन केवलमनूद्यत इति । यदि च शृङ्गारादिपदप्रयोगमात्राद्रसश्चर्व्येत तदा 'शृङ्गारहास्यकरुण—' इत्यादिश्लोकपाठादेव सकलरसच-र्वणाप्रसङ्गः स्यात् । अतः शृङ्गारादिपदप्रयोगेऽपि विभा-वाद्यप्रयोगे रसचर्वणानिष्पत्त्यभावात्तदप्रयोगेऽपि विभा-वादिप्रयोगे तदुत्पत्तेरन्वयव्यतिरेकाभ्यां विभावादिव्यङ्ग्या

एव रसादयः । नन्वेवमपि विभावादिवाचकपदैर्लक्षणयैव रसप्रतीतिरस्तु, कृतमतिरिक्तव्यञ्जनाख्यव्यापारकल्पनयेति चेन्न ; मुख्यार्थबाधाभावात्प्रयोजनाभावाच्च लक्षणायास्तत्राप्रवृत्तेर्गौरवस्य प्रामाणिकतया व्यञ्जनाकल्पनायामदोषात् । किं च न केवलं रसादिप्रतीत्यनुसारेणैव व्यञ्जनाकल्पनम्, किं तु वस्त्वलंकारप्रतीत्यर्थमपि सा कल्पनीया। तथा हि—लक्षणामूलयोरर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्ययोः 'त्वामस्मि वच्मि विदुषां–' 'उपकृतं बहु यत्र किमुच्यते–' इत्यादिकयोः स्वायत्ते शब्दप्रयोगे प्रयोजनमन्तरेणावाचकपदप्रयोगानुपपत्त्या प्रयोजनमवश्यं वाच्यम् । तच्च प्रयोजनरूपं वस्तु व्यञ्जनां विना न प्रतीयेतेति द्वितीयोल्लास एव प्रतिपादितम् । तथा शब्दशक्तिमूलस्थले 'भद्रात्मनो दुरधिरोहतनोः—' इत्यादावप्रकृतं यद्गजादि वस्तु तेन यः प्रकृतस्योपमालंकारश्च ते व्यञ्जनां विना न प्रतीयेते, तत्राभिधायाः प्रकरणेन प्राकरणिकार्थ एव नियन्त्रितत्वेनाप्राकरणिकार्थस्य तेनोपमादेश्चान्यतः प्रतीत्यसंभवात् । अर्थशक्तिमूलस्थलेऽपि व्यञ्जनां विना न गतिः । तथा हि—ये तावदभिहितान्वयमभिदधति भाट्टास्ते किल व्यक्तीनामानन्त्यव्यभिचाराभ्यां न संकेतग्रहविषयता, किं तु जात्यादीनां चतुर्णामेव तद्विषयता, सामान्ये गृहीतशक्तिकानामपि

पदानां समभिव्याहारे सत्याकाङ्क्षायोग्यतासत्तिवशादपदार्थोऽप्यपूर्व एव वाक्यार्थः प्रतीयत इति वदन्ति। तन्मते हि वाक्यार्थस्य घटानयनादिसंसर्गरूपस्यैव नाभिधेयता, का वार्त्ता व्यङ्ग्यस्याभिधेयतायाम्? प्राभाकरास्तु—'देवदत्त गामानय' इत्युत्तमवृद्धवाक्यप्रयोगसमनन्तरं सास्नादिमन्तं पदार्थं प्रयोज्यवृद्धे समानयति सति तटस्थो व्युत्पित्सुस्तदानयनरूपया तच्चेष्टया तस्माद्वाक्यादयमर्थोऽनेनावगत इत्यनुमायाखण्डस्य तस्य वाक्यस्याखण्डे तस्मिन्गवानयनसंसर्गरूपे वाक्यार्थे वाच्यवाचकभावलक्षणं संबन्धमवधारयति। पश्चात् 'चैत्र गां बधान' 'देवदत्ताश्वमानय' इत्यादिप्रयोगेष्वावापोद्वापाभ्यां गवादिपदस्यानयनाद्यन्विते तत्तदर्थे शक्तिमवधारयति। ततश्चान्वयव्यतिरेकाभ्यां प्रवृत्तिनिवृत्त्यन्यतरपरमेव वाक्यं प्रयोगार्हम्, न तु पदमात्रमर्थप्रतीत्यनुपयोगादिति वाक्यगतानामेव पदानामानयनादिपदार्थान्तरान्वितैर्गवादिपदार्थैः सह वाच्यवाचकभावलक्षणसंबन्धेनान्वितानामेव संकेतो गृह्यत इतीतरान्वयविशिष्ट एव पदार्थो वाक्यार्थः, न तु पदार्थानां वैशिष्ट्यम्। ननु 'गामानय' इति वाक्ये गोपदस्यानयनान्विते सास्नादिमत्पिण्डे शक्तिग्रहः; 'गां बधान' इति वाक्ये बन्धनान्विते तादृशि पिण्डे शक्तिग्रह इति नानार्थतापत्तेः सामा-

न्यत इतरान्वितस्वार्थे शक्तिग्रहो वाच्यः, तथा च गोकर्म-कानयनप्रतीतिर्न स्याद्धेत्वभावादिति चेन्न; सामान्यत इत-रान्विते शक्तिग्रहेऽपि वाक्यार्थबोधदशायामानयनादिविशे-षान्वित एव पदार्थोऽवबुध्यते, अन्वितानां पदार्थानां विशे-षरूपत्वात्। उदाहरन्ति च— 'शब्दवृद्धाभिधेयांश्च प्रत्य-क्षेणात्र पश्यति। श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया। अन्यथानुपपत्त्या तु बुध्येच्छक्तिं द्वयाश्रिताम्। अर्थापत्त्येति बुध्येत संबन्धं त्रिप्रमाणकम्॥' इति। शब्दम् 'गामानय' इत्याद्युत्तमवृद्धवाक्यम्, वृद्धं तद्वाक्य-श्रवणानन्तरं प्रवर्तमानं प्रयोज्यवृद्धम्, अभिधेयं तदानीतं गवादिपदार्थं च प्रत्यक्षप्रमाणेन श्रोत्रेण च-क्षुषा च व्युत्पित्सुः पश्यति जानाति। ततश्च श्रोतुः प्रयोज्यवृद्धस्य चेष्टारूपेणानुमानेन लिङ्गेन तद्वाक्यजन्यग-वानयनसंसर्गप्रतीतिमत्त्वं बुध्येत्, संबन्धं विना तस्य वा-क्यस्य तादृगर्थप्रतीतिजनकत्वानुपपत्तेः। अर्थापत्त्यात्मिकया-न्यथानुपपत्त्या द्वयाश्रितां वाच्यवाचकोभयनिष्ठां शक्तिं बुध्येत्। इत्युक्तप्रकारेण त्रिप्रमाणकं प्रत्यक्षानुमानार्थापत्ति-रूपप्रमाणत्रयसापेक्षं शब्दार्थयोः संबन्धं बुध्येतेति कारि-कार्थः। तस्मादितरान्विते पदार्थे शक्तिः। — इत्याहुः। तेषामपि मते सामान्यरूपेतरपदार्थान्वितो विशेषभूतः स्वार्थ

एव संकेतविषय इत्यानयनादिविशेषरूपेतरपदार्थान्वितो गवादिपदार्थोऽतिविशेषभूतो यो वाक्यार्थः स पुनरवाच्य एव, उत्तमवृद्धवाक्यानन्तर्गतत्वेन संकेताविषयत्वात्। व्यङ्ग्यार्थस्तु सुतरामवाच्य एव। यत्र तु 'वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्' इत्यादौ तस्यान्तिकं न गतासीति निषेधरूपो वाक्यार्थः प्रतीयते तत्र व्यङ्ग्यस्य विधेर्वाच्यत्ववार्त्ता दूरेतराम्। एवं चाभिहितान्वयवादेऽनन्वितः पदार्थो वाच्यः, अन्विताभिधानवादे सामान्यत इतरान्वितस्वार्थविशेषो वाच्यः। मतद्वयेऽपि वाक्यार्थस्त्ववाच्य एवेति व्यङ्ग्यस्य वाच्यत्वकथा स्वप्नेऽपि न संगता। प्राभाकरैकदेशिनस्तु— व्यङ्ग्योऽर्थो नैमित्तिकः। शब्दस्तु तत्र निमित्तम्। निमित्तं च नैमित्तिकप्रतीतिमनुत्पाद्य न मध्ये विरमति, नैमित्तिकार्थानुसारेण निमित्तस्य कल्प्यत्वात्। अतः किं वृत्त्यन्तरकल्पनया?—इत्याहुः। तदयुक्तम्। शब्दस्य व्यङ्ग्यार्थं प्रति न तावत्कारकत्वेन निमित्तत्वम्, शब्दस्य घटाद्यर्थं प्रत्यकारकत्वात्। नापि ज्ञापकत्वेन; यद्धि येन नियतसंबन्धवत्तया ज्ञातं तत्तस्य ज्ञापकं भवति, यथा धूमो वह्नेः, न चात्र शब्दस्य व्यङ्ग्येन नियतः संबन्धोऽस्ति। न च संकेत एव तादृशः संबन्ध इति वाच्यम्, तस्य त्वन्मतेऽपीतरान्वितस्वार्थमात्रविषयत्वात्। अतो नियतसंबन्धाग्रहा-

नैमित्तिकप्रतीतिरेव दुर्लभेति नैमित्तिकार्थानुसारेण निमित्तानि कल्प्यानीत्यविचारिताभिधानम् ॥ भट्टलोल्लटप्रभृतयस्तु— यथा किल सकृदेव प्रयुक्तः सायको नोदनाक्रियाविष्टः क्रियावशाद्वेगाविष्टो वेगवशात्पुनश्च क्रियाविष्टः सन्परम्परया शत्रोरुरश्छदमुरश्च भित्त्वा प्राणानपहरतीति तावत्पर्यन्तमिषोर्व्यापारः, तथा शब्दोऽपि सकृत्प्रयुक्तः पदार्थस्मृत्यादिद्वारा परम्परया स्वार्थप्रतिपत्तिमर्थान्तरप्रतीतिं च करोतीति तावत्पर्यन्तः शब्दस्य तात्पर्यरूपो व्यापारोऽस्तीत्यविवादम्, अर्थान्तरे तात्पर्याभावे व्यञ्जनाया अप्यकल्प्यत्वात्। एवं च 'यत्परः शब्दः स शब्दार्थः' इति न्यायात् 'न पुनस्तस्याधमस्यान्तिकम्' इत्यादौ तदन्तिकमेव गतासीति विध्यादिरपि वाच्य एव। — इत्याहुः। तेऽपि 'यत्परः शब्दः—' इति न्यायस्य तात्पर्यानभिज्ञतया देवानांप्रियाः। तथा हि— सायकस्य व्यापारः प्रत्यक्षसिद्धतया न पर्यनुयोज्यः। शब्दस्य तु व्यापारः संकेताद्यौपाधिक इति यत्रैवोपात्तस्य शब्दस्य व्यापारस्तत्रैव तस्य शब्दस्य तात्पर्यं वाच्यम्। अत एव 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यत्र ऋत्विक्प्रचरणस्य चोष्णीषस्य चान्यतः प्राप्तत्वाद्दग्धदहनन्यायेनाप्राप्तं लौहित्यमात्रं विधेयमिति तत्रैव विधेस्तात्पर्यमित्युपात्तशब्दगताभिधारूपव्या-

पारविषय एव तात्पर्यमित्युपात्तशब्दार्थ एव तात्पर्यमुक्तम् । अत एव 'दध्ना जुहोति' इत्यत्र होमस्य 'अग्निहोत्रं जुहोति' इत्यनेन प्राप्तत्वाद्दध्नश्च लोकतः प्राप्तेः कारकत्वमात्रं विधेयमिति तत्रैव विधेस्तात्पर्यमित्युपात्तशब्दार्थ एव कारकत्वे तात्पर्यमुक्तम् । अत एव च लोकेऽपि 'रक्तं पटं वय' इत्यत्र त्रयाणामप्राप्तौ त्रिविधिर्वयनमात्रप्राप्तौ द्विविधिः पटवयनोभयप्राप्तावेकमात्रविधिरित्युपात्तशब्दार्थ एव तत्र तत्र तात्पर्यमुक्तम् । न च लौहित्यादयः सिद्धरूपाः पुरुषप्रवृत्त्यविषयत्वात्कथं विधेया इत्युच्यन्त इति वाच्यम् । भूतानां सिद्धविषयाणां भव्यानां साध्यविषयाणां च शब्दानामुच्चारणे 'भूतं भव्यार्थतयैवोपदिश्यते' इति दध्यादिकारकपदार्थाः क्रियापदार्थैरन्वीयमाना अकिंचित्कुर्वतः कारकत्वासंभवात्प्रधानक्रियानुकूलस्वस्वक्रियाभिरभिसंबद्धास्ताभिरवान्तरक्रियाभिरभिसंबन्धात्साध्यमानतां प्राप्नुवन्तीति सिद्धानामपि न विधेयत्वविरोधः । तस्मादुपात्तशब्दव्यापारविषय एवार्थे तात्पर्यं वाच्यम्, अन्यथा प्रतीतमात्र एव तात्पर्यवर्णने 'पूर्वो भाति' इत्यत्रापरस्मिन्नपि तात्पर्यं स्यात्, पूर्वत्वापरत्वयोर्ह्रस्वत्वदीर्घत्ववदन्योन्यसापेक्षत्वेन पूर्वत्वप्रतीतावपरत्वप्रतीत्यवश्यंभावात् । न चैवं तत्र तात्पर्याभावे व्यञ्जनापि न स्यादि-

त्युक्तमिति वाच्यम् । न हि तत्र तात्पर्यमेव नेत्युच्यते । किं तु तात्पर्यमस्त्येव । तच्च वृत्तिं विना न निर्वहतीति व्यञ्जनावश्यवाच्येत्येवोच्यते न च तर्हि तात्पर्यनिर्वाहाय तत्राभिधैव कल्प्यतामिति वाच्यम्, व्यङ्ग्यार्थे संकेताग्रहेऽपि सहृदयस्य तदर्थप्रतीतेरभिधाया असंभवात् । नन्वेवमुपात्तशब्दार्थ एव तात्पर्ये 'विषं भुङ्क्ष्व, मा चास्य गृहे भुङ्क्थाः' इत्यत्र 'विषं भुङ्क्ष्व' इति वाक्यस्य सुहृद्वाक्यतया विषभक्षणविधिपरत्वासंभवाद्रिपुगृहे न भोक्तव्यमित्यत्र तात्पर्यमिति प्रवादो न स्यात, रिपुगृहभोजनस्योपात्तशब्दार्थत्वाभावादिति चेन्न तत्र हि 'मा चास्य–' इति चकारो वाक्यद्वयस्याप्येकवाक्यतामापादयति, अन्यथा चकारवैयर्थ्यात् । एकवाक्यतायां चैकार्थ्यमावश्यिकम् । न चाख्यातान्तपदवाच्ययोर्भक्षणभोजनयोर्द्वयोरपि प्रधानतयाङ्गाङ्गिभावेनान्वयासंभवात्कथमर्थैकत्वमिति वाच्यम्, तयोः कृदन्तपदवाच्यताकल्पनेन द्विषद्गृहभोजनं विषभक्षणमिति द्विषद्गृहभोजने विषभक्षणत्वारोपेणैकार्थत्वसंभवात् । न च 'मास्य गृहे भुङ्क्थाः' इत्येतावतैव निवृत्तिसिद्धौ विषभक्षणवाक्यं व्यर्थमिति वाच्यम्, द्विषद्गृहभोजनस्याधिकानिष्टसाधनत्वावगमस्यैव तत्फलत्वात् । अतस्तत्राप्येकवाक्यतापन्नपदार्थ एव तात्पर्यमिति न दोषः । यत्र तु

'विषं भुङ्क्ष्व' इत्येतावदेवोच्यते तत्रापि सुहृद्वाक्यस्य विषभक्षणविधायकत्वानुपपत्त्या विषभक्षणादपि द्विषद्गृहभोजनं दुष्टमित्यभिप्रायस्थं वाक्यं कल्प्यत इत्युपस्थितपदार्थ एव तात्पर्यम् । यद्वा विषपदस्य द्विषदन्ने भुङ्क्ष्वेत्यस्य च मा भुङ्क्था इत्यर्थे च लक्षणैव कल्प्यत इति नानुपपत्तिः । प्रकृते च मुख्यार्थबाधाद्यभावान्न लक्षणा युक्तेत्युक्तम् यदि चैवमपि शब्दश्रवणानन्तरं यावानर्थोऽवगम्यते तावति शब्दस्याभिधैव व्यापार इत्युच्यते तदा 'ब्राह्मण पुत्रस्ते जातः' 'ब्राह्मण कन्या ते गर्भिणी' इति वाक्यश्रवणानन्तरं ब्राह्मणे हर्षशोकयोरपि तटस्थेनावगम्यमानत्वात्तयोरपि शब्दस्याभिधाव्यापारः स्यात् । ननु तत्र मुखप्रसादादिलिङ्गप्रतिसन्धाने सति सुखादिप्रतीतेर्नाभिधा, प्रकृते तु न तथेति चेन्न; तर्हि लक्षणापि न स्यात्, लक्षणीयार्थस्यापि दीर्घदीर्घयाभिधयैव प्रतीतिसिद्धेः । ननु तत्र मुख्यार्थबाधादिप्रतिसंधानेनाभिधाया विच्छेदान्न दीर्घदीर्घतरयाभिधया लक्षणीयोपस्थितिसंभव इति लक्षणावश्यकीति चेन्न; तर्हि लक्षणामूलव्यङ्ग्यस्थले व्यञ्जना दुरपह्नवैव स्यादिति कल्प्यत्वात्सैव सर्वत्र व्यङ्ग्यप्रतीतौ हेतुरस्तु, कृतं दीर्घदीर्घाभिधाकल्पनया । किं चैवम् 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति सूत्रे कथं

परस्य परस्य दौर्बल्येऽर्थविप्रकर्षस्य विलम्बेन विनियोजक-त्वस्य हेतुत्वमाह भगवाञ्जैमिनिः, अभिधायाः सर्वत्राविशेषात् श्रुत्यादीनां पारदौर्बल्यप्रकारस्तु शास्त्रदीपिकाव्याख्यायामस्माभिः प्रपञ्चितः ग्रन्थविस्तरभयान्नेह प्रपञ्च्यते।

---

शास्त्रदीपिकायां बलाबलाधिकरणम्।

श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ॥ जै. ३। ३। १४ ॥ इदानीं श्रुत्यादीनामेकविषयसमवायेन विरोधे सति बलाबलं विचार्यते। प्रथमं तावच्छ्रुतिलिङ्गयोश्चिन्त्यते। एवं श्रूयते—'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति। तत्र संशयः— किमिन्द्रस्यैवोपस्थानं कर्तव्यम्,

---

अस्याधिकरणस्य श्रीराजचूडामणिदीक्षितविरचितायाः शास्त्रदीपिकाव्याख्याया भागः॥

'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्।' (जै. ३। ३। १४।) उक्तेषु शेषत्वप्रमाणेषु प्रसङ्गात्तेषां बलाबलं चिन्त्यत इति संगतिमभिप्रेत्याह— इदानीमिति। विरोधेऽपि भिन्नविषयत्वे बलाबलचिन्तानवकाशादेकविषयसमवायेन विरोधे सतीत्युक्तम्। 'व्रीहीन्प्रोक्षति' इत्यत्र व्रीहिस्वरूपार्थे प्रयोजनानवाप्तेः श्रुतेः प्रकरणसापेक्षत्वान्न विरोध इति ध्येयम्। प्रथममिति। तयोरितरप्रमाणोपजीव्यत्वेन प्रथमोपस्थितिसत्त्वादिति भावः। तत्रेति। 'वचनात्त्वयथार्थमैन्द्री स्यात्' (जै. ३। २। ३।) इत्यधिकरणे श्रुत्या गार्हपत्ये विनियोगस्य सिद्धत्वादिह लिङ्ग-

उतेन्द्रस्य वा गार्हपत्यस्य वा, अथ वा समुच्चयः, अथ वा गार्हपत्यस्यैवेति । यदि लिङ्गं बलीयस्तत इन्द्रस्यैवोपस्थानम् । अथ तुल्यबलत्वं ततो विकल्पः । अथ तुल्यबलत्वेऽप्यविरोधस्ततः समुच्चयः । श्रुतिबलीयस्त्वे तु गार्हपत्यस्यैवेति । यः शब्दस्य श्रवणादेव विनियोगः प्रतीयते स श्रौत इत्युच्यते । श्रवणं श्रुतिः । 'गार्हपत्यम्' इति च ब्राह्मणगतद्वितीयान्तशब्दश्रवणादेव गार्हपत्यस्य प्राधान्यमुपस्थानं प्रति गम्यते, ऐन्द्र्याश्च तृतीयान्तायाः करणत्वमिति श्रौतोऽयं विनियोगः । मन्त्रगतात्त्विन्द्रपदादिन्द्रस्वरूपमात्रं श्रुत्यावगम्यते न तु मन्त्रं प्रतीन्द्रस्य प्राधान्यं मन्त्रस्य वा करणत्वं केनचिच्छब्देनोच्यते, किं तु मन्त्रस्ये-

---

स्यापि विकल्पेन समुच्चयेन वा विनियोजकत्वमस्ति न वेत्येतावदेव विचार्यम् अत एव तस्मिन्नधिकरणे 'तदिहास्ति तावद्गार्हपत्ये विनियोग इति स्थितम् । सति च तस्मिंल्लिङ्गादिन्द्रार्थतापि भवति नेति बलाबलाधिकरणे चिन्तयिष्यते ।' इत्याकर एवोक्तमिति ध्येयम् । ननु श्रौतविनियोगेऽपि 'गार्हपत्यम्' इत्यादिद्वितीयादिगताभिधानसामर्थ्यापेक्षास्ति, तथा लैङ्गिकविनियोगेऽपि मन्त्रगतेन्द्रादिशब्दगताभिधानश्रुत्यपेक्षास्तीति श्रौतलैङ्गिकविनियोगविभागायोगात्कथं तन्मूलबलाबलचिन्तेत्यत आह—यः शब्दस्येति । यत्र प्राधान्यमप्राधान्यं वा शब्दगतसामर्थ्यादाहत्यैव प्रतीयते तत्र श्रौतो विनियोगः, यत्र तु शब्दगतसामर्थ्यात्पदार्थमवबुध्य पश्चात्तत्सामर्थ्यालोचनेन शेषत्वबुद्धिस्तत्र लैङ्गिकविनियोग इति विभागसंभवान्न तन्मूलबलाबलचिन्तानवकाश इति भावः । ननु नेदं श्रुतिलिङ्गविरोधस्योदाहरणम्,

न्द्राभिधानसामर्थ्यमालोच्य नूनमनेन मन्त्रेणेन्द्र उपस्थेय इति कल्प्यत इति लिङ्गिकोऽयं विनियोगः। गृह्णीम एतमिन्द्रार्थं लिङ्गादिति। ननु गार्हपत्यार्थत्वं मन्त्रस्य श्रौतम्। कथम्? शेषशेषित्वमात्रं हि श्रुत्यैन्द्रीगार्हपत्ययोरुक्तम्। अन्योन्यविषयनियमस्त्वेकवाक्यतः। 'गार्हपत्यम्' इति हि शेषिनामात्रमनिर्धारितशेषविशेषं श्रुत्योक्तम्, ऐन्द्रीविषयं तु तादिति वाक्यादेवावगन्तव्यम्। तथा 'ऐन्द्र्या' इत्यनवगतशेषिविशेषं शेषत्वमात्रं श्रुतम्, वाक्याद्गार्हपत्यविषयं भवति। यत्तु श्रुत्युपात्तं सामान्यरूपं न तल्लिङ्गेन विरुध्यते। संभवति हि गार्हपत्यस्य कांचिदाग्नेयीं प्रति प्राधान्यमैन्द्र्याश्चेन्द्रं प्रति शेषत्वम्। अन्योन्यान्वयस्तु वाक्यावगतो लिङ्गेन विरुध्यते। तेन लिङ्गवाक्ययोरेव विरोधो न श्रुतिलिङ्गयोः। अत्राभिधीयते—सत्यं वाक्यविरोधोऽस्ति श्रुतिश्चापि विरुध्यते। संहते हि विरुध्येते न तु लिङ्गेन केवले॥ यथैव हि श्रुतिमात्रमविरुद्धमेवं वाक्यमपि श्रुतिमनादृत्या-

---

किं तु लिङ्गवाक्यविरोधस्यैवेदमुदाहरणमित्याशयेन शङ्कते—गृह्णीम एतदिति। शेषेति। 'ऐन्द्र्या' इति तृतीयाश्रुत्या मन्त्रस्य शेषत्वमात्रम् 'गार्हपत्यम्' इति द्वितीयाश्रुत्या गार्हपत्यस्य शेषित्वमात्रं चोक्तम्। गार्हपत्यं प्रत्यैन्द्र्याः शेषत्वमैन्द्रीं च प्रति गार्हपत्यस्य शेषित्वमित्यन्योन्यविषयनियमस्तु पदद्वयसमभिव्याहाररूपाद्वाक्यादेवावगन्तव्य इत्यर्थः। एवमपि लिङ्गवाक्यविरोध एवेदमुदाहरणमिति परमतावधारणं निरस्यति—सत्यमिति। श्रुत्यनादरे लिङ्गस्य वाक्याविरोधमेवोपपादयति— यदीति। गार्हपत्यशब्द-

लोच्यमानमविरुद्धमेव। यदि हि गार्हपत्यशब्द इन्द्रं लक्षयेद्द्वितीया वा सप्तम्यर्थे ततो लिङ्गाविरोधेन गार्हपत्यपदम् 'ऐन्द्र्योपतिष्ठते' इत्येतेनैकवाक्यतां गच्छति। यस्तु द्वितीयान्तगार्हपत्यशब्दश्रवणादेवार्थः प्रतीयते गार्हपत्यप्राधान्यम्, स लिङ्गेन विरुध्यते। अतो न केवलं वाक्यं न केवला श्रुतिर्लिङ्गेन विरुध्यते, वाक्यसहिता तु श्रुतिर्विरुध्यते। कथं पुनरेवमुभयविरोधः सन्नयं श्रुतिविरोध एव व्यवह्रियते, न वाक्यविरोधः? श्रुतेः प्राधान्यात्। विनियोगो हि प्रमेयः। स च साध्यसाधनभावरूपः श्रुत्यवोक्तः। वाक्यं तु प्रतिविशेषसमर्पणेन श्रुति-

---

स्येन्द्रलक्षकत्व ऐन्द्र्यन्द्रमुपतिष्ठत इत्यर्थः पर्यवस्यति, द्वितीयायाः सप्तम्यर्थत्वे च गार्हपत्ये स्थित्वैन्द्र्येन्द्रमुपतिष्ठत इत्यर्थः पर्यवस्यतीत्युभयथापि श्रुत्यनादरे मन्त्रब्राह्मणयोरविरोधान्न लिङ्गवाक्ययोर्विरोधः सिध्यतीत्यर्थः। नन्वेवमपि कथं श्रुतिलिङ्गविरोधोदाहरणत्वनिवारणमिति शङ्कते—**कथं पुनरिति**। सत्यप्युभयविरोधे श्रुतेः प्राधान्याच्छ्रुतिविरोध इत्युच्यते, 'प्रधानेन हि व्यपदेशा भवन्ति' इति न्यायात्; अत एव दीक्षोपसत्सुत्याभिः पञ्चदिनसाध्यस्यापि ज्योतिष्टोमादेः सौम्यस्याह्नः प्रधानत्वादेकाह इति व्यपदेश इत्यभिप्रेत्य परिहरति— **श्रुतेरिति**। प्राधान्यमेवाह— **विनियोगो हीति**। श्रुत्यादिविनियोजकप्रमाणानामिति शेषः। नन्वेवं पदान्तरानर्थक्यमित्यत आह— **वाक्यं त्विति**। 'गार्हपत्यम्' इति द्वितीयाश्रुत्या शेषित्वे बोधिते कं शेषं प्रतीति प्रतियोगिविशेषाकाङ्क्षायां पदान्तरस्य तत्समर्पकतया नानर्थक्यमिति भावः।

मनुगृह्णद्गुणभूतम् । प्रधानेन च विरोधो लक्ष्यते, न गुणेन । अयं चापरो विशेषो येन श्रुतेरेवात्र लिङ्गेन विरोधो न वाक्यस्य । यस्य हि लिङ्गे बलीयसि बाधस्तल्लिङ्गेन विरुध्यते । न ह्यत्र लिङ्गे बलीयसि वाक्यं शक्यते बाधितुम् । तद्बाधे हि पृथक्कृते गार्हपत्यमिन्द्रीमदे न कंचिदर्थं प्रतिपादयतः, पदमात्रस्याप्रामाण्यात् । तत्र श्रुतेरप्यत्यन्तबाधो वाक्यस्य च । यत्र तु

---

लक्ष्यत इति । व्यपादिश्यत इत्यर्थः । इदं च वाक्यविरोधमभ्युपेत्योक्तम्, वस्तुतस्तु स एव नेत्याह—अयं चेति । यत्र हि लिङ्गेन बाधितस्य वाक्यस्य पृथग्वाक्यतामामाद्य भिन्नभिन्नार्थप्रतिपादकतया प्रामाण्यं न विहन्यते, यथा 'स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि' इति मन्त्रस्य लिङ्गात्सदनकरणार्थता प्रतीयते तदुत्तरस्य च 'तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इति मन्त्रस्य लिङ्गात्पुरोडाशप्रतिष्ठापनार्थता 'तस्मिन्' इति प्रकृतसापेक्षेण सर्वनाम्ना च पूर्ववाक्यैकवाक्यता च प्रतीयते, तत्र लिङ्गादेकवाक्यत्वे बाधितेऽपि कल्पयाम्यन्तस्य सदनकरणप्रतिपादकत्वमुत्तरांशस्य च प्रतिष्ठापनप्रतिपादकत्वं च संभवतीति न प्रामाण्यविघातः, तत्र परं लिङ्गाद्वाक्यभेदो न तु लिङ्गबाधितस्य वाक्यस्याप्रामाण्यमपि । प्रकृते च लिङ्गाद्वाक्यबाधे विभक्तस्यैकैकपदत्वेन विशिष्टैकार्थप्रतिपादकत्वासंभवादप्रामाण्यापत्तेस्तद्गतश्रुतेरप्यप्रामाण्यापत्त्या च नेदं लिङ्गवाक्यविरोधस्योदाहरणम्, किंतु श्रुतिलिङ्गविरोधस्यैवेत्यर्थः । यस्येति । अत्र बाध इत्यनन्तरं नाप्रामाण्यमिति शेषः । नन्वशब्दात्मकस्य श्रुतिवन्न स्वतः प्रामा-

पृथग्भूतस्याप्यर्थप्रतिपादकत्वं न विहन्यते यथा स्योनादिषु तत्रैव वाक्यबाधो नैवंजातीयकेषु। ततश्चासंभवति वाक्यस्य बाधे श्रुतिरेव बाध्येनेति श्रुतिलिङ्गयोरेवैष विरोध इति युक्तो विचारः किं बलीय इति, तदर्थं च किं श्रुतिवल्लिङ्गाद्यपि स्वतः प्रमाणमुत श्रुतिकल्पनेनेति। तत्र स्वतः प्रमाणत्वं लिङ्गादेः श्रुतिवन्मतम्। सामर्थ्यालोचनादेव तादर्थ्यं हि प्रतीयते॥ गार्हपत्यार्थता श्रुत्येत्युभयोस्तुल्यकक्षता। तेन द्वयोरुपस्थानं विकल्पेन भविष्यति॥ समुच्चयेन वा मन्त्रः प्रयुज्येत द्वयोरपि। प्रतिप्रधानमावृत्तिर्गुणानां न विरुध्यते॥ यद्यपि स्याद्बलीयस्त्वं

---

ण्यम्, किं तु श्रुतिकल्पनेनैवेत्यत आह—सामर्थ्यालोचनादेवेति। यथा शब्दश्रवणमात्राद्गार्हपत्यार्थता तथा सामर्थ्यालोचनमात्रादेवेन्द्रशेषताप्यवगम्यत इति न लिङ्गस्य शेषत्वबोधने श्रुतिकल्पनमपेक्षितमनुपयोगात्; अतस्तुल्यप्रवृत्तिकत्वेन द्वयोरुपजीव्योपजीवकभावासंभवेन तुल्यबलतया गार्हपत्येन्द्रयोर्विकल्पेनोपस्थानं भविष्यतीत्यर्थः। नन्वेकस्मिन्कार्ये द्वयोः प्रवृत्तावेव विकल्पः, न चेह तथास्तीत्यरुचेराह— समुच्चयेनेति नन्वेवं सकृच्छ्रुतस्य मन्त्रस्यावृत्तिप्रसङ्ग इत्यत आह—प्रतिप्रधानमिति। एवं च सकृच्छ्रुतस्य मन्त्रस्य गौणमुख्यार्थद्वयपरत्वे वृत्तिद्वयविरोध इति निरस्तम्, सकृच्छ्रुतस्यापि विनियोगबलेन प्रयोगवेलायामुच्चारणद्वयाङ्गीकारेणार्थद्वयपरत्वाविरोधादिति ध्येयम्। ननु 'चोदनालक्षणोऽर्थो धर्मः' (जै.१।१।२।) इत्युक्ते शब्दोपस्थापित एवार्थ उपादेयो लिङ्गं तु न शब्द इति शाब्दतासिद्ध्यर्थं विनियोजकश्रुतिकल्पनमाव-

श्रुतेर्लिङ्गात्तथापि तु । अविरोधादन्नाथः स्यात्संभवो हि समुच्चयः ॥ यद्वा सामर्थ्यरूपत्वाल्लिङ्गं स्यात्प्रबलं श्रुतेः । वस्तुशक्त्यनुसारी हि सर्वः शब्दः प्रवर्तते ॥ अत्राभिधीयते सत्यं यद्यत्यन्तमशक्यता । गार्हपत्ये तु सामर्थ्यं गौणं मन्त्रस्य विद्यते ॥ गुणाद्वाप्यभिधानं स्यादित्यत्रैतद्धि साधितम् । तन्न ताव-

---

द्वियकमिति स्वतः प्रामाण्याभावात्कथं तुल्यबलतेत्यरुचेराह—यद्यपीति । श्रुतेर्बलीयस्त्वेऽपि न लिङ्गबाधकता युक्ता भिन्नविषयत्वेनाविरोधात्, अतो जघन्यादपि लिङ्गाच्छेष्यन्तरशेषतापि स्यात् । अन्यथा 'बर्हिर्देवसदनं दामि' इत्यादावपि लिङ्गस्य प्रामाण्यं न स्यात् । न हि किंचित्क्वचित्प्रमाणं क्वचिन्नेति संभवति, प्रमाजननशक्तेरौत्पत्तिकत्वेन कदाचित्क्वचित्तदपायस्य शङ्कितुमशक्यत्वादिति भावः । यद्वेति । सामर्थ्यानुसारेणैव विनियोगस्य वाच्यतया श्रुतिं प्रत्युपजीव्यत्वेन लिङ्गमेव बलवदित्यर्थः । स्यादेतदेवं यदि सामर्थ्यकल्पनानन्तरमेव श्रुतेर्विनियोजकता स्यात् । किं तु विनियोगोत्तरकालमेव कथमेतत्साधयिष्यतीत्याकाङ्क्षायां सामर्थ्यं कल्प्यते । न च कथं प्रागविद्यमानस्य सामर्थ्यस्य विनियोगोत्तरकालं कल्पनेति वाच्यम् । प्रागपि विद्यत एव सामर्थ्यम् । तच्चानुपयोगात्प्रागनवगतम् । पश्चात्तु श्रौतविनियोगनिर्वाहार्थं तस्याविर्भावः कल्प्यते । तदुक्तम् 'वचनात्त्वयथार्थम्—' (जै. ३ । २ । ३ ।) इत्यधिकरणे गुणसूत्रे 'गुणाद्वाप्यभिधानं स्यात्—' (जै. ३ । २ । ४ ।) इत्यत्र । अतो न लिङ्गबलीयस्त्वमिति सिद्धान्तयति—अत्राभिधीयत इति । नन्वेवं श्रुतिलिङ्गयोरप्रत्यक्षकल्पनासाम्यात्तौल्यमेवेत्यत

द्रलीयस्त्वं लिङ्गस्य न च तुल्यता ॥ विनियोगः श्रुतेः पार्श्वे लिङ्गस्यारादसौ स्थितः ॥ यावदेव हि मन्त्रार्थो मन्त्रेण प्रतिपाद्यते। तावदेव श्रुतिर्मन्त्रं गार्हपत्याह्रतां नयेत् ॥ मन्त्रार्थं मन्त्रतो बुद्ध्वा पश्चाच्छक्तिं निरूप्य च। मन्त्राकाङ्क्षावशेनेन्द्र-

---

आह— न च तुल्येति। येन हि कल्पनेन सह प्रस्थितयोः प्रमाणयोः प्रमेयदेशप्राप्तौ विलम्बो भवति तदेव दौर्बल्यापादकं नान्यत्। ततश्च लिङ्गेन हि श्रुत्यनुमानं विना विनियोगासंभवात्प्रागेव प्रवर्तमानमनुमानं प्रमाणस्य प्रमेयभूतविनियोगबोधने विप्रकर्षमापादयति, श्रुतौ त्ववगते विनियोगे पश्चात्प्रवर्तमानं सामर्थ्यानुमानं स्वप्रमेयबोधने न विप्रकर्षं करिष्यतीति न तौल्यमिति भावः। पार्श्वे समीपे। आरात् दूर इत्यर्थः। ननु श्रुतिलिङ्गयोर्विनियोगेऽपि तौल्यमित्युक्तमित्यत आह— यावदिति। श्रुतेः संनिकर्षं प्रतिपाद्य लिङ्गस्य विप्रकर्षमुपपादयति—मन्त्रार्थमिति। न हि मन्त्रवर्णमात्रेणैवैन्द्या इन्द्रशेषता प्रतीयते, किं तु मन्त्रेण मन्त्रार्थमवबुध्य मन्त्रस्य कैमर्थक्याकाङ्क्षायामिन्द्रप्रकाशनसमर्थोऽयं मन्त्र इन्द्रोपस्थाने विनियोगयोग्य इति मन्त्रसामर्थ्यं निरूप्य पश्चादिन्द्रशेषत्वस्य बोधनायैन्द्र्येन्द्रमुपतिष्ठत इति श्रुतिकल्पनमित्यर्थः। न चैवमपि शेषत्वस्यैव कल्पनमस्तु न श्रुतेरिति वाच्यम्, 'चोदनालक्षणोऽर्थो धर्मः' (जै. १।१।२।) इति धर्मस्य शब्दैकप्रमाणत्वोक्त्या श्रुतिकल्पनावश्यंभावात्। न च तथापि लैङ्गिकस्य शेषत्वस्य प्रयोगविधिविधेयतया शाब्दतासिद्धिः, अत एव पूर्वाधिकरणे 'समाख्यया च मिथः पर्युपस्थापितानां योग्यतया क्रिया-

कर्तृसंबन्धमेव प्रयोगविधिर्विधत्ते’ इत्याकर एव समाख्यानिमित्तस्य शेषत्वस्य प्रयोगविधिविधेयतायै शाब्दतोक्ता, तथा च विनियोजकश्रुत्यनुमानेनानुमितायामपि श्रुत्यां प्रयोगविध्यनुप्रवेशव्यतिरेकेण प्रवर्तकत्वायोगात्तस्यैव सर्वत्र प्रवर्तकत्वमिति वाच्यम्; तथापि वाक्यार्थप्रतीतिदशायामेव श्रौतविनियोगप्रतीतिः, इह तु मन्त्रेण मन्त्रार्थं बुद्ध्वा मन्त्रस्य कैमर्थक्याकाङ्क्षायां सामर्थ्यालोचनेन विनियोगविधिरित्यस्ति विप्रकर्ष इत्येके। प्रातिस्विकविधिकल्पने तेनैवाज्ञातज्ञापने कृते प्रयोगविधिनानुष्ठापनमात्रसंभवाल्लाघवम् अन्यथा प्रयोगविधेरेवाज्ञातज्ञापने, अनुष्ठापने च व्यापारो वाच्य इति गौरवम्। अत एव विशिष्टविधिस्थले विशेषणविधिकल्पनम्। अन्यथा विशिष्टविध्याक्षिप्तस्य विशेषणस्य प्रयोगविध्यनुप्रवेशादेवानुष्ठानोपपत्तेर्विशेषणविधिर्न पृथक्कल्प्येतेत्यन्ये। साङ्गे कर्मण्यनुष्ठापको विधिः प्रयोगविधिः; ततश्चाङ्गस्य सत एव प्रयोगविध्यनुप्रवेशः। अङ्गत्वं च ‘नाविहितमङ्गं भवति’ इति न्यायाद्विधानसापेक्षमित्यङ्गत्वसिद्ध्यर्थं लैङ्गिकस्य शेषत्वस्य कल्पितश्रुतिविधेयत्वमाश्रयणीयमित्यपरे। नन्वेवमपि श्रुतिप्रवृत्तिदशायां लिङ्गस्याप्रवृत्तत्वेन न श्रुतेर्लिङ्गबाधकत्वम्, प्रत्युत लिङ्गस्यैव प्रथमप्रवृत्तश्रुत्यनुपमर्दे स्वात्मलाभासंभवाच्छ्रुतिबाधकत्वमित्याशङ्क्य, लिङ्गस्य श्रुत्या बाधो हि ‘नेदं रजतम्’ इत्यादाविव न विषयापहारः, किं तु कल्पनामूलभूताकाङ्क्षोच्छेदनेन कल्प्यप्रमाणप्रवृत्तिप्रतिबन्ध एवेति लिङ्गस्याप्रवृत्तावपि तत्प्रवृत्तिप्रतिबन्धकतया श्रुतेस्तद्बाधकत्वं विरोधः; नापि वैपरीत्यशङ्का, श्रुतिप्रवृत्तिदशायां लिङ्गप्रवृत्तेरेवाभावादित्य-

शेषत्वे श्रुतिकल्पना ॥ श्रुत्या प्रत्यक्षया पूर्वं गार्हपत्याङ्गतां गते।
निराकाङ्क्षीकृते मन्त्रे निर्मूला श्रुतिकल्पना ॥ तेन शीघ्र-
प्रवर्तिन्या श्रुत्या लिङ्गस्य बाधनम् ॥ प्रत्यक्षे चानुमाने च यथा
लोके बलाबलम् । शीघ्रमन्थरवृत्तित्वात्तथेह श्रुतिलिङ्गयोः ॥
अविरोधादबाधो यो वर्णितः स न युज्यते । लिङ्गस्य हि प्रमा-
णत्वं मन्त्राकाङ्क्षानिबन्धनम् । तां च श्रुतिर्निकृन्तन्ती नाविरो-
धेन गच्छति ॥ विरोधे च श्रुतेर्लिङ्गं बलीयस्त्वेन बाध्यते ॥

---

भिप्रेत्याह—श्रुत्या प्रत्यक्षयेति । श्रुतिलिङ्गयोः शीघ्रमन्दप्रवृत्तिक-
तयोक्ते प्राबल्यदौर्बल्ये दृष्टान्तकथनेन द्रढयति—प्रत्यक्षे चेति ।
यदपि भिन्नविषयत्वादविरोधेन लिङ्गस्यापि विनियोजकत्वमुक्तं तद-
प्यत एव निरस्तमित्याह— अविरोधादिति । विषयापहार इव
मूलोच्छेदनेऽपि विरोधस्यावर्जनीयत्वादिति भावः । उपसंहरति—
विरोधे चेति । एवं शब्दसामर्थ्यात्मकस्य लिङ्गस्य श्रुत्या विरोधे
श्रुतिप्राबल्यमुक्तम् । अर्थसामर्थ्यात्मकस्य श्रुतिविरोधे श्रुतिप्राबल्यम्
'विहारो लौकिकानामर्थं साधयेत्प्रभुत्वात्' (जै. १२ । २ । १ ।)
इति द्वादशाधिकरणे स्थापितम् । तत्र हि गार्हपत्यादयः सामर्थ्या-
त्पाकादिलौकिककार्याणामप्यङ्गमिति प्राप्य 'गार्हपत्ये हवींषि
श्रपयति' इत्यादिवचनेनैव प्रयोजनाकाङ्क्षाशान्तेर्लौकिककार्यार्थता
सामर्थ्यान्न कल्पयितुं युक्तेति सिद्धान्तितम् । तथा स्फ्याधिकरणेऽपि
'स्फ्येन वेदिमुद्धन्ति' इत्यादिवचनैः स्फ्यादीनामाकाङ्क्षाशा-
न्तेर्नार्थसामर्थ्याद्यवच्छिन्नार्थतेति सिद्धान्तितत्वात्तदप्यर्थसामर्थ्याच्छ्रुतेः
प्राबल्य उदाहार्यम् । एवं श्रुतेर्वाक्याद्यपेक्षया प्राबल्येऽप्युदाहार्यम् ।

तत्र 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इत्यत्र सामानाधिकरण्यरूपवाक्येनारुण्यस्यैकहायनीशेषत्वप्राप्तौ तृतीयाश्रुत्या तद्बाधेन क्रयशेषताऽऽपाद्यते। तथा 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इत्यत्र द्वादशोपसत्तायाः प्रकरणाज्ज्योतिष्टोमाङ्गत्वप्राप्तावहीनश्रुत्या प्रकरणबाधेन द्वादशाहाद्यङ्गतावसीयते। तथा ज्योतिष्टोमेऽग्नीषोमीयपशुस्थाने रशना तद्धर्माश्चाम्नाताः 'त्रिवृद्भवति' 'दर्भमयी भवति' इत्यादिना। तेषां च स्थानप्रमाणादग्नीषोमीयाङ्गत्वे प्राप्ते, 'रशनया यूपं परिव्ययति' इति श्रुत्या रशनाया यूपसंबन्धिपरिव्याणाङ्गता। तथा सवनीयपरिव्याणस्याप्येतद्यूपसंबन्धित्वात्तद्द्वारा सवनीयार्थतापीति श्रुत्या समाख्याबाध इत्याद्यूह्यम्। इदं च श्रुतेः प्राबल्यमौत्सर्गिकम्। तदपवादश्च तत्र तत्र दृश्यते। तथा हि— 'स्रुवेणावद्यति' इत्यादौ तृतीयाश्रुत्या स्रुवादेरवदानसामान्यार्थत्वप्राप्तावपि स्रुवादीनां मांसाद्यवदाने कथंचिदपि सामर्थ्याभावात्सामर्थ्यरूपलिङ्गानुरोधेन द्रवद्रव्याद्यवदानविषयतया श्रुतेः संकोचो दृश्यते। तथा 'स्वर्गकामो यजेत' इत्यत्र पुरुषार्थभाव्याकाङ्क्षिण्यां भावनायां समानपदश्रुत्युपात्तस्यापि यागस्यान्वयायोग्यत्वाद्भिन्नपदोपात्ततया वाक्यप्रमाणकस्य स्वर्गस्यैव भाव्यतयान्वय इति वाक्याच्छ्रुतिबाधो दृश्यते। तथा 'आग्नेय्याग्नीध्रमुपतिष्ठते' इत्यत्र श्रुत्याऽऽग्नेयीमात्रस्योपस्थानाङ्गत्वप्राप्तावप्रकृतानामाग्नेयीनां ग्रहणे श्रुतिसिद्धमाग्नीध्रोपस्थानाङ्गत्वं प्रकरणकल्पितं च क्रतूपकारकत्वमुभयमप्याग्नेय्या क्रतुं प्रत्याग्नीध्रोपस्थानव्यापारं कुर्यादित्यनेनैव विधिना विधेयमिति विधिगौरवात्प्रकृतानामेव ग्रहणम्। तथा सति

लिङ्गवाक्यविरोधे— 'स्योनं ते सदनं करोमि, घृतस्य धारया सुशेवं कल्पयामि, तस्मिन्सीदामृते प्रतितिष्ठ, व्रीहीणां मेध सुमनस्यमानः' इति । तत्र संदेहः— किं सकलोऽयं सदनकरणे पुरोडाशप्रतिष्ठापने च विकल्पेन समुच्चयेन वा प्रयोक्तव्यः, उत सकलो वा विभज्य वा, अथ वा विभज्यैव

---

प्रागेव क्रतुगतो व्यापारः कर्तव्यत्वेनावधारित इति तस्य व्यापारस्याग्नीध्रोपस्थानात्मकविशेषरूपत्वमेव, य आग्नेय्या क्रतौ व्यापारः कर्तव्यः स आग्नीध्रोपस्थानरूप इति विधीयत इति विधिलाघवात् । अतस्तत्र प्रकरणानुरोधेन श्रुतेः संकोचो दृश्यते । तथा 'एका देया षड्देया द्वादश देयाश्चतुर्विंशतिर्देयाः शतं देयं सहस्रं देयमपरिमितं देयम्' इत्याधाने दक्षिणाकल्पभेदश्रुतावपरिमितशब्दस्य बहुत्वसामान्ये शक्तस्याविशेषेण यत्किंचिद्बहुत्वपरत्वप्राप्तावपरिमितश्रुतेः प्रतियोगिसव्यपेक्षार्थकत्वात्सहस्रसंनिधानेन सहस्राधिकबहुत्वपरतया संकोचो दृश्यते । तथा यजमानचमसादौ समाख्यया यजमानस्य भक्षणशेषता प्राप्ता । 'वषट्कर्तुः प्रथमभक्षः' इति षष्ठीश्रुत्या वषट्कर्तुर्होतुरपि प्राथम्यविशिष्टभक्षणशेषता प्राप्ता । तत्र समाख्यायाः स्वतो दुर्बलत्वेऽपि निरवकाशत्वात्समाख्यानिमित्तकभक्षणानुरोधेन वषट्कारनिमित्तकभक्षणस्यैकदेशविषयत्वं वाच्यमिति समाख्यानुरोधेन श्रुतेः संकोचो दृश्यत इत्याद्यन्यत्र विस्तरः ।

स्योनं त इति । हे पुरोडाश, ते स्योनं समीचीनं सदनमाश्रयं करोमि, घृतस्य धारया सुशेवं सुखसेव्यं च कल्पयामि, हे व्रीहीणां मेध सारभूत, सुमनस्यमानः सुमना भूत्वामृते विनाशरहिते तस्मि-

स्योनादिः कल्पयाम्यन्तः सदनकरणे 'तस्मिन्सीद —' इति प्रतिष्ठापन इति। तत्र यदि वाक्यं बलीयः सकल एवोभयत्र। तुल्यबलत्वे सकलो वा विभज्य वा। लिङ्गबलीयस्त्वे तु विभज्यैवेति। तत्र, यावन्ति हि प्रयुज्यन्ते पदानि सति संभवे। तेषां स्यादेकवाक्यत्वं वाक्यभेदो न युज्यते॥ तस्मिन्सीदेति पूर्वोक्तसापेक्षत्वाच्च गम्यते। वाक्यैकत्वमतः सर्व उभयत्र प्रयु-

---

न्सदने सीदोपविश प्रतितिष्ठ स्थिरश्च भवेत्यर्थः। उत सकलो वेति। उभयत्र सकल एव प्रयोक्तव्य इति न नियमः, किंतूभयत्र सकलो वा प्रयोक्तव्यः, कल्पयाम्यन्तः सदनकरण उत्तरांशः प्रतिष्ठापन इति विभज्य वा प्रयोज्य इत्यनियमो वेत्यर्थः। किं वाक्यं बलीयः किं वा लिङ्गवाक्ययोस्तुल्यबलत्वमथ वा लिङ्गमेव बलीय इति तदर्थसंशयं मनसि निधाय फलफलिभावमाह— यदि वाक्यमिति। एकवाक्यत्वमिति। संभूयैकार्थप्रतिपादकत्वमित्यर्थः। ततश्चानुष्ठेयार्थप्रकाशनसामर्थ्यमालोच्य लिङ्गात्पश्चाद्भवन्विनियोगः प्रथमप्रतीतैकवाक्यतानुरोधादेव भवतीति सर्वमुभयत्रैव प्रयोज्यम्। न चैवमन्यविषयलिङ्गकस्य मन्त्रस्यान्यत्रासामर्थ्यात्कथं विनियोग इति वाच्यम्; अन्यलिङ्गकस्यापि स्वार्थविशिष्टतयार्थान्तरप्रकाशने लाक्षणिकसामर्थ्यसत्त्वात्, अन्यथा साक्षादनुष्ठेयार्थप्रकाशनासमर्थस्य 'स्योनं ते–' इत्यादिपदजातस्य विनियोगो न स्यादिति भावः। तस्मिन्निति। 'तस्मिन्' इति सर्वनाम्नो विशेषपर्यवसानाय पूर्वप्रकृतसदनसापेक्षत्वाच्च तदेकवाक्यत्वं गम्यत इत्यर्थः। ननु लिङ्गस्य श्रुत्येव वाक्येनापि बाध एव युक्त इति

च्यते ॥ यद्वा तुल्यबलत्वं स्यादुभयोर्लिङ्गवाक्ययोः । श्रुत्या प्रत्यक्षया लिङ्गं कल्प्यश्रुतिनिराकृतम् ॥ कल्प्यश्रुतित्वमिह तु समानमुभयोरपि । तेन तुल्यबलत्वं स्यादिति प्राप्तेऽभिधीयते ॥ सत्यं कल्प्या श्रुतिः किं तु लिङ्गादह्नाय कल्प्यते । वाक्येन प्रथमं लिङ्गं कल्पयित्वा ततः श्रुतिः । कल्पनीयेत्यतो वाक्याच्छ्रुत्यर्थो विप्रकृष्यते ॥ संनिकृष्टस्तु लिङ्गस्य तेनैतत्प्रबलं ततः ॥ 'स्योनं ते सदनं करोमि' इत्यस्य हि सदनकरणसामर्थ्यमन्यानपेक्षं स्वरूपत एव प्रत्यक्षमवगम्यते । ततश्च तत्र

---

कथं तुल्यबलतेत्यत आह— श्रुत्येति । कल्प्यश्रुतीति च्छेदः । न हि विनियोगे विप्रकृष्टं लिङ्गं संनिकृष्टया श्रुत्या बाधितमिति विप्रकर्षसाम्ये वाक्येनापि तस्य बाधो युक्त इति भावः । स्यादेवं वाक्यस्य लिङ्गापेक्षया प्राबल्यं तुल्यबलत्वं वा यदि वाक्यं लिङ्गानपेक्षमेव श्रुतिं कल्पयेत् । न चैवम् । न ह्येकवाक्यतामात्रेण तत्प्रकाशनसामर्थ्यं परिकल्प्य श्रुतिकल्पनं शक्यम् । ततश्च यावद्धि वाक्यमेकत्र लिङ्गं कल्पयेत्तावदपरत्र विद्यमानं लिङ्गं श्रुतिं कल्पयेत्, यावच्चैकत्र कल्पितं लिङ्गं श्रुतिं कल्पयेत्तावदपरत्र श्रुतिर्विनियुञ्जीत । ततश्च विनियोगे जाते कल्पितापि श्रुतिर्मन्त्रस्य नैराकाङ्क्ष्यान्न विनियुञ्जीतेति लिङ्गकल्पितश्रुत्यैवैकांशस्य विनियोगे सति मन्त्रस्य प्रकरणाम्नानक्रमर्थक्याकाङ्क्षाशान्तेर्न वाक्यकल्पितलिङ्गकल्पिता श्रुतिर्विनियोजिका । ततश्च प्रथमोत्पन्नाप्येकवाक्यताधीराभावीभवतीति लिङ्गेन वाक्यबाध इत्यभिप्रेत्य सिद्धान्तयति— सत्यमिति । श्रुत्यर्थ इति । विनियोग

श्रुतिमनुमाय शीघ्रं विनियुज्यते। पुरोडाशप्रतिष्ठापने त्वस्य न स्वरूपतः सामर्थ्यं गम्यते। 'तस्मिन्सीद' इत्यनेन प्रतिष्ठापनमुच्यते। तदेकवाक्यतापेक्षया तु पूर्वार्धस्यापि स्वार्थविशिष्टपुरोडाशप्रतिष्ठापनसामर्थ्यं लाक्षणिकं कल्पयित्वा ततः श्रुतिकल्पनमिति विप्रकर्षान्न तत्र विनियुज्यते। एवम् 'तस्मिन्सीद' इत्यस्यापि स्वार्थे सामर्थ्यं क्लृप्तमिति तत्रैव विनियोगो न सदनकरणे, कल्प्यसामर्थ्यत्वात्। एवमर्थभेदेन नानावाक्यत्वोप-

---

इत्यर्थः। **अन्यानपेक्षमिति**। एकवाक्यतानपेक्षमित्यर्थः। यदप्याकाङ्क्षावशादेकवाक्यत्वमुक्तं तदपि निरस्यति— **एवमर्थभेदे-नेति**। एवं चार्थैकत्वे सति विभज्यमानसाकाङ्क्षत्वमेवैकवाक्यताप्रयोजकं न त्वाकाङ्क्षामात्रमिति भावः। नन्वेवं सति 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इत्यादौ 'अग्नये जुष्टं निर्वपामि' इत्यंशस्यैव निर्वापप्रकाशने क्लृप्तसामर्थ्यत्वेन निर्वापे शीघ्रं विनियोगात् 'देवस्य त्वा—' इत्यादिपदानां दृश्यमानैकवाक्यताबलेन स्वार्थविशिष्टनिर्वापप्रकाशनसामर्थ्यं कल्पयित्वा तत्रैव निर्वापे विनियोगो न स्यादिति चेन्न। यदि ह्यसमवेतार्थवचनानि 'देवस्य त्वा–' इत्यादिपदानि पृथक्क्रियन्ते तदानर्थकानि स्युः, ततश्च क्लृप्तसामर्थ्यैः 'अग्नये जुष्टम्–' इत्यादिपदैरेव निर्वापस्यानुष्ठीयमानस्य स्मारकाकाङ्क्षानिवृत्तावपि 'देवस्य त्वा–' इत्यादिपदानां साकाङ्क्षत्वात्स्वार्थविशिष्टनिर्वापप्रकाशनसामर्थ्यकल्पनया प्रतीयमानैकवाक्यत्वसमर्थनमेव युक्तम्, न तु तद्बाधनम्, 'आनर्थक्यप्रतिहतानां विपरीतं बला-

नलम्' इति न्यायात् । अत एव 'व्रीहीन्प्रोक्षति' इत्यादौ प्रोक्षणादीनां श्रुतिप्रतिपन्नव्रीह्याद्यर्थत्वमतिलङ्घ्य प्रकरणलभ्यापूर्वसाधनविशेषार्थत्वमाश्रीयते । प्रकृते तु स्वार्थविशिष्टार्थप्रकाशनसामर्थ्याकल्पनेऽपि सदनकरणप्रतिष्ठापनरूपप्रत्येकार्थप्रकाशकत्वेनैवार्थवत्त्वोपपत्तेरानर्थक्याभावान्न लाक्षणिकसामर्थ्यकल्पनेनैकवाक्यतासमर्थनं युक्तमिति ध्येयम् । इदं च शब्दसामर्थ्यरूपस्य लिङ्गस्य वाक्यविरोध उदाहरणम् । अर्थसामर्थ्यरूपलिङ्गविरोधे तु 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वाक्यादन्धादिसाधारण्येन स्वर्गकामनायामस्याधिकारप्रतीतावपि साङ्गस्य क्रतोः पुरुषैः संबन्धाद्दीक्षणीयाद्यङ्गभूताज्यावेक्षणादावन्धादीनामसामर्थ्यादन्धादिव्यतिरिक्तानामेवाधिकार इति वाक्यसंकोचः षष्ठे दर्शित इति दिक् । एवं लिङ्गस्य प्रकरणादिविरोधेऽपि प्राबल्यमुदाहार्यम् । तत्र 'पूष्णोऽहं देवयज्यया—' इत्यादिपूषानुवचनमन्त्रस्य प्रकरणावगतं दर्शपूर्णमासार्थत्वं बाधित्वा लिङ्गादुत्कर्षेण पूषदेवत्ययागार्थतावसीयत इति लिङ्गात्प्रकरणबाधः । तथा 'नानुपहूतेन सोमः पातव्यः' इति वचनादनुज्ञातेनैव सोमस्य पातव्यत्वात्पूर्वभाविन्यनुज्ञापने प्रथमपठितस्य 'उपहूत—' इति मन्त्रस्य पश्चात्तन्यामनुज्ञायां पश्चात्पठितस्य 'उपह्वयस्व—' इति मन्त्रस्य स्थानप्रमाणादङ्गत्वप्राप्तौ लिङ्गात्तद्बाधेन वैपरीत्येन विनियोगाल्लिङ्गात्स्थानबाधः । तथा 'अग्नीदग्नीन्विहर' इत्यादिप्रैषार्था अग्निविहरणादयः समाख्याबलादध्वर्युणैव कर्तव्या इति प्राप्तौ 'अग्नीत्' इति संबोधनस्य 'विहर' इति मध्यमपुरुषस्य च प्रैषकर्तुरध्वर्योः स्वातन्त्र्यसंभवाल्लिङ्गेन समाख्यां बाधि-

गमान्नैकवाक्यतासंभवः। तस्माद्विभज्य विनियोगः॥ वाक्यप्रकरणविनियोगे चिन्त्यते— दर्शपूर्णमासे सूक्तवाकनिगदः। तत्र 'अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्, इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्रा

---

त्वाऽऽग्नीध्रेण कर्तव्या इति व्यवस्थापनाल्लिङ्गेन समाख्याबाधोऽप्युदाहार्य इति दिक्। लिङ्गस्यापि वाक्याद्यपेक्षया प्राबल्यमौत्सर्गिकमेव। तत्र वाक्यस्य लिङ्गात्प्राबल्यम् 'देवस्य त्वा सवितुः प्रसवे–' इति निर्वापमन्त्रे प्रदर्शितम्। एवमेकपाशुकाग्नीषोमीयप्रकरणाम्नातस्य 'अदितिः पाशान्प्रमुमोक्तु' इति मन्त्रस्य बहुवचनलिङ्गाद्बहुपाशुकेषूत्कर्षप्राप्तौ प्रथमश्रुतप्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य च कारकस्य प्रकृतौ संभवादप्रधानबहुत्वलिङ्गमात्रादुत्कर्षो न युक्त इति लिङ्गात्प्रकरणस्य प्राबल्यम्। तथा दर्शपूर्णमासयोः 'अग्निर्वृत्राणि जङ्घनत्' इति मन्त्रस्य 'अग्निर्मूर्धा–' इति मन्त्रस्य चाऽऽज्यभागभूताग्नेये प्रधानभूताग्नेये च लिङ्गाविशेषादनियमेन प्राप्तौ क्रमान्नियमः क्रियत इति क्रमाल्लिङ्गसंकोचः। तथा काम्येष्टियाज्यानुवाक्याकाण्डे पठितानामाग्नेयमन्त्राणां समाख्यानुरोधेन काम्येष्टिकाण्डाम्नाताग्नेययागे याज्यानुवाक्ययैव विनियोगो न तु लिङ्गादपि सामिधेन्यादाविति समाख्यानुरोधेन लिङ्गसंकोचश्चेत्याद्यन्यत्र विस्तरः। सूक्तवाकाधिकरणेऽपि 'अग्नीषोमाविदं हविरजुषेताम्' इत्यस्यैव मन्त्रस्य विषयत्वात्पौनरुक्त्यमाशङ्क्य, तत्र हि 'अग्नीषोमौ' इत्ययमंशः पौर्णमास्यां प्रयोक्तव्यः 'इन्द्राग्नी' इत्ययमंशोऽमावास्यायामित्युक्तम्; अत्र त्वग्नीषोमादिपदयोर्वृत्तरांशौ 'इदं हविरजु-

ताम्' इत्यादि श्रुतम्। तत्राग्नीषोमादिदेवतापदं लिङ्गात्पर्वद्वये विनिष्कृष्य प्रयोक्तव्यमिति स्थितम्। तदेकवाक्यभूतानि 'इदं हविरजुषेताम्—' इत्यादीनि यानि तानि ततो विच्छिद्यान्यत्रापि किं प्रकरणाविशेषात्प्रयोज्येरन्, उत देवतापदैनैकवाक्यतया तद्वदेव व्यवस्थितानीति। नन्वारादुपकारकाणामेव प्रकरणं विनियोजकं न तु संनिपातिनाम्। असंयुक्तं प्रकरणादिति ह्युक्तम्। संनिपातिनश्च सर्वे श्रुत्यादीनामन्यतमेन संयुक्ता भवन्ति। संनिपाती च सूक्तवाकः, श्रुत्या प्रहरणसाधनत्वाल्लिङ्गेन च देवतास्मरणार्थत्वात्। तदन्तर्गताश्च 'इदं हविरजुषेताम्—' इत्यादयः। संयुक्तत्वान्न प्रकरणं तेषां विनियोजकम्। संभवति च विनियोजकत्वे विरोधो नास्ति। तस्मान्नात्र

---

षेताम्' इत्येतौ तौ किं पर्वद्वयेऽपि प्रयोक्तव्यावुताग्नीषोमपदस्योत्तरांशः पौर्णमास्याम्, इन्द्राग्निपदस्योत्तरांशोऽमावास्यायामिति विभज्यैव प्रयोक्तव्य इति विचार्यत इत्यपौनरुक्त्यमित्यभिप्रेत्याह—तत्राग्नीषोमादीति। व्यवस्थितानीनीति। विचार्यत इति शेषः। अत्र च किं वाक्यप्रकरणयोस्तुल्यबलत्वमुत प्रकरणं बलीयः किं वा वाक्यमिति तदर्थसंशयो द्रष्टव्यः। ननु 'असंयुक्तं प्रकरणात्—'(जै. ३।३।११।) इत्यत्र श्रुत्याद्यविनियुक्तं प्रयाजाद्यदृष्टोपकारकमेव प्रकरणेन विनियुज्यत इत्युक्तम्; 'इदं हविः' इत्यंशश्च 'सूक्तवाकेन प्रस्तरं प्रहरति' इति श्रुतिविनियुक्तसूक्तवाकान्तर्गतत्वेन श्रुतिविनियुक्त एवेति तस्य प्रकरणविनियोज्यत्वाभावाद्विरोधाप्रसक्तेः कथं वाक्यप्रकरणविरोधोदाहरणत्वेनोच्यत इत्याशङ्कते—नन्विति।

**वाक्यप्रकरणयोर्विरोध इत्यनुदाहरणत्वम् । स्यादेतदेवं यदि संनिपातिनां प्रकरणं न विनियोजकं स्यात् । न तु तथा । अवघातादीनामपि प्रकरणादेव क्रतुभावनेतिकर्तव्यताभूतानां क्रत्वर्थत्वम् । असंयुक्तमिति तु न प्रकरणग्राह्यस्य विशेषणम् । किं तु पूर्वपक्षवादी–श्रुत्यादीनामेव विनियोजकत्वम्, तदसंयुक्तस्य नास्ति विनियोगः–इति मन्यते, तं प्रत्युच्यते श्रुत्याद्यसंयुक्तमपि प्रकरणेन विनियुज्यत इति। यद्वा प्रकरणविरोध्यर्थासंयोगाभिप्रायमसंयुक्तग्रहणम् । तदप्येतदधिकरणसिद्धबलाबला-**

---

प्रकरणविनियोज्यत्वे हि न श्रुत्याद्यसंयुक्तत्वं तन्त्रम्, 'व्रीहीनवहन्ति' इति श्रुतिविनियुक्तानामवघातादीनामपि प्रकरणेन क्रत्वर्थतया विनियोगात्, किं तु कैमर्थक्याकाङ्क्षा; सा च प्रकृतेऽप्यस्तीति युक्तमुदाहरणत्वमिति परिहरति— **स्यादेतदिति** । ननु तर्हि 'असंयुक्तं प्रकरणात्–' (जै. ३ । ३ । ११) इत्यत्रासंयुक्तग्रहणस्य का गतिरित्यत आह— **असंयुक्तमिति** । असंयुक्तमेव प्रकरणाद्गृह्यत इति न सूत्रार्थः, किं त्वसंयुक्तमपि प्रकरणाद्गृह्यत इत्येतावत एव पूर्वपक्षनिरासोपयोगित्वादिति भावः । नन्वेवमपि सूक्तवाकगतपदानामिहोदाहरणत्वमयुक्तं तेषामपि प्रकरणविरोधिभूतवाक्यप्रमाणविनियुक्तत्वादित्यत आह—**तदप्येतदिति** । ये त्वेकदेशिनः—त्रिविधमैदमर्थ्यं ग्राहकैदमर्थ्यं करणैदमर्थ्यं द्वारैदमर्थ्यं चेति । तत्राराादुपकारकाणां प्रयाजादीनां ग्राहकैदमर्थ्यं ग्राहकग्रहणाख्येन प्रमाणेन बोध्यते । तच्च ग्राहकैदमर्थ्यं नियोगापरपर्यायस्य ग्राहकस्य यजिरूपकरणान्तरावरुद्धत्वात्करणत्वेन न संभवतीति करणोपकारद्वार

**ङ्गीकारेणोक्तम् । अतो युक्तमुक्तमुदाहरणम् । ये त्वारादुपकारकेष्वेव प्रकरणस्य व्यापारः, संनिपातिनां तु ग्राहकग्रहणाख्येन प्रमाणेन तार्तीयश्रुत्याद्यतिरिक्तेनापूर्वार्थत्वम्, द्वारैदमर्थ्यं श्रुत्यादिभिः, औपादानिकं क्रत्वर्थत्वम्, प्रकरणस्य तु न कश्चिद्व्यापार इति मन्यन्ते, तेषामेवायं सूक्तवाकपदानां श्रुत्या प्रहरणविनियुक्तानां प्रकरणाविषयत्वान्नेदं वाक्यप्रकरणविरोधोदाहरणं युक्तमित्युपालम्भः; नास्माकम् । तत्र द्वयोरपि वाक्यप्रकरणयोः प्रमाणत्वाच्छ्रुतिकल्पनाधीनत्वसाम्यादन्यस्य विप्रकर्षकारणस्याद्याप्यकथितत्वात्तुल्यबलतां मन्यन्ते । यद्वा प्रधानाकाङ्क्षा प्रकरणम्, प्रधानार्थं च सर्वमिति तन्निबन्धन एव**

---

निर्वाह्यमित्यनुपपत्त्यात्मकेनौपादानिकप्रमाणेन करणैदमर्थ्यं तेषां बोध्यते । तच्च करणैदमर्थ्यं दृष्टद्वारासंभवाददृष्टद्वारा निर्वाह्यमिति तेषामदृष्टरूपद्वारैदमर्थ्यं प्रकरणेन कल्प्यत इति प्रकरणस्यारादुपकारकविनियोग एवोपयोगः । संनिपातिनां तु विनियोगे प्रकरणस्य नोपयोगः, तेषां ग्राहकैदमर्थ्यस्य ग्राहकग्रहणाख्येन प्रमाणेन करणैदमर्थ्यस्य चौपादानिकप्रमाणेन द्वारैदमर्थ्यस्य श्रुत्यादिभिश्च सिद्धतया प्रकरणस्य विषयाभावात्—इत्याहुः । तन्मत एव नेदं वाक्यप्रकरणविरोधोदाहरणमिति दूषणम्, नान्यमतेऽपीत्याह—**ये त्विति**। यद्यपि सर्वस्य प्रधानार्थत्वं तथापि यावत्प्रकरणबलात् 'इदं हविरजुषेताम्' इत्यस्य दर्शपूर्णमासयोरनेनोपकुर्यादिति प्रधानवाक्यैकवाक्यता कल्प्यते तावदग्नीषोमपदेन प्रत्यक्षमेकवाक्यत्वं तस्याग्नीषोमप्रकाशनसामर्थ्यं कल्पयेत्, यावच्च कल्पितं प्रधानैकवाक्यत्वं कथम-

विनियोगो बलीयानिति प्राप्ते; अभिधीयते— येनैकवाक्यता तत्र सामर्थ्यं गम्यते मनाक्। सामर्थ्याच्च श्रुतिः श्रुत्या विनियोगोऽपरत्र तु ॥ पूर्वयोरेकवाक्यत्वं कल्प्यं स्यात्प्रक्रियावशात्। ततो लिङ्गं श्रुतिः पश्चाद्विनियोगस्ततः परः ॥ 'अग्नीषोमाविदं हविर्जुषेताम्' इत्यग्नीषोमपदस्य 'इदं हविः' इत्यादेश्चैकवाक्यत्वं क्लृप्तम्। एकवाक्यतयाग्नीषोमप्रकाशनसामर्थ्यम् 'इदं हविः' इत्यादेः शीघ्रं कल्प्यते, ततश्च श्रुतिः, तया विनियोग इति संनिकर्षः। इन्द्राग्निपदेन तत्रत्यस्य 'इदं हविः' इत्यादेरेकवाक्यत्वं न प्रत्यक्षतो गम्यते, किंतु प्रकरणात्। तावद्दर्शपूर्णमासाभ्याम 'इदं हविः' इत्यादेरेकवाक्यता कल्प्यते— अनेन

---

नेन प्रधानस्योपकर्तव्यमिति द्वारविशेषाकाङ्क्षायां तदीयदेवतापदैकवाक्यतां कल्पयति तावत्प्रत्यक्षैकवाक्यतामूला श्रुतिर्विनियुङ्क्ते इति नैराकाङ्क्ष्यात्प्रकरणमूलं लिङ्गं न श्रुतिकल्पन एव प्रभवतीति प्रकरणमतिविप्रकर्षाद्दुर्बलमिति सिद्धान्तयति—येनैकवाक्यतेत्यादिना। एवं वाक्यस्य क्रमसमाख्याभ्यामपि प्राबल्यमुदाहार्यम्। 'परिवीरसि—' 'परि त्वा—' इति मन्त्रगतानां साक्षात्परिव्याणप्रकाशकपदभिन्नानां पदानामनुष्ठानसादेश्यरूपक्रमादग्नीषोमीयपरिव्याणार्थत्वप्राप्तौ तद्बाधेन 'परिवीरसि—' इति मन्त्रैकवाक्यताबलात्सवनीयपरिव्याणार्थतापि कल्प्यत इति क्रमाद्वाक्यस्य प्राबल्यम्। तथा भक्षानुवाकगते ग्रहणमन्त्रे 'सध्यासम्' इति ग्रहणप्रकाशकपदव्यतिरिक्तानां पदानां समाख्यया भक्षार्थत्वप्राप्तौ ग्रहणमन्त्रैकवाक्यताबलाद्ग्रहणार्थत्वमिति समाख्यातो वाक्यस्य प्राबल्यमि-

दर्शपूर्णमासयोरुपकुर्यादिति । ततः कोऽस्योपकार इति तदीय-देवतापदैकवाक्यतया तत्प्रकाशनसामर्थ्यं चिरेण कल्पयित्वा ततः श्रुतिकल्पनेन विनियोग इति विप्रकर्षाद्दुर्बलं वाक्यात्प्रकरणम् ॥ अथ स्थानप्रकरणयोर्विरोधे चिन्त्यते— राजसूये बहवः पश्विष्टिसोमयागाः सर्वे फलवन्तः समप्रधानाः । तत्राभिषेचनीयो नाम सोमयागः । तत्संनिधौ विदेवनादयः समाम्नाताः । ते किं सर्वस्य राजसूयस्याङ्गम्, उताभिषेचनीयस्यैवेति । यदि संनिधिर्बलीयांस्तदाभिषेचनीयस्याङ्गम, अथ प्रकरणं ततो राजसूयस्यैवेति । तत्र संनिधिविशेषादभिषेचनीयाङ्गत्वे प्राप्ते; उच्यते—प्रकरणाविशेषात्सर्वार्थता । नन्वभिषेचनीयस्याप्यस्त्येव फलवत्त्वात्प्रकरणम् । यद्यप्यस्ति, तथाप्यन्येषामप्यस्तीति ताद-

---

त्याद्यूह्यम् । चिन्त्यत इति । बलाबलमिति शेषः । समप्रधाना इति भावप्रधानो निर्देशः । समप्रधानभावा इत्यर्थः । सर्वेषां समप्राधान्यं च चतुर्थे वक्ष्यते । तत्संनिधाविति । विदेवनादयः 'अक्षैर्दीव्यति' 'शौनःशेपमाख्यापयति' इत्यादिवाक्यविहिता विदेवनशौनःशेपाख्यापनादय इत्यर्थः । आकाङ्क्षाया अपि संबन्धघटकत्वस्य संनिध्यधीनत्वात्संनिधिरेव बलीयानिति पूर्वपक्षयति— संनिधीति । अत्यन्तसंनिधेरित्यर्थः । आकाङ्क्षा, पदार्थोपस्थितिरूपः संनिधिश्च संबन्धकारणम्; न तु पाठसादेश्यलक्षणः संनिधिरपि, व्यवहितपाठेऽप्यन्वयबोधदर्शनादित्यभिप्रेत्य सिद्धान्तयति—प्रकरणेति । नन्विति । ततश्च प्रकरणस्याविशिष्टत्वात्संनिध्याधिक्येनाकाङ्क्षाविशेषमुत्थाप्याभिषेचनीयाङ्गतैव कल्प्यत

र्थ्यमपि युक्तम् । यदि परमविशेषतः सर्वेषामाकाङ्क्षायामपि पाठसंनिधिविशेषादभिषेचनीयस्य विशेषत आकाङ्क्षां कल्पयित्वा तादर्थ्यं स्यात्, ततश्च विप्रकर्षः । सर्वार्थता क्लृप्ताकाङ्क्षातः सुखं गम्यते, अभिषेचनीयाङ्गत्वं त्वकाङ्क्षाकल्पनयेति । एतेनाग्नेयादीनां धर्मसाधारण्यं व्याख्यातम् । अपि च, नास्त्यभिषेचनीयस्य प्रकरणम्, प्राकृतेनेत्थंभावेन कथंभावाकाङ्क्षापूरणात् । नन्वन्येषामपीष्टिपशुसोमानां विकृतित्वान्नास्त्येव प्रकरणम् । सत्यं प्रातिस्विकेन रूपेण नास्ति, राजसूयात्मना त्वस्त्येव । कथम् ? श्रुत्यादिविहिताङ्गसंदंशनात् । तद्वशेन हि

---

इति भावः । तथापीत्युक्तमेव विवृणोति —यदि परमित्यादिना । एवमाग्नेयादिसंनिध्याम्नातानामाज्यभागादीनामप्यग्नीषोमीयादीतरप्रधानार्थताप्यवधेयेत्याह—एतेनेति । नन्विति । ततश्च प्रकरणाविशेषात्सर्वार्थताया वक्तुमशक्यत्वेन संनिधिबलादाकाङ्क्षोत्थापनेनाभिषेचनीयाङ्गत्वकल्पनमप्रत्यूहमिति भावः । तत्तदिष्टिपशुसोमजन्यानामपूर्वाणामुत्पत्त्यपूर्वस्थानीयत्वेन तत्तदपूर्वभाव्यकतत्तद्भावनाया निवृत्ताकाङ्क्षत्वेऽपि स्वाराज्यभाव्यकफलभावनाया इतिकर्तव्यताकाङ्क्षासत्त्वात्तादर्थ्यमेव युक्तमिति परिहारे सत्येवाह—सत्यमिति । ननु प्रत्येकमेव तेषां राजसूयत्वात्प्रातिस्विकरूपेणाकाङ्क्षानिवृत्तौ कथं राजसूयत्वाकारेण वाकाङ्क्षेति शङ्कते—कथमिति । विदेवनादीनां राजसूयत्वपुरस्कारेण विहिताङ्गमध्यपातित्वात्प्रातिस्विकाकारेण निवृत्ताप्याकाङ्क्षा तेषामवेष्ट्यादीनां पुनरुत्थाप्यत इति समाधत्ते—श्रुत्यादीति । विदेवनादीनां राजसूयत्वपुरस्कारेण विहि-

निवृत्ताप्याकाङ्क्षा पुनरुत्पत्स्यते, पवित्रादारभ्य क्षत्रस्य धृतिं यावदङ्गविधिषु प्रायेण 'राजसूयाय ह्येना उत्पुनाति' 'राजसूयेनेजानः सर्वमायुरेति' इति राजसूयपरामर्शात्, तावन्तं देशमनुवृत्तो राजसूयकथंभावः शक्नोति तन्मध्यपतितानि विदेवनादीनि ग्रहीतुम् । अथ प्रकरणाद्राजसूयार्था विदेवनादयः ॥

---

ताञ्जसंदंशमेव दर्शयति—पवित्रादिति । पवित्रनामकसोमयागादित्यर्थः । क्षत्रस्य धृतिरपि यागविशेषः । नन्वेवं क्रमस्य क्वापि प्रामाण्यं न स्यात् 'दब्धिरसि—' इत्यादावपि प्रकरणविशेषेण सर्वप्रधानार्थत्वापातादिति चेन्न; लिङ्गविनियुक्तानुमन्त्रणमन्त्रान्तरेषु दब्धिमन्त्रस्यापि विनियोगकल्पने विकल्पदोषभिया प्रकरणस्यौदासीन्ये क्रमस्य निष्प्रत्यूहत्वादित्याहुः । यद्यपि पक्षद्वयेऽपि राजसूयेऽनुष्ठानविशेषो नास्ति तथापि राजसूयान्तर्गतेष्टेः पृथक्पृथक्प्रयोगे पूर्वपक्षे न विदेवनादिकमनुष्ठेयं सिद्धान्ते त्वनुष्ठेयमिति प्रयोजनं द्रष्टव्यम् । इदं च पाठसादेश्यलक्षणस्य क्रमस्य प्रकरणबाध उदाहरणम् । अनुष्ठानसादेश्यलक्षणस्य तु क्रमस्य प्रकरणेन बाधस्तु 'दोहयोः कालभेदादसंयुक्तं शृतं स्यात्' (जै. ३ । ६ । २८ ।) इत्यधिकरणे दर्शितम् । तत्र ह्येवं चिन्तितम्—'ऐन्द्रं दध्यमावास्यायाम्' 'ऐन्द्रं पयोऽमावास्यायाम्' इति दधिपयसोरारम्भदिन एवोत्पन्नयोर्दध्नो द्व्यहसाध्यत्वात्पूर्वेद्युरनुष्ठानं दोहधर्माश्च शाखाहरणादयः पूर्वेद्युरेव क्रियन्ते । तत्रानुष्ठानसादेश्याच्छाखाहरणादीनां दधिधर्मत्वं प्राप्तय प्रकरणाविशेषादुभयार्थत्वं स्थापितम् । प्रकरणात्समाख्याया दौर्बल्यं तु 'तपश्च फलसिद्धत्वाल्लोकवत्' (जै. ३ ।

क्रमसमाख्ययोर्विरोधे—पौरोडाशिकसमाख्याते दर्शपूर्णमासकाण्डे सांनाय्यपात्रशुन्धनक्रमे समाम्नातः 'शुन्धध्वम्' इति मन्त्र उदाहरणम्। स किं पुरोडाशपात्राङ्गम्, उत सांनाय्यपात्राङ्गम्, उतोभयाङ्गमिति विचारः। यदि समाख्या बलीयसी पुरोडाशपात्राङ्गम्। अथ तुल्यबलत्वमुभयार्थता। क्रमबलीयस्त्वे तु सांनाय्यपात्रार्थता। तत्र, विशेषाग्रहणात्तुल्यबलत्वमुभयोर्भवेत्। संबन्धवाचिनीत्वेन समाख्या वा बलीयसी॥ नैतदेवं समाख्या हि न संबन्धाभिधायिनी। यद्यपि त्वभिधात्री स्यात्प्रमाणं न तु तत्र सा॥ न हि यौगिकैः शब्दैः संबन्धोऽभिधीयते। 'दण्डी' इति प्रकृत्या दण्डस्वरूपमुक्तम्। प्रत्ययेनापि पुरुषः।

---

८। ९।) इत्यधिकरणे दर्शितम्। तत्र हि ज्योतिष्टोमे 'त्र्यहं नाश्नाति' इत्यादिवाक्यैराध्वर्यवकाण्डे विहितस्य कायशोषणात्मकस्य तपसः समाख्ययाध्वर्युकर्तृकत्वं प्राप्य तपसो दुःखफलकत्वाद्दुःखस्य च पापक्षयहेतुत्वात्प्रकरणाच्च क्रतुफलप्रतिबन्धकपापक्षयहेतुत्वावगमाद्यत्र यजमाने फलं तत्रैव प्रकरणावगतक्रतुफलप्रतिबन्धकनिवृत्त्यापि भाव्यमिति समाख्याबाधेन प्रकरणबलाद्याजमानमेव तप इति स्थापितमिति दिक्। सांनाय्येति। सांनाय्यपात्रप्रकाशकानाम् 'मातरिश्वनो घर्मोऽसि' इत्यादिमन्त्राणां संनिधौ समाम्नातः शुन्धनप्रकाशकः 'शुन्धध्वम्—' इति मन्त्र उदाहरणमित्यर्थः। वस्तुतस्तु समाख्याया यौगिकत्वेन संबन्धवाचितया संबन्धरूपविनियोगबोधने श्रुतिवत्प्रमाणान्तरानपेक्षत्वेन क्रमापेक्षया बलीयस्त्वमेवेत्याह—संबन्धवाचिनीति। प्रत्ययेनापीति। 'अत इनिठनौ' (पा. ५।

दण्डयुक्तस्तु पुरुषो न कस्यचिद्वाच्यः । तयोः समभिव्याहारादेव परस्परयोगो वाक्यार्थ इव पदार्थानां लभ्यमानो नाभिधानं प्रयोजयति । तथा पाचकादिष्वपि । आह च— 'पाकं हि पचिरेवाह कर्तारं प्रत्ययोऽप्यकः । पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचित् ॥' इति । एवं पौरोडाशिकशब्देऽपि प्रकृतिप्रत्ययाभ्यां पुरोडाशरूप काण्डस्वरूपं चोक्तम । तयोश्च संबन्धोऽनभिहित एव कल्पयितव्यः । क्रमे तु देशसामान्यलक्षणः संबन्धः प्रत्यक्ष इति बलीयस्त्वम् । अथापि समाख्या संबन्धमभिदध्यात्तथापि न सा तत्र प्रमाणम्, पदस्य पदार्थे प्रामाण्याभावात् । अतः संबन्धनिमित्तां समाख्यामुज्झन्तीमुपलभ्य नूनमस्त्यनयोः कश्चित्संबन्ध इति संबन्धसामान्यं कल्प्यम्; ततोऽपेक्षा, तत एकवाक्यत्वम्, ततः सामर्थ्यम्, ततः श्रुतिः, ततो विनियोगः । क्रमस्तु संबन्धमात्रस्य प्रत्यक्षक्लृप्तत्वात्तत आरभ्य श्रुत्यर्थं गच्छ-

---

२ । ११५ ।) इति विहितस्य मत्वर्थीयेनिप्रत्ययस्य पुरुषवाचित्वादिति भावः । नन्वेवं यौगिकशब्दात्संबन्धप्रतीतिरेव न स्यादित्यत आह—तयोरिति । यथा पदानां समभिव्याहारात्पदार्थानां संसर्गो विनैवाभिधानं वाक्यात्प्रतीयते तथा प्रकृतिप्रत्यययोः समभिव्याहारादेव दण्डपुरुषसंबन्धः प्रतीयते; न च तावता तत्र शक्तिः सिध्यति, अनन्यलभ्यस्यैव शब्दार्थत्वादिति भावः । तत्र वार्त्तिकसंमतिमाह—आह चेति । कल्पयितव्य इति । तदकल्पने संबन्धनिमित्तकसमाख्यानुपपत्तेरिति भावः । प्रामाण्याभावादिति । पदमात्रस्य स्मारकत्वेन प्रमितिजनकत्वाभावादित्यर्थः । श्रुत्यर्थ-

ङ्गकं पदमगतां समाख्यां जयति ॥ तदेवं श्रुत्यादीनां पूर्वपूर्व-णोत्तरोत्तरं श्रुत्यर्थं यावदगतमलब्धप्रामाण्यावस्थमेव मूलच्छे-

---

मिति । विनियोगमित्यर्थः । अगतामिति । अप्राप्ताम्, एकपद-व्यवहितामिति यावत् । नन्वेवं श्रुत्यादिष्वप्राप्तबाधत्वेऽपि 'शरमयं बर्हिर्भवति' इति विहितेन वैकृतेन शरमयेन बर्हिषा प्राकृतं कुश-मयं बर्हिर्बाध्यते, 'पदे जुहोति' इति विशेषशास्त्रविहितेन पदेन 'यदाहवनीये जुहोति' इति सामान्यशास्त्रविहित आहवनीयो बाध्यते, 'गोदोहनेन पशुकामस्य प्रणयेत्' इति विहितेन गोदो-हनेन 'चमसेनापः प्रणयेत्' इति विहितो नित्यश्चमसो बाध्यत इत्यादिषु किं प्राप्तबाध उताप्राप्तबाधो वा? न तावच्छ्रुत्यादिस्थल इवाप्राप्तबाधः संभवति, तथा सति प्रकृते लिङ्गादेरिव तत्रापि प्राकृतकुशादिप्रापकप्रमाणस्य चोदकस्य प्रवृत्तिप्रतिबन्धरूपो बाधोऽ-ङ्गीकर्तव्यः; न च तथा युक्तम्, तथा सति प्रत्येकपदार्थातिदेशस्य दशमे निरस्यत्वेन चोदकस्यैकत्वात्कुशेष्विवाङ्गान्तरेष्वपि चोदको न स्यात्; तथा पदहोमशास्त्रेणाहवनीयशास्त्रस्याप्रवृत्तिलक्षणबाधस्वी-कारे पदहोम इव होमान्तरेष्वप्याहवनीयो न प्राप्नुयात्; न च तर्हि प्राप्तमेव तत्र बाध्यतामिति वाच्यम्, श्रुत्यादिष्वप्राप्तबाधस्तत्र तु प्राप्तबाध इति वैरूप्यप्रसङ्गात्; यदि च प्रमाणवैचित्र्यान्न बाधवैचि-त्र्यं दोषावहमिति मन्यसे तथापि तत्र प्राप्तस्य बाधोऽशक्यः प्रापकशास्त्रस्याप्रामाण्यप्रसङ्गादिति प्रसङ्गादाशङ्क्य; प्राप्तमपि शक्यमेव बाधितुम्, न ह्यतिदेशेन विकृतिषु प्रत्येकमिदमिदं च कर्तव्यमिति पदार्थाः प्राप्यन्ते, किं तु कथंभावाकाङ्क्षिण्यां विकृति-

दान्निराक्रियते। सोऽयमप्राप्तबाधः। शास्त्रप्रदेशेषु तत्र तत्रो-च्यत इदमनेन बाध्यत इदमनेन बाध्यते, प्राकृतं वैकृतेन, सामान्यं विशेषेणेत्यादि. तद्बाधकविषयं प्राप्तं बाध्यत उताप्राप्त-मिति; न तावत्तत्र श्रुतिलिङ्गादिवदप्राप्तबाधसंभवः। तथा च तद्वदेव प्रापकस्य शास्त्रस्याभावोऽभ्युपगन्तव्यः। ततश्च तस्यैकत्वात्कुशेष्विवाङ्गान्तरेष्वपि चोदको न स्यात्, पदहोमवच्च होमान्तरेष्वाहवनीयो न स्यात्। अथ प्राप्तम्; तन्न, तत्र श्रुत्यादिवैषम्यप्रसङ्गात्। एकरूपेण हि बाधेन भवितुं युक्तं न विचित्रेण। न च शक्यं शास्त्रेण प्राप्तं बाधितुम्। उच्यते—

---

भावनायां चोदकेन 'प्रकृतिवत्कुर्यात्' इति प्रकृतिवद्भावः प्राप्यते; प्रकृतिवद्भावश्च प्रयाजादिपदार्थैस्तत्तदवान्तरोपकारसंपादन एव संभ-वतीति प्रकृतिवद्भावसाधनत्वं सर्वपदार्थानामविशेषेण प्रथमं प्रती-यते; सा च प्रतीतिः पश्चात्पदार्थविशेषनिरूपणावसरेऽवहन्त्यादेः कृष्णलेषु प्रकृतिवद्वितुषीकरणद्वारा विशेषणत्वासंभवपर्यालोचनया श्येनयागे कुशकार्यस्य शरैरेव सिद्धिपर्यालोचनया च मिथ्या क्रियते; न चापवादादर्शनरूपदोषजनिता सर्वविषयताप्रतीतिरपवाददर्शने सति निवर्तत इत्येतावता शास्त्रस्याप्रामाण्यम्, तस्य विशेषविषयता-मात्रपरिकल्पनात्; एवं सामान्यशास्त्रात्प्रथमं सर्वविषयतयोत्पन्नायाः प्रतीतेर्विशेषशास्त्रवशेन मिथ्याकरणेऽपि सामान्यशास्त्रस्य विशेषशा-स्त्रानालिङ्गितविषयत्वपरिकल्पनान्नाप्रामाण्यम्; अतः प्रथमं प्राप्तैव सर्वविषयताबुद्धिर्बाध्यते मिथ्यात्वेनाध्यवसीयत इति दशमाद्ये वक्ष्यत इत्यभिप्रेत्य समाधत्ते— यत्तु शास्त्रप्रदेशेष्वित्यादिना। नन्वत्र

प्राप्तस्यैव तेषु बाधः । नावश्यमेकरूपेणैव तेन भवितव्यम् । वैचित्र्यमेव प्रमाणबलेन युक्ततरं स्यात् । प्राप्तमपि शक्यमेव बाधितुमिति दशमाद्ये वक्ष्यते । 'अथ यत्तत्र तत्र—' इत्यादि-भाष्यस्य श्रुत्यादिविषयत्वम् "स्थिते चाप्राप्तबाधत्वे प्राप्तबा-

---

'अथ यत्तत्र तत्राभिधीयत इदमनेन बाध्यत इदमनेनेति तत्र यद्बाध्यते तत्किं बाधकविषयं प्राप्तमुताप्राप्तम्? किं चातः? यद्य-प्राप्तं किं बाध्यते? अथ प्राप्तं कथं शक्यते बाधितुम्?' इति बाधस्य प्राप्तविषयत्वं च न संभवतीति प्रापय्य 'प्राप्तं बाधकविषयं पूर्वविज्ञानमिति ब्रूमः' इति प्राप्तमेव पूर्वविज्ञानं बाधकविषयमिति सिद्धान्तीकृत्य पुनः 'कथम्?' इति बाधप्रकारप्रश्नमवतार्य 'सा-मान्यस्य कारणस्य विद्यमानत्वात्' इत्यनुमानेनोत्तरमुक्त्वा 'अथ कथं निवर्तते?' इत्यनेन प्राप्तस्य कथं निवृत्तिरित्याशङ्क्य 'नैव हि तन्निवर्तते । कथं तर्हि? मिथ्याविज्ञानमेतदिति प्रत्ययान्तरं भवति' इत्युत्तरं चोक्तं भाष्ये । ततश्च श्रुत्यादिस्थलेऽपि बाधस्य प्राप्त-विषयकत्वमेव भाष्यकृदभिमतमिति तद्विरुद्धमिदं प्राप्तबाधत्वाभि-धानमित्याशङ्क्य '–अर्थविप्रकर्षात्' इति सूत्रावयवेन बाध-प्रकारस्य दर्शितत्वात् 'कथम्?' इति प्रश्नोऽनुपपन्नः, तथा विनियोगकारणभूतायाः श्रुतेर्मूलोच्छेदनेनाकल्पितत्वेनावि-द्यमानत्वादुत्तरमप्ययुक्तमित्यर्थकेन "बाधस्योक्तप्रकारत्वात्प्रश्नम्ना-वन्न युज्यते । स्थिते चाप्राप्तबाधत्वे प्राप्तबाधोऽपि नोत्तरम् ॥" इत्यनेन वार्तिकेन भाष्यस्य दूषितत्वान्न तद्विरोधो दोष इत्यभि-प्रेत्याह— **अथ यत्तत्र तत्रेत्यादीति** । अत्रैकदेशिनो लिङ्गादेरवि-रोधस्थले विनियोजकत्वस्यानुभवाद्विरोधस्थलेऽपि वस्तुतो विनियो-

षोऽपि नोत्तरम् ॥' इत्यनेन वार्त्तिकेन दूषितम् । [1]केचनास्य दूषणस्य 'सामान्यतः प्राप्तिं मन्वाना विशेषमपश्यन्तः स्मृतिप्रमोषनिमित्तं प्राप्तिज्ञानं व्यपदिशन्ति, विशेषावगमात्तेषां निवर्तते' इति । अनेन न कश्चिदपि परिहारलेशोऽभिहितः । न हि विप्रकृष्टप्रमाणं संनिकृष्टप्रमाणात्प्राक्प्राप्तं व्यवहारमपि निर्वर्तयात, यतस्तन्निवर्तकता संनिकृष्टस्य स्यात् । अतो नेदमु-

1 न चास्य दूषणस्य 'सामान्यतः प्राप्तिं मन्वाना विशेषमपश्यन्तः स्मृतिप्रमोषनिमित्तं प्राप्तिज्ञानं व्यपदिशन्ति, विशेषावगमात्तेषां निवर्तते' इत्यनेन कश्चिदपि परिहारलेशोऽभिहितः ।— इति पाठान्तरम् ।

जकत्वाभावेऽपि साधारणस्य प्रकाश्यशेषभूतमन्त्राधारत्वादेरनुभवेन प्राप्तिं विनियोजकत्वं मन्वानाः स्मरन्तः स्मृतिप्रमोषनिमित्तं दोषवशात्तत्तानुल्लेखेन स्मृतिप्रमोषाद्विशेषमपश्यन्तः स्मरणग्रहणयोः स्मर्यमाणगृह्यमाणयोश्च भेदमगृह्णन्तः स्मरणमेव प्राप्तिज्ञानमिति व्यपदिश्य व्यवहरन्ति ; स च व्यवहारः प्राप्त एव विशेषावगमान्निवर्तत इति वार्त्तिकोक्तस्य दूषणस्य परिहारं वदन्तीत्याह—**केचनेति** । अत्र निवर्तत इतीत्यनन्तरं परिहारं वदन्तीत्यध्याहार्यम् । परिहरति—**अनेन न कश्चिदिति** । क्वचित्तु 'न चास्य दूषणस्य' इत्यादौ पाठः, अन्ते च 'अनेन कश्चित्—' इति नञ्विनाकृतश्च पाठो दृश्यते । तत्र तु नाध्याहारक्लेशः । 'दूषणस्य' इत्येतत्तु 'परिहारलेशः' इत्यनेन संबध्यत इति ध्येयम् । **न हीति** । संनिकृष्टप्रमाणस्य प्रत्यक्षतया विशेषासंभवादर्शनादिति भावः । **उपदेशेति** ।

पदेशबाधविदामभिधानमित्युपरम्यते ॥ श्रुत्यादीनामतः षण्णामेकार्थोपनिपातिनाम्। पूर्वं पूर्वं बलीयः स्याद्दुर्बलं चोत्तरोत्तरम् ॥

---

उपदेशाध्यायषट्कोक्तबाधविदामित्यर्थः। सूत्रार्थस्तु — श्रुत्यादीनां समवाये परं परं दुर्बलम्, अर्थं प्रति विनियोगं प्रति विषयविप्रकर्षादिति ॥

---

ननु यावानर्थः शब्दश्रवणानन्तरं प्रतीयते तावानस्य युगपदभिधया प्रतीयत इति न ब्रूमः। किं तु तत्तत्सहकारिलाभे सति क्रमेणैवेति न जैमिनिसूत्रविरोध इति चेत्; तथापि 'रुचिं कुरु' इत्यत्र चिकुशब्दस्य देशान्तरे स्त्रीत्वव्यञ्जकावयवविशेषवाचकतया प्रसिद्धत्वेनासभ्यार्थप्रतीतेर्दुष्टत्वमिति वक्ष्यते तदयुक्तं स्यात्, अन्विताभिधानवादे तस्यार्थस्य पदार्थान्तरैरनन्वितत्वेनानभिधेयतया व्यञ्जनानङ्गीकाराच्च प्रतीत्यविषयत्वप्रसङ्गेनापरित्याज्यत्वात्। न चैवमभिहितान्वयवादे तस्य दोषत्वमविरुद्धमिति वाच्यम्, तन्मतेऽपि प्रकरणादिनाभिधानियमनाद्व्यञ्जनां विना तदप्रतीतेः। किं च यदि व्यञ्जना न स्यात्तदानीमसाधुत्वादीनां क्वचिदप्यननुकूलत्वेन नित्यदोषता, श्रुतिकटुत्वादेस्तु शृङ्गारानुगुणस्यापि रौद्रानुगुणत्वादनित्यदोषतेति विभागकरणमनुपपन्नं स्यात्, रसादीनामभिधेयत्वे सर्वत्राभिधायास्तुल्यत्वात्। न च तथा विभागोऽनुपपन्न एवेति वाच्यम्, शृङ्गारे श्रुतिकटुश-

ब्दप्रयोगे सर्वेषामुद्वेगस्यानुभवसिद्धत्वात् । व्यञ्जनाङ्गीकारे तु शृङ्गारो माधुर्यरूपस्वगुणाभिव्यक्तिद्वारैवाभिव्यञ्जनीयः । माधुर्यं च सुकुमारवर्णाभिव्यङ्ग्यमिति भवति तत्र श्रुतिकटुत्वस्य दोषत्वम् । रौद्रे त्वोजोगुणः । स च दीप्त्यात्मक इति तद्व्यञ्जकानां शब्दानां श्रुतिकटुता न दोष इति भवति तस्यानित्यदोषता, चमत्कारजननकादाचित्कताया एवानित्यदोषताप्रयोजकत्वात् । किं च, 'द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः । कला च सा कान्तिमती कलानिधेस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥'— तपश्चरन्तीं गिरिजां प्रति कुहनाब्रह्मचारिणो भगवतस्तदभिप्रायपरिज्ञानार्थेयमुक्तिः । पिनाकिनः समागमाभ्यर्थनया सा सकलानन्दकरी कान्तिमती चन्द्रस्य कला च सकललोकलोचनचन्द्रिका त्वं चेत्युभयमपि संप्रति शोचनीयतां गतम् । पूर्वं तु चन्द्रकलैकैव, इदानीं त्वमपि ।— इत्यत्र गूढाकारस्य भगवतो देव्याशयपरिज्ञानाय स्वात्मगर्हणाप्रस्तावे 'कपालिनः' इति पदमेव सर्वाकारेणामाङ्गल्यशीलत्वोन्मीलकतया शोभावहं न तु 'पिनाकिनः' इति पदम्, तथा सति शौर्यप्रकाशनेन समधिगम्यत्वस्यैवोन्मीलनेन प्रस्तुताननुगुणत्वादित्यश्लीलाख्यार्थदोषस्यापि क्वचिदनुगुणत्वेनानित्यदोषतेत्यालंकारिकरीतिर्व्यञ्जनानभ्युपगमे विरुध्येत,

कपालिपिनाकिपदयोरभिधेयभगवदुपस्थापने विशेषाभावात्। न च कपालसंबन्धबोधकत्वमेव विशेष इति वाच्यम्, व्यञ्जनानभ्युपगमे तद्बोधनस्याप्रयोजकत्वात्। अन्यथा पिनाकसंबन्धबोधनेनात्रापि विशेषः किं न स्यात्? अत्र कपालिपदेन धर्मिणो भगवत एवोपस्थितेः कपालसंबन्धबोधो न स्यात्, अतः 'द्वयं गतं संप्रति तस्य शोच्यताम्—' इति 'तस्य' इत्यन्यद्विशेष्यपदं निधायैव पाठो युक्त इति यन्महिमभट्टेनोक्तं तदयुक्तम्, अवयवसमुदायशक्तिभ्यां व्यञ्जनासमुदायशक्तिभ्यामिव धर्मधर्म्युभयोपस्थितिसंभवादित्याहुः। किं च वाच्योऽर्थः सर्वान्प्रतिपत्तॄन्प्रत्येकरूप एव, व्यङ्ग्योऽर्थस्तु प्रकरणवक्तृप्रतिपत्त्रादिभेदेन भिन्नभिन्नरूप एवेति विरुद्धधर्माध्यासात्तयोर्भेदेन तत्प्रतीत्युपयोगिनोर्व्यापारयोरपि भेद आश्रयणीय इत्यभिधातो व्यञ्जना भिन्नैव। तथा हि—'अस्तं गतः सविता' इत्यत्र सूर्यास्तमयरूपो वाच्योऽर्थः सर्वान्प्रत्यविशिष्ट एव। व्यङ्ग्योऽर्थस्तु चौर्यप्रकरणे संप्रत्यवस्कन्दनावसर इति, अभिसारिकाविषये त्वभिसरणमुपक्रम्यतामिति, सायं कृतसंकेतनायिकाविषये प्राप्तस्ते प्रेयानिति, कर्मकरवक्तृकत्वे कर्मकरणान्निवर्तामहा इति, माणवकानां प्रतिपत्तृत्वे सांध्यो विधिरुपक्रम्यतामिति, दूरगमनोन्मुखविषये दूरं मा गा

इति, गोपालविषये सुरभ्यो गृहं प्रवेश्यन्तामिति, तापार्तविषये संतापोऽधुना न भवतीति, वणिग्विषये विक्रेयवस्तूनि संह्रियन्तामिति, विरहोत्कण्ठितावक्तृकत्वे नागतोऽद्यापि मे प्रेयानिति नानाविध एव प्रतीयते ; अत एव वाच्यव्यङ्ग्ययोः संख्याभेदादपि भेदः । किं च 'गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥' इत्यत्र विधिर्वाच्यः, यदि गच्छसि तदा मरणं मे भावि तन्न गन्तव्यमिति निषेधो व्यङ्ग्यः । तथा 'न पुनस्तस्याधमस्यान्तिकम्' इत्यत्र निषेधो वाच्यः, व्यङ्ग्यस्तु विधिरिति स्वरूपभेदादपि वाच्यव्यङ्ग्यौ भिन्नौ । किं च 'मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदन्तु । सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥' इत्यत्र संशयरूपा वाच्यप्रतीतिः; व्यङ्ग्यप्रतीतिस्तु यदि विरक्तो वक्ता तदा भूधरसंबन्धिनां सानूनां सेव्यत्वम्, यदि शृङ्गारी वक्ता तदा कामिनीसंबन्धिनां जघनानामिति निर्णयात्मिकेति प्रतीतिवैचित्र्यादपि तयोर्भेदः । किं च 'कथमवनिप दर्पोऽयं निशातासिधारादलनगलितमूर्ध्नां विद्विषां स्वीकृता श्रीः । ननु तव निहतारेरप्यसौ किं न नीता त्रिदिवमपगताङ्गैर्वल्लभा कीर्त्तिरभिः ॥'— हे नृप, निशित-

खड्गधाराखण्डितमूर्ध्नां विद्विषां लक्ष्मीः स्वीकृतेत्ययं दर्पः कथम्, किमिति दृप्यसि? यतस्तव वल्लभा कीर्त्तिरपगताङ्गै-रपि तैर्दिवं नीता :— इत्यत्र निन्दा वाच्या स्तुतिर्व्यङ्ग्येति स्वरूपभेदादपि तौ भिन्नौ। किं च प्रथमं वाच्यप्रतीतिः। पश्चाद्व्यङ्ग्यप्रतीतिरिति प्रतीत्योः कालभेदादपि तयोर्भेदः। तथा शब्दैकाश्रयाभिधा शब्दैकदेशतदर्थवर्णरचनाश्रया व्य-ञ्जनेत्याश्रयभेदादभिधातो भिन्ना व्यञ्जना। तथा शब्दा-र्थानुशासनज्ञानमात्रेण वाच्यप्रतीतिः, प्रकरणादिसहायप्र-तिभाविशेषसध्रीचीनेन तादृशज्ञानेन व्यङ्ग्यप्रतीतिरिति प्रतीतिकारणभेदादपि तयोर्भेदः। किं च वाचकशब्दः प्रतिपत्तरि प्रतीतिमात्रमाधाय तस्मिन्बोद्धृत्वव्यवहारमात्रे निमित्तम्, व्यञ्जकस्तु चमत्कृतिमाधाय विदग्धत्वव्यपदे-शहेतुर्भवतीति कार्यभेदादपि भेदः। तथा 'कस्स व ण होइ रोसो दट्ठूण पिआइ सव्वणं अहरं। सभमरपदुम-ग्घाइणि वारिअवामे सहसु एण्हिं॥'— कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्। सभ्रमरपद्मा-घ्राणशीले वारितवामे सहस्वेदानीम्॥ उपपतिना खण्डि-ताधरां कांचित्प्रति भर्तरि समीपमागच्छति सति तदजान-त्या इव कस्याश्चिद्विदग्धायास्तत्त्स्वपरिहारार्थेयमुक्तिः। प्रि-यायाः सव्रणमधरं दृष्ट्वा कस्य वा रोषो न भवेत्? जडस्यापि

भवेदेव। वारिते निवारणायामपि वामे प्रतिकूलशालिनि, संप्रति भर्तुरुपालम्भपरम्परां सहस्व।— इत्यत्र वाच्यं नायिकाविषयमेव। व्यङ्ग्यार्थस्तु नास्या अपराधोऽस्तीति नायकविषयः। तथा प्रियाया एवाधरं दृष्ट्वा रोषो भवति न त्वप्रियायाः, तथा च न च त्वयानन्दो विधेय इति सपत्नीविषयः। तथा भ्रमरेण दृष्टाधरेयं न ते प्रियेण, अतो न त्वया मन्युः कार्य इति सपत्नीविषय एव। तथा यत इयं प्रिया ततोऽनया विना नायं जीविष्यतीति ज्ञात्वा मया समाहितम्, तत्र त्वयान्यथा कार्या मतिरिति प्रतिवेशिनीविषयः। तथाद्य मया यथाकथंचित्त्वायमपराधः समाहितः, इतः परं सापराधया न भवितव्यमिति सखीविषयः। तथा स्फुटोऽप्ययमपराधः समाहितः, इतः परमपि यथेच्छमविनये कृतेऽपि परिहरामीति सखीविषय एव। तथा मयायमपराधः समाहितः, भवतीभिस्तूष्णीं स्थितमिति सख्यन्तरविषयः। तथा कथंचिदधुना समाहितम्, इतः परमेवं प्रकटतरमविनयो न कार्य इत्युपपतिविषयः। तथा युक्त्यैव मयायमपराधः समाहित इति स्ववैदग्ध्यख्यापनं सख्यादिविषयः।— इत्यादिविषयभेदादपि तयोर्भेदः। यदि चैवं विषयभेदादिविरुद्धकारणे सत्यपि वाच्यव्यङ्ग्ययोरभेदः स्यात्तदा नीलपीतादावपि भेदो न स्यात्।

उक्तं च— 'अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च' इति। किं चार्थवतामेव शब्दानां वाचकत्वं निरर्थकानां वर्णरचनादीनामपि व्यञ्जकतेति न वाचकत्वमेव व्यञ्जकत्वम्। किं च 'यत्परः शब्दः स शब्दार्थः' इति न्यायाद्यत्र तात्पर्यविश्रान्तिः स शब्दवाच्य इति हि व्यङ्ग्यस्याप्यभिधेयता भवतोऽभिमता। तथा सति 'वाणीरकुडुङ्गुड्डीण——' इत्याद्यसुन्दरोदाहरणे वाच्योपस्कारार्थं व्यङ्ग्यमर्थमभिव्यज्य पुनश्चमत्कारकारिणि वाच्यार्थ एव तात्पर्यं विश्राम्यतीति तत्र व्यङ्ग्यार्थस्य तात्पर्यविश्रान्तिस्थानत्वाभावेनाभिधाविषयत्वासंभवाद्भवतापि व्यञ्जनाविषयत्वमङ्गीकार्यमिति सिद्धा व्यञ्जना। ननु— एवमपि लक्षणाविषय एव व्यङ्ग्यार्थोऽस्तु। तथा हि—'प्रत्याख्यानरुचेः कृतं समुचितं भीमेन ते रक्षसा सोढं तच्च तथा त्वया कुलवधूर्धत्ते यथा चौचितीम्। व्यर्थं संप्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणो रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्॥'— इदं मायासीताहननं श्रुतवतो भगवतः प्रलापवचनम्। हे प्रिये जानकि, प्रत्याख्यानपरायास्ते भीमेन स्त्रीवधेऽप्यकरुणेन रावणेन समुचितं कृतम्। तच्च निहननमपि तथा त्वया सोढं यथान्या कुलवधूरौचितीं धत्ते ; अहो जानकी समु-

चितमाचरिवतीति श्लाघत इति यावत्  त्वदापदः साक्षिणा वृथैव धनुर्बिभ्रता प्रियजीवितेन प्राणरक्षणमात्रपरेण रामेण तु प्रेम्णस्तव मयि यत्प्रेम तस्योचितं न कृतम् । — इत्यत्र रामपदेन कैतवस्नेहवत्त्वं पुरुषकारपराङ्मुखत्वं च लक्षणया गम्यते । तथा 'कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे' इत्यत्र तु रामपदेन राज्यभ्रंशादिक्लेशसहतया पयोदाद्युद्दीपनकृतबाधासहिष्णुत्वम् । 'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्' इत्यत्र लोकातिशायि-पराक्रमनिधित्वं रामपदेन लक्षणया गम्यते । तथा च रामपदलक्षणीयार्थोऽपि नानात्वं भजते । तथा तादृशल-क्षणीयार्थावबोद्धरि विदग्ध इति व्यपदेशश्च भवति । तादृ-शलक्ष्यावगमश्च वाच्यवन्न केवलं शब्दायत्तः, किं तु व्य-ङ्ग्यत्वाभिमतवदर्थायत्तश्च, शक्यार्थप्रतीत्यनन्तरमेव तदु-त्पत्तेः प्रकरणादिसापेक्षश्चेति लक्ष्यमाणातिरेकेण व्यङ्ग्यार्था-ङ्गीकारो न युक्तः ।— इति चेन्न । रामपदेऽपि व्यञ्जनयैव तत्तदर्थप्रतीतिरित्युक्तम्  अस्तु वा लक्षणया प्रतीतिः । तथा-पि यथा नानार्थशब्दस्थलेऽभिधेयस्य नानात्वेऽपि संकेतग्रह-विषय एवार्थो नियमेन प्रतीयते नान्यः, तथा लक्षणीयार्थस्य नानात्वेऽपि मुख्यार्थनियतसंबन्ध्येव प्रतीयते, न त्वनियत-संबन्ध्यपि । प्रतीयमानस्तु नियतसंबन्धोऽनियतसंबन्धः

संबद्धसंबन्धश्च प्रकरणादिविशेषवशेन द्योत्यत इति व्यङ्ग्यस्य सर्वस्य न लक्ष्यता। यद्यपि चाविवक्षितवाच्यध्वनौ कथं चिल्लक्ष्यत्वशङ्कावतरति, तथापि 'विवक्षितान्यपरवाच्यध्वनौ कथं लक्षणाशङ्का मुख्यार्थबाधाभावात्? यथा— 'अत्ता एत्थ णुमज्जइ एत्थ अहं दिअहअं पुलोएहि। मा पहिअ रत्तिअन्धअ सेज्जाए मह णुमज्जिहिसि॥—' श्वश्रूरत्र शेते-ऽत्राहं दिवसं विलोकय। मा पथिक रात्र्यन्धक शय्याया-मावयोः शयिष्यसे॥ अत्र 'मह' इत्यावयोरित्यर्थे, ममे-त्येकवचनत्वे शङ्कावहत्वात्। हे रात्र्यन्धक, आवयोः शय्यायां रात्रौ शयिष्यसे। तच्छ्वश्रूरत्र शेते। अहमत्र। दिवसमित्यत्यन्तसंयोगे द्वितीया। सर्वं दिवसं पश्य। अनेन दिवसेऽप्यन्यत्र न गन्तव्यम्, मिथो मुखावलोकनेन दिनमतिवाहयावेति द्योत्यते। आवयोः शय्यायां शयिष्यस इत्यनेन मम शय्यायामेवागन्तव्यमिति व्यज्यते।—अत्र मुख्यार्थबाधाभावात्कथं लक्षणा? न चात्रापि तात्पर्यानुप-पत्त्या लक्षणा स्यादिति वाच्यम्। न ह्येव निरूढलक्षणा येन फलं न कल्प्येत। किं तु फललक्षणा। फलं च व्यञ्जनां विना न प्रतीयेतेति प्राक्प्रतिपादितम्। किं च यथाभिधा संकेतग्रहसापेक्षार्थमवबोधयति तथा लक्षणापि मुख्यार्थबाध-मुख्यार्थसंबन्धप्रयोजनसापेक्षैवार्थमवबोधयति। यत एव सा-

पेक्षतयाभिधाश्रया, अत एवाभिधापुच्छभूता सेत्युच्यते । व्यञ्जना तु न तथेति न लक्षणया तस्या अन्यथासिद्धिः । अविवक्षितवाच्यध्वनावपि लक्षणात्मकमेव ध्वननम् । तत्रार्थान्तरसंक्रमितवाच्ये 'त्वामस्मि वच्मि' इत्यत्र वच्मिपदस्योपदेशे लक्षणा । व्यङ्ग्यं त्ववश्यानुष्ठेयत्व-मित्युक्तम् । 'उपकृतं बहु नाम—' इत्यत्यन्ततिरस्कृत-वाच्येऽप्युपकृतमित्यादेरनुपकृतत्वादौ लक्षणा । एवमपका-रिण्यपि मया परुषं नोच्यत इति स्वस्य महत्त्वं व्यङ्ग्य-मित्युक्तम् । किं च विवक्षितान्यपरवाच्येऽप्यभिधामूलत्वे-नापि व्यञ्जनाप्रवृत्तेर्लक्षणानुगतत्वमेव तस्या न संभवतीति कुतो लक्षणान्तर्भावः? किं चावाचकवर्णानुसारेणापि व्य-ञ्जनाया दर्शनात्, किं बहुना, नेत्रत्रिभागावलोकनचेष्टादि-गतत्वेनापि प्रसिद्धेर्वर्णानुसारितैव नास्ति; दूरेऽभिधानुसा-रितानियमः; दूरतरां लक्षणानुसारितानियमः; दूरतमां लक्षणान्तर्भावः । तस्मादभिधालक्षणात्मकव्यापारद्वयाति-रिक्तो ध्वननव्यञ्जनादिपर्यायो व्यापारो नापह्नवनीय एव । ननु—व्यङ्ग्यत्वाभिमते सर्वत्र त्वयापि तात्पर्यं वाच्यम् । न च 'वाणीरकुडुङ्ग—' इत्याद्यसुन्दर स्थले व्यङ्ग्ये न तात्पर्यमित्युक्तमिति वाच्यम्, त-त्रापि तात्पर्यविश्रान्त्यभावेऽपि तात्पर्यस्यावश्याभ्युपेयत्वात्,

अन्यथा वृत्त्यन्तरकल्पनानुपपत्तेः । अतस्तात्पर्यमेव व्यापारो ऽस्तु, कृतं व्यञ्जनया ।— इति चेन्न । तात्पर्यस्य वृत्तिसहकारितैव न तु स्वतो वृत्तिकार्यकारिता, तथा सति लक्षणोच्छेदप्रसङ्गात् । तस्मात्तात्पर्यभिन्नापि व्यञ्जना नापह्नवनीया । किं चैवमभिधायां नान्तर्भवति, 'अत्ता एत्थ–' इत्यादौ वाच्यसंबन्धिप्रत्यायकत्वात् । नापि लक्षणायाम् । तथा हि–
'विवरीअरए लच्छी बम्हं दट्ठून णाहिकमलत्थं । हरिणो दाहिणणअणं रसाउला झत्ति थक्केइ ॥'—विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् । हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ॥ लक्ष्मीर्हरेर्नाभिकमलस्थं ब्रह्माणं दृष्ट्वा विपरीतरते रसाकुलाभिलाषाकुला लज्जाकुला वा हरेर्दक्षिणनयनं झटिति पिधत्ते ।— इत्यत्र हरिपदेन दक्षिणनयनस्य सूर्यता प्रतीयते । न हि लक्षणायां पदान्तरेण पदान्तरेऽर्थान्तरप्रतीतिर्भवति । तथा दक्षिणनयनं पिधत्त इत्यनेन सूर्यस्यास्फुरणम्, तेन च नाभीपद्मसंकोचः, तेन च ब्रह्मणः स्थगनम्; तेन च संभोगस्वाच्छन्द्यमिति परम्परासंबन्धिनोऽपि प्रतीयन्ते । न हि लक्षणायां तत्संभवतीत्यभिधालक्षणाभ्यां भिन्ना व्यञ्जनाङ्गीकार्या । येऽपि 'सत्यं ज्ञानम्–' इत्यादिवाक्यमेव वाचकम्, अखण्डाकारवृत्तिवेद्यमद्वितीयं ब्रह्मैव वाक्यार्थ इति वदन्ति, तैरप्यविद्यादशायां लौकिकवाक्येषु

पदपदार्थव्युत्पत्तिर्वाच्या, अन्यथा व्यवहारमात्रोच्छेदप्रसङ्गादिति तत्पक्षेऽपि 'निःशेषच्युतचन्दनम्' इत्यादौ विध्यादिर्व्यङ्ग्य एवेत्यङ्गीकार्यम् । येऽप्यखण्डया बुद्धया ग्राह्यो वाक्यस्फोट एव वाक्यार्थो वाक्यमेव वाचकं न पदमिति वदन्ति तेषामज्ञानविजृम्भितमेव तथा कल्पनम्, पदपदार्थव्युत्पत्तेरनुभवसिद्धत्वेन पदस्यावाचकत्वोक्त्यसंभवात् । अतस्तैरपि 'निःशेष—' इत्यादावधमादिपदानां व्यञ्जकत्वमकामैरप्यङ्गीकार्यम् । तदयमत्र निष्कर्षः;—व्यङ्ग्योपस्थितिर्हि न लक्षणया संभवति, मुख्यार्थबाधाद्यभावेऽपि तदुपस्थितेः, मुख्यार्थबाधस्थलेऽपि प्रयोजनं विना लक्षणाया असंभवेन प्रयोजनस्य व्यञ्जनाविषयत्वावश्यंभावात्; प्रयोजनस्यापि लक्ष्यत्वे प्रयोजनान्तरकल्पनापत्तिरित्यनवस्थेत्युक्तं प्राक्; परम्परासंबन्धिनि व्यङ्ग्ये लक्षणानुपपत्तेश्च । नाप्यभिधया व्यङ्ग्योपस्थितिः, स्वरूपकालाश्रयविषयसंख्यादिविरुद्धधर्मवत्त्वेन वाच्यव्यङ्ग्ययोरैक्यायोगात् । 'भद्रात्मनो दुरधिरोहतनोः—' इत्यादिशब्दशक्तिमूलध्वनावभिधाया नियमनादप्राकरणिकपदार्थेनोपमादौ संकेताग्रहाद्रसादेश्चापूर्वत्वेन प्रागनुपस्थितेः संकेतग्रहाविषयत्वात्प्रकरणादिसहायापेक्षानियमाच्च नाभिधया व्यङ्ग्योपस्थितिर्युक्ता । न च प्रकरणादीनामकल्पप्रवृ-

त्यन्तरसहकारित्वकल्पनाद्वरं क्लृप्ताभिधासहकारित्वकल्पनमिति वाच्यम्; अभिधाया अर्थोपस्थापकत्वकल्पनादशायां प्रकरणादीनां तत्सहकारित्वं न क्लृप्तमित्यत्रापि तत्सहकारित्वकल्पनं न युक्तं स्वभावभेदप्रसङ्गात्, अन्यथा मुख्यार्थबाधादीनामपि तत्सहकारित्वकल्पनेन लक्ष्योपस्थितिसंभवे लक्षणापि न स्यादिति दिक् ॥ अत्र व्यक्तिविवेककृतः— अनन्यलभ्य एवार्थे वृत्त्यन्तरकल्पनं युक्तम् । प्रकृते चानुमानादेव व्यङ्ग्योपस्थितिसंभवान्न वृत्त्यन्तरकल्पना युक्ता । तथा हि— न तावदिहासंबद्धोऽर्थो व्यज्यतेऽतिप्रसङ्गात् । अत एवानियतसंबन्धोऽपि न व्यज्यते । अपि तु नियतसंबन्धवत एव व्यक्तिरिति त्वयापि वाच्यम् । ततश्च नियतसंबन्धरूपव्याप्तिमता पक्षसपक्षसत्त्वविपक्षव्यावृत्तत्वात्मकरूपत्रयवता लिङ्गेनैव व्यङ्ग्यार्थानुमितिरुत्पद्यते । यथा— 'भम धम्मिअ वीसद्धं सो सुणओ अज्ज मारिओ तेण । गोलावरिकच्छकुडुङ्गवासिणा दरिअसीहेण ॥' भ्रम धार्मिक विस्रब्धं स शुनकोऽद्य मारितस्तेन । गोदावरीकच्छकुडुङ्गवासिना दृप्तसिंहेन ॥ इयं संकेतनिकुञ्जे कुसुमाद्यर्थिनो धार्मिकस्य भ्रमणनिवारणपरायाः स्वैरिण्या उक्तिः । हे धार्मिक, यस्ते भीत्युत्कर्षमकार्षीत्स शुनकस्तेन यः पूर्वं कर्णाकर्णिकया श्रुतस्तेन

गोदावरीनिकुञ्जे गूढं वर्तमानेन दृप्तसिंहेन मारितः । तद्वि-स्रब्धं शङ्कां विना भ्रम । प्राप्तकाले लोट् । विस्रब्धभ्रमणस्य प्राप्तः काल इति यावत् । —अत्र गोदावरीतीरे न भ्रमि-तव्यमिति यत्तव व्यङ्ग्यत्वेनाभिमतं तद्गृहे शुनकनिवृत्त्या विधीयमानेन भ्रमणेनानुमानादेव सिध्यति । न च गृहे भ्रमणं गोदावरीतीरे भ्रमणाभावं कथमनुमापयेद्वैयधिकर-ण्यादिति वाच्यम् । गोदावरीतीरवासिसिंहकृतशुनकनिवृत्त्या गृहे भ्रमणप्रतिपादकेनानेन वाक्येन गृहे शुनकनिवृत्तिवद्गो-दावरीतीरे सिंहसद्भावोऽपि प्रतिपाद्यते । ततश्च गोदावरी-निकुञ्जो भीरुभ्रमणायोग्यो भयकारणवत्त्वात्, अभीरुभ्र-मणायोग्यो वा सिंहाक्रान्तत्वादिति वानुमानम् । अत्र सारमेयभयादपि भ्रमितुमप्रभवन्कथं पञ्चास्यसंचारो-चिते देशे परिभ्रमेदिति सिंहवत्त्वस्य अभीरुभ्रमणा-योग्यत्वसाधकत्वं संभवतीति ध्येयम् । यद्यद्भीरुभ्रमण-योग्यं तत्तद्भयकारणरहितं यथा गृहमिति व्यतिरेकव्या-प्तिप्रदर्शनपरं पूर्वार्धम् । गोदावरीनिकुञ्जश्च भीरुभ्रमणयो-ग्यताव्यापकभयकारणराहित्यविरुद्धभयकारणवान्, अतो न भीरुभ्रमणयोग्य इत्यनुमानाद्गोदावरीतीरे न भ्रमितव्यमिति सिद्धेः किं व्यञ्जनया? —इत्याहुः । तदयुक्तम् । भीरुरपि गुरोः प्रभोर्वा निदेशेन कान्तानुरागेण निबिडाभनिश्चयेन

वा सत्यपि भयकारणे भ्रमत्येव। ततश्चोत्कटभ्रमणकारण-राहित्यमत्रोपाधिरित्यनैकान्तिको हेतुः। शुनकस्पर्शादेर्नि-षिद्धतया शुनकाद्बिभ्यदपि कश्चिद्वीरत्वेन सिंहान्न बिभेति। अतश्च गोदावरीकुञ्जश्च भीरुभ्रमणायोग्यः सिंहवत्त्वादिति हेतुरपि व्यभिचारी। यदि च शुनकाद्बिभ्यतोऽपि धार्मि-कस्य वीरत्वेन सिंहमृगयौत्सुक्ये निश्चिते गोदावरीकच्छो नैतद्भ्रमणयोग्यः सिंहवत्त्वादिति प्रयुज्यते तदा साध्याभाव-व्याप्ततया विरुद्धता। ननु गोदावरीकच्छभ्रमणं भयसाधनं भयकारणवद्देशाधिकरणकभ्रमणत्वादित्येव साध्यते, तथा च नोक्तदोष इति चेत्; तथापि गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः किं तु वचनादेव। वचनजन्यज्ञानस्य च वक्तुराप्तत्वसंदेहेनाप्रामाण्यश-ङ्काकलङ्कितत्वेन संदिग्धासिद्धो हेतुः। वस्तुतस्तु तत्र सिंहाभावे निश्चितेऽप्येतादृशविदग्धवाक्यात्तत्र न भ्रमितव्य-मित्येतदाशय इति विदग्धैरनुभूयमानत्वेन नानुमानशङ्काव-काशः। तथा 'निःशेषच्युतचन्दनम्–' इत्यादौ यानि चन्दनच्यवनादीन्युपभोगचिह्नतयोक्तानि तानि स्नानादिका-रणान्तरसाधारणान्येवेति व्याप्त्यभावादनैकान्तिकतया न कथंचिदपि लिङ्गविधया दूतीसंभोगमवबोधयन्ति। यद्यप्यत्र चन्दनच्यवनादेः संभोगासाधारण्यं प्राक्प्रतिपादितं तथापि

प्रकृतवाक्यात्तस्य संभोगव्याप्यतावच्छेदकरूपेणानुपस्थिते-र्नानुमापकत्वसंभव न चैवं नियतसंबन्धापरिज्ञाने व्यञ्ज-कत्वमप्यनुपपन्नमतिप्रसङ्गादित्युक्तमिति वाच्यम्, अधमप-दसहायतयैव तेषां व्यञ्जकत्वाङ्गीकारेण नियतसंबन्धाभावेऽ-प्यतिप्रसङ्गाभावात्। अत एव वाक्यार्थानां सर्वत्र वक्त्रादि-वैशिष्ट्यज्ञानोपहितानामेव व्यञ्जकत्वमुक्तम्। ननु तर्हि यथाधमपदार्थसहकारेण चन्दनच्यवनादीनां व्यञ्जकत्वं त-थानुमापकत्वमपि स्यादिति चेन्न; अधमत्वस्यात्रानिश्चया-त्प्रकृतवाक्यस्य कुपितकामिनीवक्तृकत्वेनार्थाव्यभिचारित्वा-निश्चयात्। न चैवं संदिग्धव्याप्तिपक्षधर्मताकेनाधमपदार्थेन व्यञ्जनमपि कथमिति वाच्यम्, व्यक्तिवादिना संभाव्यमा-नादेव तादृशादर्थादर्थान्तरप्रतीतेरनुभवबलेन स्वीकारादनि-श्चितत्वं व्यञ्जनायां साधकत्वमेवावलम्बत इत्यनवद्यम्॥

इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कसाग्निचिद्विश्वजिदतिरात्रयाजि-
सत्यमङ्गलरत्नखेटश्रीनिवासदीक्षिततनयस्य कामाक्षीगर्भ-
संभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरणसहजताल्बध-
विद्यावैशद्यस्य श्रीराजचूडामणिदीक्षितस्य कृतौ
काव्यदर्पणे ध्वनिगुणीभूतव्यङ्ग्यसंकीर्णानिर्णयः
पञ्चम उल्लासः॥

---

## षष्ठ उल्लासः ॥

अथावसरसंगत्या चित्रभेदान्दर्शयन्पूर्वोक्तमनुभाषते—

**अव्यङ्ग्यमपि यच्चारु तत्काव्यमधमं मतम् ।**
**शब्दार्थचित्रभेदेन तद्द्विधेति पुरोदितम् ॥**

यदव्यङ्ग्यमपि चारु गुणालंकारयुक्तं तत्काव्यमधमम् । तच्च काव्यं शब्दचित्रमर्थचित्रं चेति द्विविधमिति प्रथमोल्लास एव प्रतिपादितम् ॥ २६७ ॥

नन्वेवं पुनरारम्भवैयर्थ्यमित्यत आह—

**शब्दस्य तत्र प्राधान्ये शब्दचित्रमुदाहृतम् ।**
**अर्थस्य तत्र प्राधान्ये त्वर्थचित्रमिति स्थितिः ॥**

तत्र शब्दार्थयोर्मध्ये शब्दस्य शब्दालंकारस्य प्राधान्ये शब्दचित्रमर्थस्यार्थालंकारस्य प्राधान्ये त्वर्थचित्रमिति स्थितिः । एवं च प्रथमोल्लासे 'स्वच्छन्दोच्छलत्—' इत्यादौ यत्र नार्थालंकारस्तत्र शब्दचित्रम्, तथा यत्र 'विनिर्गतं मानदम्—' इत्यादौ न शब्दालंकारस्तत्रार्थचित्रमुदाहृतम् । इह तु यत्रोभयोरपि चावस्थितिस्तत्र कथं व्यवस्थेत्याकाङ्क्षायां प्राधान्याप्राधान्याभ्यां व्यवस्थेति प्रतिपादनार्थं पुनरारम्भः ।

न चेयं व्यवस्थापि पूर्वमेव क्रियतामिति वाच्यम्, तत्र काव्यत्रैविध्यकथनमात्रस्यैव प्रस्तुतत्वेन तद्भेदप्रदर्शनस्य तत्र प्रासङ्गिकतयोक्तव्यवस्थाकरणस्यानवसरदुःस्थत्वात्। इह तु प्राप्तावसरतया पूर्वोक्तमनूद्य व्यवस्था क्रियत इति न पुनरारम्भवैयर्थ्यमिति भावः ॥ २६८ ॥

किं च रूपकादयोऽर्थालंकारा एव काव्यशोभावहा इति केचित्, अनुप्रासादयः शब्दालंकारा एव तथेत्यपरे। तत्रैकैकपक्षोपक्षेपानुगुण्यादाद्योल्लासोदाहरणद्वयम्, यतः 'स्वच्छन्दोच्छलत्—' इत्यत्र न कदाचिदर्थालंकारशङ्का, 'विनिर्गतम्—' इत्यत्र च न शब्दालंकारशङ्का। एवं च मतद्वयेऽपि पूर्वोक्तो द्विधा विभागोऽनुपपन्न इति शङ्कानिरासार्थः पुनरारम्भ इत्यभिप्रेत्याह—

**अलंकारानर्थगतानेके शब्दगतान्परे।**
**प्राहुर्नियामकाभावात्ते भवन्त्युभयाश्रिताः ॥**

अर्थवत एव शब्दस्य काव्यत्वं न तु शब्दमात्रस्य, मर्दलशब्दादेरपि काव्यत्वप्रसङ्गात्। अतोऽर्थमुखानवेक्षिणः शब्दस्य न काव्यत्वं किं त्वर्थस्यैव। ततश्च काव्यशोभाकरा अलंकारा अर्थगता एव वाच्या इति रूपकादय एवालंकारा नानुप्रासादय इत्येके प्राहुः। अपरे तु शब्दानुपस्थापितस्या-

र्थस्य चमत्कारकारित्वाभावेनावश्यिकत्वाच्छब्द एव काव्यमिति शब्दाश्रिता अनुप्रासादय एवालंकारा न त्वर्थगता रूपकादया इत्याहुः। वस्तुतस्तु शब्दावच्छिन्नोऽर्थोऽर्थावच्छिन्नः शब्दश्च काव्यम्, न त्वेकैकमात्रं विनिगमनाविरहात्। किं च व्यङ्ग्यप्रतीत्यनुकूलमेव काव्यम्। व्यङ्ग्यप्रतीत्यनुकूलता च शब्दार्थयोस्तुल्येति शब्दार्थावेव काव्यमिति प्रतिपादितं प्राक्। ततश्च शब्दाश्रिता अनुप्रासादयोऽर्थाश्रिता रूपकादयश्चालंकारा इति तत्त्वम्। तदुक्तम्— 'रूपकादिरलंकारस्तस्यान्यैर्बहुधोदितम्। न कान्तमपि निर्भूषं विभाति वनिताननम्॥ रूपकादिमलंकारं बाह्यमाचक्षते परे। सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलंकृतिम्॥ तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी। शब्दाभिधेयालंकारभेदादिष्टं द्वयं तु नः॥' इति। अयमर्थः— तस्य काव्यस्य रूपकादिरेवालंकारो नानुप्रासादिरित्यन्यैर्बहुधा कथितम्। ननु व्यङ्ग्यभूतरसानुगुण्ययुक्तस्य शब्दस्य किमलंकारैरित्यत उक्तम्—न कान्तमपीति। यथा स्वतः कान्तमपि ताटङ्कादिभूषणाभावे कान्तामुखं नातीव शोभते तद्वन्निरलंकारं काव्यमपीति काव्यशोभातिशयार्थमलंकारादर इति भावः।

अथ शब्दालंकारवादिनां मतमाह— रूपकादिमर्थालंकारं बाह्यं काव्यबहिर्भूतमेव परे वदन्ति, शब्दस्यैव काव्यत्वा-

दिति भावः। सुबन्तानां तिङन्तानां च विशेषेणोत्पत्ति तत्तद्विच्छित्यनुगुणतया निवेशनम्, अनुप्रासादिकमिति यावत्। वाचां शब्दात्मकानां काव्यानामलंकृतिमाचक्षते। स्वमतमाह— तदेतदिति। तदेतत्सुपां तिङां च निवेशनं सौशब्द्यं सुशब्दत्वम्। शब्दालंकारमेवेति यावत्। आहुः। अर्थानां रूपकादीनां विनिवेशनं तु नेदृशं न शब्दालंकारात्मकम्। अतो विनिगमनाविरहाच्छब्दालंकारोऽर्थालंकारश्चेति द्वयमप्यस्माकं काव्यशोभाकरत्वेनेष्टमिति। तस्माद्द्वयोरपि काव्यशोभाकरत्वेनावश्यिकत्वान्न विभागानुपपत्तिरिति भावः। शब्दचित्रं यथा— 'प्रथममरुणच्छायस्तावत्ततः कनकप्रभस्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः। उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः॥' —अत्रोत्तरार्धे तव इति पदं सरसबिसिनीत्यनेन संबध्यते। अत्र केवलं व्यञ्जनसाम्याद्वृत्त्यनुप्रासः प्रधानम्, तस्याद्यन्तनिर्वाहात्। उपमालंकारस्त्वप्रधानम्, तस्य क्वचित्क्वचिद्विच्छेदात्॥ अत्रार्थचित्रं यथा— 'ते दृष्टिमात्रपतिता अपि कस्य नान्तःक्षोभाय पक्ष्मलदृशामलकाः खलाश्च। नीचाः सदैव सविलासमलीकलग्ना ये कालतां कुटिलतामपि न त्यजन्ति॥' —ये नीचा अर्वाक्स्वभावास्तुच्छशीलाश्च सविलासं ससंभ्रमं

चालीकलग्ना ललाटलग्ना: सौजन्यनटनेनानृतलग्नाश्च ये कालतां नीलतां मलिनहृदयतां च कुटिलतां वक्रतां गूढविप्रियकारितां च न त्यजन्ति, ते पक्ष्मलदृशामलका: खलाश्च दृष्टमात्रा अपि कस्यान्त:-क्षोभाय न भवन्ति ।— इत्यत्र द्वयोर्नीचत्वाद्येक-गुणान्वयात्क्षोभकरणरूपैकक्रियान्वयाच्च श्लेषपरिपोषित: समुच्चयालंकार: प्रधानम्, आद्यन्तनिर्वाहात्। अनुप्रासस्तु क्वचित्क्वचित्सन्नप्यनिर्वाहादप्रधानम्। ननु शब्दचित्रे चन्द्रोदयस्योद्दीपनस्यार्थचित्रे च कामिनीलक्षणस्यालम्बनस्य च वर्ण्यतया शृङ्गारो व्यङ्ग्य इत्यव्यङ्ग्यत्वाभावात्कथमत्राधमकाव्यत्वमिति चेत्; तथापि स्फुटं रसस्यानुपलम्भादव्यङ्ग्यत्वम्, अस्फुटव्यङ्ग्यत्वमेवाव्यङ्ग्यत्वमिति प्रागेव प्रतिपादितत्वात्। अस्फुटत्वं च विवक्षानारूढत्वम्। यदाह— 'रसभावादिविषयविवक्षाविरहे सति। अलंकारनिबन्धो य: स चित्रविषयो मत:॥' इति। अत्र व्यङ्ग्यस्य विवक्षाविषयत्वे तु नाधमकाव्यत्वम्। यदाह— 'रसादिषु विवक्षा तु स्यात्तात्पर्यवती यदा। तदा नास्त्येव तत्काव्यं ध्वनेर्यत्तु न गोचर:॥' इति। अन्तत: सर्वत्र वर्णनीयविषयकरतिभावस्यैव व्यङ्ग्यस्य सत्त्वादविवक्षयैव निर्वाह्यम्। विवक्षा च कवे: सहृदयस्य वा, कविविवक्षापथागोचरस्यापि व्य-

ङ्ग्यस्य सहृदयैरनुभूयमानत्वात् । वस्तुतस्तु व्यङ्ग्ये सहृदयानुभूतिरेवोत्तमत्वादिप्रयोजिकेत्याहुः । अत्र शब्दचित्रार्थचित्रभेदेन द्वैविध्यकथनं न्यूनताव्यवच्छेदार्थमेव, न त्वधिकव्यवच्छेदार्थमपि । ततश्च शब्दार्थचित्रयोर्द्वयोरपि प्राधान्ये विनिगमनाविरहादुभयचित्रं यथा— 'भद्रं पक्ष्मलितं करोतु भवतां पाटल्यमाबिभ्रती पार्वत्याः पदयावकेन जगतां पत्युर्जटामण्डली । या नाट्यारभटीषु संभ्रमिभुजादण्डप्रकाण्डार्भटीसद्यःसंघटिताभ्रविभ्रमतटिद्धाटीरुचं टीकते ॥' अत्रानुप्रासः, पार्वतीपदयावकेन पाटल्यमाबिभ्रतीति गूढहेतूत्प्रेक्षा, तटिद्धाटीरुचं टीकत इति निदर्शना च प्रधानान्येवेत्युभयचित्रता । अत्र काव्यरूपधर्मिप्रस्तावादिङ्मात्रमुक्तम् । तदवान्तरभेदाश्च शब्दार्थालंकारात्मकधर्मनिरूपणात्स्वावसरे करिष्यमाणादेव निरूपिता भवेयुरिति नेह निरूप्यन्ते ॥

इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कसाग्निचिद्विश्वजिदतिरात्रयाजि-
सत्यमङ्गलरत्नखेटश्रीनिवासदीक्षिततनयस्य कामाक्षीगर्भ-
संभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरणसहजताल्लब्ध-
विद्यावैशद्यस्य श्रीराजचूडामणिदीक्षितस्य कृतौ
काव्यदर्पणे शब्दार्थचित्रनिरूपणं
षष्ठ उल्लासः ॥

---

## ॥ श्लोकानुक्रमणिका ॥


| | पृष्ठम् | | पृष्ठम् |
|---|---|---|---|
| अ | | असावुदयमा | ९५ |
| अइपिहुलं | ११४ | असोढा तत्कालो | २९९ |
| अतन्द्रचन्द्रा | २४० | अस्मिन्नेव लता | १७१ |
| अत्ता एत्थ | ३६६ | अहार्यभारादिव | १९१ |
| अत्युच्चाः परितः | २९४ | अहौ वा हारे | २०४ |
| अत्रासीत्फणि | २९० | आ | |
| अदृष्टे दर्शनो | ३१० | आकुञ्च्य पाणि | १७४ |
| अन्यत्र यूयं | १२१ | आक्रम्य तारुण्य | १६७ |
| अन्यत्र व्रजतीति | १६८ | आगत्य संप्रति | ३०६ |
| अभुञ्जत भुवं | २७५ | आच्छादितायत | ९९ |
| अमितः समितः | २२४ | आदित्योऽयं स्थितो | २६२ |
| अमुं कनक | २६३ | आलक्ष्यदन्त | २०७ |
| अयं स रशनो | २९२ | आलीजनादेश | १९३ |
| अलं स्थित्वा | २६२ | आश्लिष्य भङ्गा | २०२ |
| अलससिरोमणि | २२८ | आहूय लीलाशुक | १९५ |
| अविरलकरवा | २९७ | इ | |
| असावपूर्वः | १८८ | इतः स दैत्यः | ९३ |

| | पृष्ठम् | | पृष्ठम् |
|---|---|---|---|
| उ | | कर्णश्लेस्कवच | १७९ |
| उअ णिच्चल | ३२ | कर्णातिथित्वं | १९१ |
| उत्कृत्योत्कृत्य | १८१ | कस्स व ण होइ | ३६२ |
| उत्सिक्तस्य तपः | २१६ | किं त्वामन्यत | २१३ |
| उद्देशोऽयं | ११८ | किमत्र चित्रं वद | १९० |
| उन्निद्रकोकनद | २९० | कृतं च गर्वाभि | २७३ |
| उपकृतं बहु | २१, १३२ | कृतं मृणालैः | १९१ |
| उल्लास्य काल | २२२ | कृतमनुमतं | १७६ |
| ए | | कृताप्लवा सा | २०१ |
| एकस्मिञ्शयने | २१५ | केसेसु बला | २३३ |
| एकातपत्रं | २६३ |  कैलासस्य | २३१ |
| एद्दहमेत्त | ९३ | कैलासालय | २९३ |
| एवं वादिनि | २४६ | क्वाकार्यं शश | २१८ |
| एह्येहि वत्स | २०६ | क्षणदासावक्षणदा | २५१ |
| ओ | | क्षतात्किल त्रायत | २६३ |
| ओणिद्दं दोब्बल्लं | ११४ | क्षुद्राः संत्रास | १७८ |
| ओल्लोल्लकर | २३८ | ख | |
| क | | खणपाहुणिआ | २८४ |
| कण्ठकोणविनि | २०५ | खलववहारा | २४४ |
| कथमवनिप | ३६१ | ग | |
| कदा तदालिङ्गन | १९९ | गच्छ गच्छसि | ३६१ |

| | पृष्ठम् |
|---|---|
| गच्छाम्यच्युत | ३०९ |
| गतस्ते मञ्चस्त्वं | ३१९ |
| गाढकान्तदशन | २३० |
| गाढालिङ्गणरह | २३४ |
| गामारुहम्हि | २६४ |
| गुरुअणपर | १२१ |
| गुरोरप्यवलि | २१३ |
| ग्रामतरुणं | २३ |
| ग्रीवाभङ्गाभि | १७९ |
| **च** | |
| चन्द्रांशुलीला | २०२ |
| चन्द्रातपालेप | १६६ |
| चित्ते निघत्ते | १८७ |
| चित्रं महानेष | १८२ |
| चित्रे भवन्तं | १६४ |
| चिन्तयन्ती | २५० |
| चिन्तामृषादूति | १६५ |
| चिराय चित्तोप | १६५ |
| **ज** | |
| जनस्थाने भ्रान्तं | ३०५ |
| जा थेरं व | २३५ |
| जानाति यावत् | १९१ |
| जाने कोप | २०८ |
| जे लङ्कागिरि | २३५ |
| जोण्हाइ महु | २६१ |
| **ण** | |
| णवपुण्णिमा | २५७ |
| णोल्लेइ | ११९ |
| **त** | |
| तइआ मह | ११७ |
| ततस्तु तेभ्यस्त | १९७ |
| तथाभूतां दृष्ट्वा | ११५, ३१३ |
| तदप्राप्तिमहा | २५० |
| तन्तन्यमाने तनु | १६६ |
| तमालमग्रे | २०० |
| तरुणतातरणि | ९२ |
| तरुणिमनि कल | २७६ |
| तस्याः सान्द्र | २१३ |
| ताण गुणग्गह | २६९ |
| तिग्मरुचिप्र | २२१ |
| तुह वल्लहस्स | २५२ |
| तेजःस्फूर्तिरसा | ४६ |

| | पृष्ठम् | | पृष्ठम् |
|---|---|---|---|
| ते दृष्टिमात्र | ३७७ | निःशेषच्युत | १९; ३१३ |
| त्वं मुग्धाक्षि | १६१, २९५ | निमीलयत्यक्षि | |
| त्वामस्मि वच्मि | १३० | निशाधि | १६६ |
| त्वामालिख्य | १७३, २०९ | निमीलयत्यक्षि नि- | |
| द | | शासु | १९८ |
| दत्ते चक्षुर्म | १६८ | निरुपादानसंभार | २२४ |
| ददौ रहः पङ्कज | २११ | निशितशरधिया | २५४ |
| दर्पान्धगन्ध | २३० | प | |
| दद्यत्यसौ | १६२ | पञ्चायुधास्तो | १९६ |
| दूती मनोवेग | १९८ | पाथ पथि शुक | २६६ |
| दूरादुत्सुकमागते | १५५ | पन्थ अ ण एत्थ | २२५ |
| दृष्टिं हे प्रति | १२४ | परिच्छेदातीतः | २७२ |
| दृष्ट्वा तमग्रे | १९५ | परिमृदित | १५५ |
| दैवादहमत्र | १४३ | पविसन्ती घर | २५९ |
| द्वयं गतं संप्रति | ३५९ | पश्याम्यलिश्याम | २०३ |
| द्वारोपान्त | १२२ | पश्येत्कश्चित् | ३०० |
| ध | | पुष्पोद्भेदम | १४७ |
| धन्यासि या | २२८ | प्रत्यर्थिक्षिति | ४४ |
| ध्यानावधाना | १८८ | प्रत्याख्यानरुचेः | ३६४ |
| न | | प्रथममरुण | ३७७ |
| न चेह जीवितः | २६२ | प्रधनाध्वनि | २७१ |

| पृष्ठम् | पङ्क्तिः | शुद्धपाठः |
| --- | --- | --- |
| ३४८ | २० | सध्यासं |
| ,, | २१ | र्थत्वप्राप्तौ |
| ३५० | ९ | श्रुत्यादि |
| ३५३ | ६ | रूपं |
| ३५८ | ४ | परं |
| ३६० | १० | वाच्योऽर्थः |
| ३६९ | २० | कलतब्- |
| ३७० | १ | कलता |
| ,, | ३ | कलत |
| ३७३ | ७ | कारेण |
| ,, | १० | पदार्थेन |
| ३७६ | ३ | कादय |
| ३७८ | ९ | दयस्योद्दी |
| ,, | १४ | निबन्धो |

---

| पृष्ठम् | पङ्क्तिः | शुद्धपाठः |
|---|---|---|
| ३२९ | ६ | ब्राह्मण |
| ,, | ७ | मुपस्थानं |
| ,, | ९ | मात्रं...मन्त्रं |
| ,, | १० | कारणत्वं |
| ,, | ११ | विनियो |
| ,, | १६ | योगेऽपि |
| ३३० | २ | लैङ्गिको |
| ,, | १० | श्चैन्द्रं |
| ३३१ | ९ | श्रुत्यैवोक्तः |
| ,, | १० | ऐन्द्रयेन्द्र |
| ,, | १६ | साध्यस्यापि |
| ३३२ | ५ | पत्यैन्द्रीपदे |
| ,, | ७ | व्यपदिश्यत |
| ,, | १० | स्योनं |
| ,, | ११ | सुशेवं |
| ,, | २० | नेदं |
| ३३३ | ३ | रेव |
| ३३४ | ३ | अत्राभि |
| ३३६ | १ | इत्याकर |
| ३३८ | १५ | संकोचो |
| ३४३ | २१ | अग्नीत् |

| पृष्ठम् | पङ्क्तिः | शुद्धपाठः |
| --- | --- | --- |
| २९३ | २० | त्युपाधेय |
| २९९ | ४ | स्याद्दानाय |
| ३०१ | २० | सह |
| ३०२ | १५ | भूतव्यञ्जयत्वे |
| ३०३ | ६ | सहे |
| ,, | ९ | विधेय |
| ,, | १४ | परम्परया |
| ३०४ | ४ | वानुरणन |
| ,, | ६ | शब्द |
| ३१० | ३ | व्यङ्गय |
| ,, | ४ | गुणाद्दिव |
| ३१२ | १७ | त्यप्याहुः |
| ३१३ | ४ | निषेधो |
| ,, | ११ | चेन्न |
| ३१५ | ७ | कोलाहलं |
| ३१६ | ३ | संसृष्ट्या |
| ३१७ | १७ | नुक्त्वा |
| ३२१ | ८ | याखण्डस्य |
| ३२८ | २ | हेतुत्व |
| ,, | ८ | बलाबलं |
| ३२९ | २ | इन्द्रस्येवो |

| पृष्ठम् | पङ्क्तिः | शुद्धपाठः |
|---|---|---|
| २११ | ५ | उत्तमयुवप्रकृति |
| २१५ | २० | ध्येयम् |
| २१९ | ४ | मुखी–’ |
| २२४ | ९ | ऽननुकूलः |
| २२९ | १८–१९ | मौर्वीटङ्कृतिश्रवणादेव |
| २३६ | १४ | विरहिणी |
| २४७ | १४ | ऐकपद्ये |
| २४८ | १८ | खड्गः समिच्छेदात्सफल- स्त्वद्विषां |
| २४९ | ७ | भानुमा- |
| २५२ | ७ | तीत्यत्रालं |
| ,, | ११ | मिलाण |
| ,, | १२ | महिसमुहं |
| २७७ | १९ | निरूपणप्रस्ताव एवो |
| २७९ | १९ | संबन्ध |
| २८० | १ | वेदखाम्बुधि |
| २८२ | १० | संकरेणैक |
| २८३ | १ | त्यास्तां तावत् । |
| ,, | १० | सांप्रतं |
| २८८ | १६ | ङ्गव्यङ्ग्यं |
| २९३ | ७ | सद्यः |

| पृष्ठम् | पङ्क्तिः | शुद्धपाठः |
|---|---|---|
| १६७ | १२ | स्यादयथाज्ञानं |
| १६९ | १९ | त्वत्प्रिया नाम |
| १७१ | ११ | स्तोतुकामस्य पत्युः। सुतनुरधित कोपं |
| १७२ | १२–१४ | प्रियसखत्वम् । ततश्च त्वयि निर्गच्छति यैर्नियमेन निर्गम्यते तेष्वस्त्रेषु गतेष्वपि त्वं न गच्छसि, धिक् निर्लज्जतामिति व्यज्यते । |
| १७४ | १३ | पाणिमाकुञ्च्य |
| १७६ | १ | गतायामपि तिष्ठन्ति |
| १७७ | ११ | समं |
| १७९ | ४ | स्वदेहं |
| १८९ | १६ | भवेद्गद्गद |
| १९० | ६ | चिन्ता मोहः |
| १९४ | २ | स्वयमेव |
| १९५ | ४ | क्रमाद्व्यज्येते |
| १९८ | १० | अपस्मारोऽति |
| २०० | १३ | ब्रवीति |
| २०३ | १८ | एव तत्र |

| पृष्ठम् | पङ्क्तिः | शुद्धपाठः |
| --- | --- | --- |
| ४७ | ६ | तद्वैयर्थ्या |
| ५६ | ६ | छत्रिणा |
| ,, | ७ | त्स्वार्थायां |
| ,, | १६ | क्षणामाह |
| ५७ | ८ | च्छत्रिसमुदाये |
| ७७ | १४ | परम्परा |
| १०१ | १७ | दयुक्तम् |
| १०४ | १७ | च्छत्र्यच्छत्रि |
| ११७ | १४ | तइआ |
| १२२ | १५ | न्तरे |
| १२६ | ५ | बिम्बोक्ति |
| १२८ | ९ | काव्यभेद |
| १२९ | ५ | अभिधामूल |
| १४४ | १३ | बह्व्यादि |
| १५५ | १४ | मान्तरत्वेना |
| ,, | १५ | व्यभिचा |
| १५६ | १६ | र्विभावादि॰ |
| १५७ | १ | प्रसज्येतेति |
| १५८ | १ | एवोपनिबद्धः |
| १६० | ५ | पौनःपुन्य |
| ,, | १६ | दाविर्भावः |

# शोधनपत्रम् ।

| पृष्ठम् | पङ्क्तिः | शुद्धपाठः |
|---|---|---|
| ८ | १५ | संभवादि |
| ९ | १८ | तथा |
| १३ | १३ | प्रतीयमानच्छायैषा |
| २० | ९ | काव्येऽव्याप्ति |
| २१ | ६ | न्यग्भावितवाच्यतया |
| ,, | ९ | यत्र किमुच्यते |
| २७ | ७ | दोषाज्ञाने व्यङ्ग्य |
| २९ | १ | व्यङ्ग्यभेदात् |
| ३२ | ८ | पत्तम्मि रेहइ बलाआ |
| ,, | ९ | निश्चल निःस्पन्दा |
| ,, | १४ | निःस्पन्दत्वेन |
| ३४ | २० | अन्यथा शक्त्य· |
| ३७ | ११ | वत द्विषये–इति |
| ४१ | १४ | इत्येके |
| ,, | १७ | अघटादिव्यावृत्तिरूपो |
| ,, | १८ | इत्याहुः |
| ४२ | १० | घोष: |
| ,, | १४ | तदर्थप्रतीतौ |

| | पृष्ठम् | | पृष्ठम् |
|---|---|---|---|
| रे रे चञ्चललो | २६९ | संसारार्त्या विधुर | २०७ |
| ल | | सखीजनानां | १६४ |
| लावण्यं तदसौ | २४५ | सहि णवणिहुवण | २५८ |
| लिखन्नास्ते | २६७ | सहि विरइऊण | २३७ |
| व | | सार्कं कुरङ्गक | २९८ |
| वाणीरकुडुङ्ग | ३१५ | सा पत्युः प्रथमाप | १७० |
| वारिज्जन्तो वि | २५५ | सायं स्नानमुपा | २४९ |
| विनिन्द्यते हन्त | २०१ | साहेन्ती सहि | ३१ |
| विनिर्गतं मानद | २६ | सिरामुखे स्यन्दत | १७९ |
| वियदलिमलिना | १५४ | सुभ्रु त्वं | ९१ |
| विवरीअरए | ३६८ | सुव्वइ समागमि | १२० |
| विहलं खणं | २५९ | सेयं ममाङ्गेषु | १४२ |
| वीर श्रीरघुनाथ | २०७ | सो मुद्धसामलङ्गो | २५६ |
| श | | स्तुमः कं वामाक्षि | २१० |
| शनिरशनिश्च | २२६ | स्त्रीपरिचयाज्जडा | ७३ |
| शाखाभृतां | ४५ | स्निग्धश्यामल | २८४; ३०३ |
| शिथिलशिथिलं | १३५ | स्वच्छन्दोच्छल | २५ |
| शून्यं वासगृहं | १५९ | स्वयं किमप्यस्फुट | १९४ |
| शृणोमि चेत्तस्य | १९७ | स्वेदाम्बुसिक्ते | १८८ |
| स | | ह | |
| संचारिकाप्रेषण | १९६ | हरत्यघं संप्रति | २०६ |

| | पृष्ठम् |
|---|---|
| प्रस्थानं वलयैः | १७२ |
| प्रेमार्द्राः | १६३ |
| प्रेयान्सायम | २६५ |
| **ब** | |
| बन्दीकृत्य नृप | २९६ |
| ब्रवीषि चेद्दुर्हिण | २०१ |
| ब्रह्मन्नध्ययनस्य | २१० |
| ब्राह्मणाभिभव | ३१२ |
| **भ** | |
| भद्रं पक्ष्मलितं | ३७९ |
| भद्रात्मनो दुरधि | १०९ |
| भम धम्मिअ | ३७० |
| भवत्प्रसङ्गे | १६७ |
| भुक्तिमुक्तिकृ | २४८ |
| भूयो भूयः सविध | २७१ |
| भ्रमिमरतिमलस | १०६; ३०८ |
| **म** | |
| मथ्नामि कौरव | ३१४ |
| मधुद्रवैर्मन्मथ | १८९ |
| मध्येनभो मन्द | १८९ |
| महिलासहस्स | २३९ |
| महीयते माधव | १९२ |
| माए घरोव | ३० |
| माकन्द मन्दोऽसि | २०० |
| मात्सर्यमुत्सार्य | ३६१ |
| मुखं विकसित | ७२ |
| मुग्धे मुग्धतयैव | २४५ |
| मुनिर्जयति योगी-न्द्रो | १६ |
| **य** | |
| यः कौमारहरः | १३ |
| यस्य मित्राणि | २४३ |
| यस्यासुहृत्कृत | २४९ |
| येषां दोर्बल | २७० |
| **र** | |
| रइकेलीहिअ | २६४ |
| रत्तीसु चन्द | २५३ |
| राकासुधाकर | २१२ |
| राधा न चाहं | १९९ |
| रामोऽसौ भुवनेषु | २७३ |
| रुधिरविसरप्रसा | २४७ |
| रे रे कापुरुषा | २०७ |

